अन्यं च दानि अद्भुतं शरीरच्छाया न दृश्यते तेषां ।
तेषां च सन्धिशब्दो संक्रमतां न श्रुयते कश्चित् ॥
निःसंशयं उपगता पुत्रवरं नरवराधिप द्रष्टुं ।
अभिनन्दं अभिवादय पश्याहि अयोनिजां देवां ॥
वरमाल्यगन्धहस्तां लीलाचेष्टां मनोरमशरीरां ।
दीप्यन्तां इव शिरीये असंशयं प्रवरमरुतस्ते ॥
शुद्धोदनो निशाम्य वचनमिदं हर्षकम्पितशरीरो ।
अब्रवीत् भणाहि सुवचनं प्रविशन्तु निवेशन[110b]मुदारं ॥
किंकारणं न एदृशा प्राकृतपुरुषाण भोन्ति आकारा ।
न पि मानुषाण ईदृशी ऋद्धि भवति यादृशीं भणासि ॥
अथ सो प्रतिहाररक्षो उपगम्य महेश्वरां इदमवोचत् ।
श्रद्धो कृतांजलिपुटो प्रणम्य हृष्टो मुदितचित्तो ॥
अभिनन्दते नरपतिः प्रविशन्तु भवन्तो दिव्यपुरकल्पं ।
राजवृषभस्य वेश्मं नराधिपतिना अनुज्ञाताः ॥
एतं श्रुत्वा वचनं अष्टसहस्रं महेश्वरवराणां ।
प्रविशन्ति पार्थिवकुलं अनिहतकुलवंशमुख्यस्य ॥
शुद्धोदनो पि राजा महेश्वरां दूरतो निशामेत्वा ।
प्रत्युत्थितो सपरिवारो गौरवबलभावितशरीरो ॥
तां अवच राजवृषभो स्वागतमनुरागं भवि सर्वेषां ।
प्रीता स्म दर्शनेन प्रशमदमनयेन च भवतां ॥

1. B ayaṁ ca° C anyaṁ vadâni adbhu ° rîraṁ châyâ° BC °çyate | teshâṁ sandhi°. — 2. BC sandhi ° kramantâṁ na ° çcit niḥ saṁ°. — 3. C °saṁçayaṁ drupaga° B °dhipau drashṭuṁ abhi°. — 4. C °nande abhivâdayaṁ paçyâ° B °jâṁ dodevâṁ | . — 5. C °mâlyaṁgandha° B °rîrâṁ dî° C °rîrâṁ dîpya°.

6. C dîpyantâm iva çayaṁ° B dîpyantâm iva° BC °çayaṁ vara° C °rutâṁ çuddho° B °rute | çuddho°. — 7. C °rshakaṁpita° BC °rîro abra°. — 8. BC °t bhaṇa suca ° viçântu nive°. — 9. C °raṇaṁ sacet sadṛçâ B °ṇaṁ na eddṛçâ prâ° C °shâṇa bhavanti â°. — 10. BC nâpi mâ° B °shâṇâm îdṛçî vidhi bhava° C °shâṇâṁ îdṛ vidhi bhava° BC °yâdṛçî bhaṇasi || a°.

11. C °hâralakshe u ° çvaraṁ idam a°. — 12. BC °taṁjaliṁpuṭo ° citto abhi°. — 13. BC °pati pravi° B °viçante bhavatu devapura° C °viçanto bhavati devapurakalpa râja°. — 14. C °patino anu°. — 15. BC evaṁ çru ° canaṁ ashṭa ° çvarâṇa(C °ṇâṁ) varâṇâṁ pra°. 16. BC °viçaṁti(C °çanti | ) râjakulaṁ. — 17. B suddhoda° C °çâmyatvâ pra° B °metvâ pra°. — 19. B tam avaca° C taṁ avaca° BC °bhava sarveshâṁ pri°. — 20. C prîtâ-smada ° çamadesahareṇa ca° B °çamadaçaha° BC °bhavantânâṁ | .

एणि वृत्तप्रतिष्ठितो कोश न्यग्रोध ते दश ॥
मृदुजाला च प्रतिपूर्णा एका ऊर्ध्वाग्रपंचमाः ।
श्लक्ष्णच्छवि हंसान्तरा च उत्सदा च ते दश ॥
रसं सुवर्णसीहो च समा शुक्ला च पंचमा ।
समा प्रभूता ब्रह्मा च नीलगोपक्ष ते दश ।
ऊर्णा उष्णीषशीर्षं च नाथो द्वात्रिंशलक्षणो ॥

दक्षिणापथे अपरो ब्राह्मणकुमारो [111ᵃ] उज्जेनीयं ब्राह्मणमहाशालस्य पुत्रो श्यामो असितो वर्णेन पण्डितो निपुणो मेधावी । तेन गुरुकुलातो वेदा च मन्त्रा च शास्त्रा च अधीता ॥ सो दानि अधीतवेदाध्ययनो गृहातो निष्क्रम्य विन्ध्यपर्वतं गत्वा ऋषिप्रव्रज्यां प्रव्रजितो मूलफलपत्रभक्षो उञ्छवृत्तिः ॥ तेन तहिं विन्ध्यपर्वते आश्रमं मापयित्वा वाहितकेन मार्गेण युक्तेन घटन्तेन व्यायमन्तेन चत्वारि ध्यानानि निष्पादितानि पंचाभिज्ञा च साक्षात्कृता ॥ सो चतुर्ध्यानलाभी पंचाभिज्ञो बहुश्रुतो वेदपारगो असितो ऋषि सर्वत्र अभिज्ञातो परिज्ञातो । असितो ऋषि दिवि परिघुष्टो अन्तरीक्षचरो महर्द्धिको च महानुभावो पंचमात्रेहि शिष्यशतेहि सार्धं नालकेन च तहिं आश्रमे प्रतिवसति ॥ सो तं बोधिसत्वस्य जातमात्रस्य पृथिवीचालं च दृष्ट्वा महान्तं च अवभासं दृष्ट्वा मनोज्ञानि च अमानुष्याणि च गीतवाद्यशब्दानि श्रुत्वा दिव्यानि पुष्पवर्षाणि पतन्तानि दृष्ट्वा देवकोटीसहस्राणि च अप्सरसहस्राणि च दिव्यमाल्यगन्धहस्तानि खगपथेन पूर्वामुखमभिपतन्तानि अन्यानि च अद्भुतशतानि दृष्ट्वा उद्धर्षितरोमसंजातो ॥ किमिदं अद्य जंबुद्वीपस्य । इयं अद्य कस्यानुभावेन पृथिवी च

1. BC eṇi (B eṇi) vṛttapa(C *hava)tishṭhito* C *to kroçaṃ nya* *daçaḥ eṇi* B *daça eṇi*. — 2. C *dujālī ca paripūrṇṇa ekā urddhaṃ ca pañcamāḥ | B *jālī ca pratipanno ekā ūrddhaṃgapaṃ*. — 3. BC çlakshṇāyi(C *ṇ)tā ca(C *va) haṃsaka naddha to(C *ddha) daçamaṃ(C *radamaṃ)savarṇṇa*. — 4. C *raṃsaṃsiṃho caṃdramā ça* B *çukrā ca pañcamā ramā*. — 5. BC *bhūtabra* C *hmā va nī* BC *gopakshmaṇo da* B *daçaḥ |.
6. BC ūrṇṇo u* B *ushṇishashīrddhaṃ ca nā* C *shayaśīrṇḍhā(?) ca nā* B *dvātriçalakshaṇo da* C *çallakshaṇadhara da*. — 7. B *hmaṇo ku* C *tro syāmo a* BC *puno medhāvī te*. — 8. BC *kule(C *li)to ve* B *çāstrato adhita |. — 9. C *dhyavanā gṛi* B *gṛihato* B *rvata ga* *ksho uchavṛittiṃ | C *ksho uccavṛittiḥ |. — 10. C tena gatiṃ vi* C *çrama mā* B *çrame mā* C *ṇa pūjyanto* C *pañca cabhi* *sākshikṛito | B *tkṛito |.
12. B *shi samnatena a* C *to asito ṛishi* B *rijñāto mi*. — 13. BC *divi righushṭa(B *shṭho) anta* C *rikshe carā ma*. — 15. BC *amanushyā* C *koṭi saha* B *divyamālya* C *khagathena pūrvābhimukha* B *mukha abhipa* BC *uddharshi* *jāto kiṃ i*.
19¹. B kim idaṃ kim idam adya* C *dya jambudvī*. — 19². B imaṃ adya* C ima ayaṃ kasyā*.

कम्पति अद्भुतशतानि च प्रादुर्भूतानि ॥ सो दानि ऋषिः दिव्येन चक्षुषा सर्वजंबुद्वीपं प्रत्यवेक्षति कस्य इमं तेजानुभावं एदृशं मनोज्ञानि च गीतवादितशब्दा निश्चरन्ति दिव्यानि तूर्यशतानि श्रूयन्ति देवाश्च देवकन्याश्च दृश्यन्ति दिव्यानि च पुष्पवर्षाणि प्रवर्षन्ति चन्द्रादित्यसहस्राणि च दृश्यन्ति नरकसहस्रेषु नार्चिः प्रज्वलति । एकान्तसुखसमर्पिता च सत्त्वा संजाता ॥ सो तथा दिव्येन चक्षुषा अद्राक्षीत् ॥ पुरस्मिमेन कपिलवस्तुस्मिं नगरे राज्ञो शुद्धोदनस्य पुत्रो जातो कृतपुण्यो महेशाख्यो महानुभावो यस्य तेजानुभावेन जम्बुद्वीपे एवंरूपाणि अद्भुतशतानि प्रादुर्भूतानि । देशकालेन कुमारं द्रक्ष्यामि ॥ सो दानि कालं च समयं च ज्ञात्वा कुमारस्य दर्शनाय संबहुलेहि शिष्येहि संपरिवृतो वैहायसेन ऋद्धिये कपिलवस्तुमनुप्राप्तो राज्ञो शुद्धोदनस्य अन्तःपुरद्वारे ॥ अमात्या च प्रतिहारो च ऋ[111ᵇ]षिं दृष्ट्वा प्रत्युत्थिता । किमाज्ञापेति भगवां केनार्थं किमागमनप्रयोजनं ॥ ऋषि आह ॥ शुद्धोदनस्य प्रतिहारेय असितो ऋषि दर्शनकामो ॥ प्रतिहारेय राज्ञो निवेदितं ॥ असितो ऋषि दर्शनकामः ॥ राजा शुद्धोदनो असितस्य ऋषिस्य आगमनं श्रुत्वा अभिज्ञातस्य विश्रुतस्य महाभागस्य प्रतिहाररक्षमाह ॥ प्रविशतु ऋषीति ॥ प्रतिहाररक्षेण निर्धाविय ऋषिस्य निवेदितं । प्रविशतु भवां ॥

ऋषि प्रविष्टो । राजा सान्तःपुरो ऋषिं दृष्ट्वा प्रत्युत्थितो ॥ अभिवादेमि भगवन्तं निषीदतु भगवां ॥ ऋषि राज्ञो जयेन वर्धापयित्वा निषण्णो ॥ राजा पृच्छति ॥ किं भगवं आगमनप्रयोजनं ॥ ऋषि आह ॥ कुमारन्तो द्रष्टुकामो ॥ तस्मिंश्च काले कुमारो अन्यतरं शान्तसमाधिं समापन्नो ॥ तेषामेतदभवत् । प्रसुप्तो कुमारो ॥ ततो राजा ऋषिं आह ॥ भगवं आगमेहि मुहूर्तं कुमारो संप्रति ओसुप्तो ॥ ऋषि आह ॥ महाराज न कुमारो ओसोपति ॥ राजा कुमारस्य

1. C °sarvaṁ jambudvīpaṁ pra° C °mukhāvanto e° B °vaṁ | edṛi° C °tūryyaçabdāni çru° BC °vakanyāçca ° nti devyāni° B °sahatī candrā° B °çyanti karaka° C °nāgninām pra°. — 5¹. BC °satvānāṁ saṁ°. — 5². BC °kshusho adrā°.

8¹. BC °kalyānah | . — 8². B °çishyehi saṁ° BC °vṛito | vai° C °sena hiriye ka° B °sena ṛdhiye ka° B °rājñe çuddho° B °drāre a°. — 10. C °mātya ca pra° BC °tthitā ki°.

11¹. B kim ājñāpeti | bha° C °jñāpeti bhagavān kenā° C °m āgata pra°. — 11². BC °retha | a° BC °kāmo pra°. — 12². C °nakāmo | rā° B °kāmah rā°. — 13. B °hārarakaha°. — 14¹. C °viçantu ṛishiñ pra°. — 15. BC °ditaṁ pra° C °bhavān ṛishi pra° B °vāṁ ṛi°.

16¹. BC °tthito a°. — 16². B °vādemi bhagavāñ nishi° C °shidu bha°. — 17¹. B °rddhāpitvā nishaṇṇā | C °nishaṇṇo rā°. — 18¹. BC °bhagavān āgama° C °naprāyoja°. — 18². C °kāmas tasmiñ°. — 19¹. C tasmiñ ca kā ° çāntaṁ samā° BC °panno te°. — 19². C teshām evaṁ eta°. — 19³. BC °māro ta°. — 20¹. BC °rājā ṛishi ā°. — 20². BC bhagavāñ ā ° samprasupto ṛi°.

21¹. C °ssayati rā°. — 21². B rājakumā ° raṁ jāgrataṁ | C °raṁ jāgrataṁ |.

मूलं चक्षीनो पश्यति च कुमारं चार्थितं ॥ राजा ऋषिस्य विज्ञप्तो । महाभागो ऋषिः ॥ राज्ञा आगत्तं । उपनामेथ कुमारं ऋषिस्य ॥ कुमारो मूच्छायां अजिनप्रवेणियं गृह्य ऋषिस्य उपनामितो ॥ ऋषि कुमारस्य दूरतो एव कायेन महापुरुषलक्षणानि दृष्ट्वा अंजलिं मूर्धनि कृत्वा प्रत्युपस्थितो ॥ नमस्कृत्वा कुमारो ऋषिणा प्रतिगृहीतो ॥ ऋषिः कुमारस्य द्वात्रिंशन्महापुरुषलक्षणानि प्रत्यवेक्षति ॥

ऋषिश्च तत्र राजकुले कुमारस्य चक्रवर्तिशब्दं शृणोति । नैमित्तिकेहि कुमारो व्याकृतः राजा चक्रवर्ती भविष्यति ॥ ऋषिस्य भवति ॥ नायं चक्रवर्ती भविष्यति । बुद्धो अयं लोके भविष्यति ॥ ऋषिस्तानि लक्षणानि दृष्ट्वा न एदृशानि राज्ञो चक्रवर्तिस्य लक्षणानि बुद्धानामेदृशानि लक्षणानि भवन्ति । बुद्धो अयं लोके भविष्यति । अहं च नचिरेण कालेन कालक्रियां करिष्यामि । इदं च रत्नं न द्रक्ष्यामि । इमस्य धर्मं न श्रोष्यामि गणोत्तमं च न द्रक्ष्यामि ॥ ऋषि प्ररोदी अश्रूणि च प्रवर्तयति ॥ राजा शुद्धोदनो असितं ऋषिं रुदन्तं दृष्ट्वा सान्तःपुरो उद्विग्नो जातो ॥ किं भगवन्तं कुमारं दृष्ट्वा रोदसि । मा कुमारस्य काचिद्विपत्तिं पश्यसि ॥ कुमारस्य जातमात्रस्य पृथिवी कम्पिता षड्विकारं अवभासः लोके प्रादुर्भूतः देवशतेहि पूजितो दिव्यानि कुसुमवर्षाणि दिव्यानि च तूर्यसहस्राणि संप्रवादितानि शब्दा निश्चरेन्सुः ॥ कुमारे जातमात्रे कपिलवस्तुस्मिं पंच कुमारशतानि जातानि पंच कन्याशतानि पंच दास[1.12*]शतानि पंच दासीशतानि संजातानि पंच हस्तिपोतशतानि पंच अश्वशतानि पंच निधानशतानि प्रादुर्भूतानि पंचहि राजशतेहि जयवृद्धीये प्रेषिताश्चो अन्यानि पि च आश्चर्याद्भुतानि । भगवां च कुमारं दृष्ट्वा रोदिति । एवं मे भगवं आख्याहि मा कुमारस्य कांचिद्विपत्तिं पश्यसि ॥ ऋषिराह ॥ महाराज

1[1]. C °smitaḥ ma° B °smito ma°. — 1[2]. BC °shiḥ rā°. — 2[1]. BC °tam̃ upa°. — 2[2]. B C °sūkshmehi ajita(C °tra)praveçiyam̃°. — 3. BC °to evam̃ kā° B °mūrddhnane kṛi° C °mūrddhne kṛi° BC °sthito na°. — 4. BC °māraṁ ṛi° B °hīto ṛi°. — 5. C ṛishi kumā° trim̃çanmahā°.

6[1]. B °vartiçabdam̃°. — 6[2]. B nemitti° C °vyākṛito rājā; cakra° shyati buddho a°. — 7[1]. B °ti nāyam̃°. — 8[1]. C ṛishiḥ tāni° C °shṭvānnidṛiçā° B °vartitasya la° C °rtitasya le° edṛiçāni bhava°.

11[1]. B imañsya dha° C imam̃ ca dharma na çro°. — 11[2]. BC °açrūṇi ca°. — 12. C °ntaḥpure u° B °jāto kim̃°. — 13[1]. C °gavan kumā° B °dasi mā° C °dasi ma°. — 13[2]. B mā | ku° C ma ku° BC °sya kācid vi°. — 13[3]. C kumāro jātasya tasya pṛithivī kam̃pitā ° obhāso loke prādurbhāvaḥ deva ° ditāni gītavāditaçabdā° BC °çcaretsuḥ ku°.

16. C kumāro jā° kumāraçatāni° BC °ca kam̃nyāçatāni pañca dā° C °hastiçatāni pota° B °tehi jāyevṛiddhiye bodhaye preshitā ca anyān api ca ā° C °tehi jātāye vṛiddhibodhaye preshitāto anyān api ca ā° BC °dbhutāni bha°. — 19[1]. C °gavām̃ ca ku° BC °rodati ||. — 19[2]. B °gavām̃ ā° C °gavān ākhyā° BC °rasya kim̃ci ° çyati || — 20[1]. C °na kāñcid vi°.

कुमारस्य न कांचिद्विपत्तिं पश्यामि । एवंरूपाणां महाराज महापुरुषाणां कदाचित्कर्हिचिल्लोके प्रादुर्भावो भवति । अयं महापुरुषो प्रादुर्भूतः बुद्धो लोके भविष्यति । अहं च बुद्धो न द्रक्ष्यामि । धर्मं च देशयिष्यति औपशमिकं चार्यं च निर्वाणिकं च तं च न श्रोष्यामि । गणवरं चास्य न द्रक्ष्यामि बुद्धविकुर्वितानि न द्रक्ष्यामि । तदेतां महाराज आत्मनो महाविपत्तिं दृष्ट्वा रोदामि ॥ ऋषिः बोधिसत्त्वं चतुर्हि कारणेहि एकांशेन व्याकरित्वा बुद्धो यं लोके भविष्यतीति प्रक्रान्तो ॥

नीवरणानि विजहित्व एकाग्रेण मनसा मम शृणोथ ।
यथा असितो परिदेवे उत्पन्ने शाक्यकुमारे ॥
असितो नाम महर्षिः अभूषि यो वसति विन्ध्यविषयस्मिं ।
नियतनिचयो महात्मा महाकपिलजटमांगरुहः ॥
आरण्यशास्त्रकुशलो ज्ञानी पंचान सो अभिज्ञान ।
कैलासशिखरवासी धनपतिरिव गुह्यकाधिपति ॥
सो वसति काननभूमिं मूलफलमकृष्टं कल्पां वृत्तिं ।
शिष्येण नालकेन सार्धं अन्येहि च बहुहि ॥
दशकुशलकर्मसेवी प्रशमदमरतो परे च ओवदति ।
देवगुणपारमिगतो ऋषिः परमशीलसंपन्नो ॥
अवभासो च सुविपुलो प्रीती लोकोत्तर असंमुह्यन्तो ।
सत्वा चैकान्तसुखी अभुन्सु पृथिवी च कम्पेसि ॥
सो तत्र संनिषण्णो पश्यति मन्दारवाणि कुसुमानि ।
धरणीतले पतितानि दिव्यानि च कल्पपुष्पाणि ॥

1. C °purushāṇāṃ°. — 2. C °durbhāvaḥ bu°. — 3¹. C °kshyāmu dha° B °kshyāni dha°. — 3². BC °shyati | au° B °cāryāni nirvā° C °cāryyā nirvā° BC °shyāmi ga°. — 4. BC gaṇavaraṃ° BC °buddhanikūrvitā°. — 5¹. C °tmano vipa°. — 5². BC °ṇehi | ekāṃ° B °bhavishyaṃtīti pra°.

7. B nivara° BC °hitvā e°. — 8. C asito °tpanna çākyaṃ kumāro sai° B °çākyaku°. — 9. BC °nāma abhū° C °sti vindhyavi° yasmiṃ ni° C °shayasmiṃ ni°. — 10. C nicayalayo ma° B niyataçayo° pilavasta utta° C °ṭāmāṅgaruho ā° B °ruhaḥ ā°.

11. B °ṇyaçāstraku° BC °jñāna kai°. — 12. BC °lāçaçikharavāsī dhanapater iva°. — 13. B °kṛishṭa drāñcha vṛi° C °kṛishṭe occavṛi°. — 14. BC so çishye° B °ṛddhaṃ anyehi° BC °bahūni daça°. — 15. B °dame rato°.

16. BC °ṛishi para° C °çīlasampanno o° B °nno obhā°. — 17. C obhāse ca° B °so ca vipulo° BC °prīti lokottarā a° C °samudya° BC °hyanto satvā°. — 18. C °kānte sukham abhutsuḥ pṛi° B °kānte sukha abhunsuḥ pṛi° C °vī ca kampesu so ta°. — 19. BC °tatra nisharṇṇo pa° B °ravāṇi ku° BC °ṇāni dha°. — 20. BC °ṇītale° C °vyāni kalpa°.

पश्यति असितो च नभे आभरणशतानि विप्रकीर्णानि ।
सहसा प्रधावितानां गगनतले देवकन्यानां ॥
मधुरं च किंनरीणां शृणोति गीतस्वरं गिरिगुहासु ।
गिरिनदियो कूलवहां भ्रमयति कुसुमाकुलजलौघां ॥
अवभासं पि च विपुलं समन्ततो पश्यति दशदिशासु ।
सहसा समुत्पतन्तं रवितरुणमरीचिसंकाशं ॥
एतानि च अन्यानि च बहूनि आश्चर्यकानि दृष्टान ।
उद्धर्षितरोमकूपो असितो चिन्तामनो आसि ॥
किन्नु खु मही प्रचलिता गगनतले दुन्दुभिनो च नदन्ति ।
ओभासितो च [112b] लोको प्रवर्षति च पुष्पवर्षाणि ॥
न विभान्ति चन्द्रसूर्या नगगणश्चो क्षुभ्यते असिततोयो ।
यक्षोत्तरीयपटला दृश्यन्ति कुसुमाकुलजलौघा ॥
सर्वे चिमे द्रुमवरा अकालकुसुमेहि .... च्छादिता ।
अद्य फलकुसुमभरिता सुरभी गन्धा प्रवायन्ति ॥
न च प्रज्वलते अग्निः निरयसहस्रेषु अद्य दिवसेन ।
न च वेदयन्ति दुःखं लोकान्तरिका विनयमाना ॥
न चापि क्षुधापिपासा यथा पुरे जायते शरीरस्मिं ।
हृदयं च मे प्रमुदितं किन्नु खलु भविष्यति अद्य ॥
अतिबलमुदीर्णहासा किं तु खलु पुरस्तिमे दिशाभागे ।
धावन्ति देवकन्या चन्दनचूर्णं गृहेत्वान ॥

1. BC paçyati ca asita nâmâ(C °ma â)bha° B °bharaṇâça° BC °tâni ca praki°. — 2. C sahasâ pra° C °gagaṇatale B °gagane tale° BC °vakanyânâṁ ma°. — 3. C °ca kinnari° BC °tasvarânigiguhâsu giriṇa°. — 4. B °nadiyo kula° C °nadikalava° BC °hâṁ gamyati | ku-su ° lajâloghâṁ o°. — 5. BC °bhâsaṁ ca vi° C °pula sama° BC °çyati | da° B °çâsi saha°.
6. B °tpataṁti ravi°. — 7. BC °açcâ u°. — 8. BC uddhaṣitaro° C °to cittâmano°. — 9. BC kin (C kiṁ) tu khalu mahi° C °pracaritâ gagaṇatale dundubhi nandati o° B °ndubhi nandanti o°. — 10. C obhâsato ca loke ca varsha° B °ko ca varsha° BC °rshati pushpa°.
11. B navaṁ yatiṁ candrasûryo la° C naga patiṁ candrasûryyâ lava° BC °kaluddya asitatoyo ghatta° L °kaluddhya asitota(ou te?) podya°. — 12. BC ghottari ° çyanti | ku° B °lajaloghâ sarve°. — 13. B °rve vise (?) dru° C sarve ca me drumavalâ akâraku°. — 14. BC °sumabhârabhari° C °rito surabhi gandhâ°. — 15. C °hasre dya diva° BC °vase na ca°.
16. C °duḥkhâṁ lo° BC °rikâ ca vinayamâna câpi kshu°. — 17. C °jâyate yeri° BC °riresmiṁ hṛi°. — 18. BC °saṁ ca se pra ° nu khalu bhavi° C °ti | adya ati°. — 19. B atibale udîrṇa° C atibale udîrṇa ° diçabhâge | .

को नु खलु महानुभावो उत्पन्नो अद्य जंबुद्वीपस्मिं ।
कस्य यशेन यशवतो अयमेदृशको महाभावो ॥
तहिमेदृशं निमित्तं लोकस्मिं यस्य कस्यचिद्भोति ।
बुद्धानामुत्पादे एदृशका भोन्ति आकाराः ॥
पृथिवीय पतन्तानां शृणोति आकाशे अमरसंघानां ।
उत्पन्नो लोकनाथो बुद्धो होहिष्यति अनेयो ॥
सो दानि प्रमुदितमनो गगनतले शुणिय देवसंघानां ।
अद्य नरवीरगर्भो बुद्धो लोकस्मिं उत्पन्नो ॥
सो सर्वं जम्बुद्वीपं ओलोकयि दिव्यलोचनेहि ऋषि ।
अद्दस शाक्यान कुले जातो शुद्धोदनसुतो यं ॥
तस्यापि एवं दृष्ट्वा जातो दिशासु बोधिय कौलीनो ।
तत्रैव बुद्धशब्दो चरति दृक्ष्यामि तं काले ॥
ते चापि कुठारिहस्ता कृष्णाजिनसुकृतउत्तरासंगा ।
वल्कलचीरांबरधरा आदाय फलोदकमागमि ॥
आकाशे निरालम्बे वायुपथे .... प्रकामि ऋषिः ।
ऋद्धिं संवर्णयित्वा क्षणेन आगमि कपिलवस्तुं ॥
हिमवन्तमूले अद्दर्शि नगरं रम्यं आदित्यबन्धुगुप्तं ।
दुर्धर्षं परशत्रुभिः तं च सुरनगरीयं त्रिदशान इव ।
देवानां प्रविशे ऋषि पुरं शाक्यदर्शनार्थाये ॥
सुसन्निभन्तं प्रविशे आपणापण्यकयप्रसक्तं पूर्णं ।

1. B kho nu kha° C °dvîpasmiṁ ka° B °smiṁ ka°. — 2. C °sya yaçe yaçava° BC °mahânubhâvo ‖ . — 3. B tahiṁ edṛi°. — 4. B °tpâdo edṛi° C °tpâdâ edṛiçaṁkâ bho°. — 5. BC atha vi(B °vîthi)ya pata ° glânâṁ a°.

6. C °tpaṇo lo° BC °ddho bodhishyati | aneyo so dâ°. — 7. C gagaṇatale ° saṁghânânâṁ | . — 8. BC °garbho(C °rbbho) durgo bu° C °buddho lokasmiṁ°. — 9. C °olokayâ di° B °lokayâ di° BC °nehi ‖ ‖ ṛishi(C °shir) a°. — 10. BC adya ashi çâkyânâṁ kule° B °suto | yan tasyâ° C °suto | yaṁ ta°.

11. BC °jâto paṁcasu bo° B °dhiya kulîno | C °dhiya kulîṁno | . — 12. C °kshyâmi naṁ kâ°. — 13. B °krishṇajina° C °krishṇâṁjina° BC °sukṛitaṁ u° C °saṁgo valka° B °saṁgâ valka°. — 14. C valkaravirâmbaradha° B °lavirâṁ° BC °lodakaṁ âgami | . — 15. BC °the prakrami ṛiddhiṁ saṁ°.

16. B °âgamo kapi°. — 17. C °mavantapâdamûle° B °vatapâdamûle addarçi° BC °adhugupta ṁ gupta du(C °dû)rddha°. — 18. C dûrddharshapara° BC °daçânâ(C °na)m iva devâ°. — 19. B °viçe dṛiçi ṛishi puraṁ ṛishi sakadarça° C °viçe edṛiçi ṛishiḥ antaḥpuraṁ ṛishi sakadarça°. — 20. BC susaṁnibha° B °âpaṇyapaṇyakrayaprasaptaṁ hṛi° C °prasuptaṁ hṛi°.

हृष्टजनेहि प्रमुदितहयगजरथपत्तिसंघेहि ॥
सो मनसा उपगच्छन्तो द्वारे प्रविष्टो शुद्धान्ते . . . . ।
शुद्धोदनस्य निलयं निलयं यथा देवराजस्य ॥
प्रासादहर्मियं तं गवाक्षवरशरणपंजरविशुद्धं ।
गिरिकूटं इव जनितं पश्यति गगने विरोचेन्तं ॥
तस्मिं विमानमुख्ये कूटागाराणि रजतश्रीमाणि ।
शोभन्ति कर्णिकायो कनकरजतार्कसंकाशा ॥
गर्भगृहाणि शुभानि च सन्ति विशदशंखहारकसंनिभा ।
विमलरविसंप्रकाशा द्योतन्ति कृता व च[113*]न्द्राणि ॥
दृश्यन्ति तत्र उभा वेरुलियस्य सुकृतेहि फलकेहि ।
गृहसूचीकावलीहि विद्युघनप्रभेकवर्णानि ॥
पश्यन्ति तोरणानि कनकमया चापविद्धानसदृशानि ।
विमलरविसंप्रकाशा द्योतन्ति कृता व चन्द्राणि ॥
क्वचित्क्वचित्कालमेघसदृशसमदा पि भुवन्ति विय तोयं ।
क्वचिन् निश्रितार्कसदृशा सतारका विचरन्ति क्वचिन् ॥
मार्जारपोतका पि च क्वचित्क्वचित्सहसावपतन्ति तहिं ।
वसन्ति च पारेवतेहि क्वचित्क्वचित्संपतन्तेहि ॥
मधुरं च पंजरगता क्वचित्क्वचित्कोकिला निकूजन्ति ।
शुकसारिका क्वचित्क्वचिदाभरणनिद्रार्तविभ्रान्ता ॥

1. C hṛishṭaṁja°. — 2. C sa mana° BC °pagato dvāre° C °ddhānto çuddho° B °ddhānte çu°. — 3. BC °jaya prā°. — 4. BC °daharmiye gavā° C °paṁjalaviha°. — 5. BC °kūṭam iva ga° C °ti gagaṇa vilokayantaṁ ta° B °centaṁ ta°.

6. C °mamukhe kūṭāgārāṇi rajatā çrīmān çobha° B °rajataçrīmāni ço°. — 7. BC °nti | karaṇi° C °ṇṇikoyo kutānanakutārvasaṁkāçā | . — 8. B °bhāni tasaṁti vishaçaṁkhahāraka-saṁnibhā nirmalara° C °bhāni taṁ santi vishasaṁkhahārakasaṁnibhā nirmalara°. — 9. B C °kāçā dyatiratha kṛitā° C °vaçcandrāṇi dṛi° B °va caṁdrāṇi dṛi°. — 10. B °çyanti | tatra candrabhāveralitayasya° C °çyanti | tatraivaṁ ubhā veḍulitayasya° C °phalehāṁ hi gṛi° B °phalakhihi gṛi°.

11. B gṛihastūpikāva° C gṛihastūlikāva° BC °rṇṇāni pa°. — 12. C °mayāni a° B °pui-jāla° C °jālāna° B °çāni vi° C °çāni mala°. — 13. BC °laratasaṁpra° nti ca kṛitā ca can-drāṇi(C °ni) | . — 14. BC kva(B ka)cit kālame° çasamayāni çri° yaṁ kva°. — 15. B °ni-çritāṁkasadṛi° C °niçritākhasadṛi° B °ranti | mā°.

16. B mājārapātakā pi ca kacit saha° C °rjālapo° ca kvacit saha° BC °hasā opatanti tahiṁ sa°. — 17. BC santehi ca° C °ca vahirgaṇehi° BC °çehi ca kva° B °padantehi ma°. — 18. C °raṁ paṁjalagatāh kvacit koki° B °tā kvacit koki°. — 19. B °kasārakāṁ kva-cit | ābha° C °kasāikāṁ kvacit | ābha° BC °bhrāntacittā ca°.

शुद्धं दशसु विदिशासु चतुरस्रं निर्मितं सुश्राविद्धं ।
दुर्धर्षितं अरीभिः सूत्रग्रहस्य समुपचीर्णं ॥
बहुविधरत्नसंचयाढ्यं अनेकविचित्रसंघातभूमियां ।
सीहो निषद्यति यिहं वसति च उदेन्तमादित्यं ॥
तं युग्ययानकविगतं चेटीविलासिकाहि च उपेतं ।
काषायकर्बुरवर्णा वर्षधरसमाकुलं प्रविशे ॥
प्रेष्यगतयानकविजितं आर्यजनसमाकुलं शुचिसुगन्धं ।
प्रविशि भवनदुवारं प्राप्तो अटितो न्यसंरोधं ॥
ओसरणे च भरिता अद्द्रि प्रमदा स्थितसंभ्रान्तेन ।
प्रगृहीतखड्गहस्ता यतिरिव प्रियदर्शनप्रलापा ॥
असितो चासौ व्यक्तो गम्भीरो सर्वशास्त्रसुविधिज्ञो ।
प्रतिहाररक्षनयोच निवेदये शाक्यराजस्य ॥
कालो स्मि विख्यातो भारद्वाजो इमस्मि गोत्रेण ।
जातो स्मि चार्य ति विषये सिखरे विन्ध्यस्मिं विहरामि ॥
साध्वार्य त्ति श्रुतधरो प्रतिश्रुणित्य प्रापये महीपतिनो ।
तद्वचनं अनवशेषं श्रुत्वा च प्रवेशयित्वा च ॥
प्रतिभाषितो प्रविष्टो सिंहहनुस्य स्वर्गसदृशनिलयं ।
इन्द्र इव नन्दनं गतो संकीर्णं अप्सरगणेहि ॥

1. BC çuddha daça vidi° C °turasranirmi° BC °taṁ suaviddham du°. — 2. B durddhaparyaṁ aribhiḥ | sūtre grahasyam upacīrṇaṁ bahu° C °aribhiḥ sutragrahasaṁpannasya upacīrṇaṁ bahu°. — 3. BC bahuviddha° C °cayayaṁ aneka° B °cayaṁ aneka ° saṅghatabhūmyāṁ si° C °saṅghatabhūmyāṁ siṁha nisha°. — 4. B siha nisha ° sītaṁ grasati ca udetum ādityaṁ taṁ° C °shṭaṁ bhugrasati ca uddatum āditya taṁ yu°. — 5. B °kaviga(?)-ta ceṭive° C °gata cetivailā° BC °sikāyehi ca°.

6. BC °yakaṁbudharaṁ varsha° B °rahavaṁsamā° C °rahavaraṁ sa° BC °viçe pra°. — 7. B preshyagata° C °naka salilaṁ āryyaja° B °ryyajanasa° C °laṁ sucisugandha pra° B °ndhaṁ pra°. — 8. C °ça bhuvana° B °dvārnaṁ pra° C °ṭilo 'nya° B °nyasarodhaṁ osa°. — 9. BC osakaṇe ca bharite a° L °bharitā a° C °adarçi pra° B °pramado sthitā saṁ° BC °sthitāḥ saṁbhrājantena | . — 10. C °khaḍgahastā° BC °darçanāpalāpini ssi°.

11. BC asitā ca vyaktā gambhīrā sa°jño prati°. — 12. BC °hārarakshe avo(C °vā)ca ni° C °vedaṁye çākyarājakā° B °jasya kā°. — 13. B kālosmiṁ vi° C kālosmiṁ vi ° rudvojo ha° BC °m asmiṁ gotreṇa jā°. — 14. B °smi ādyā ti vi° C °smi ādyā ti vishaye çikha° B °khaye vindhya°. — 15. BC °dhvārya(C °ryya) nti çru° tadharā pra° C °payet mahī° BC °tino ta°.

16. BC °d vacanam ana° BC °yitvā ca prati°. — 17. C °tibhaṣito° B °bhānito° C °shṭo sihahanu° BC °naya sutasadṛçaṁ virajaṁ indra°. — 18. BC indram iva nandanagataṁ | sam(C °taṁ saṁni)kīrṇṇam apsara ° hi vardhā°.

वर्धापये जयेन फलानि उपनामये असितनामो ।
प्रत्ययहेमि राजा स्वागतं भगवतो ति च अवोचत् ॥
अथ कनकमण्डपादं सुविचित्रकलण्टकं मणिविचित्रं ।
प्रज्ञप्तमासनवरं तत्र निषीदि अनुज्ञातो ॥
पर्यंकस्मिं निषण्णो पंचाभिज्ञो ऋषी महर्द्धिको ।
भक्तेन निमन्त्रेति स्वायं शुद्धोदनो राजा ॥
भक्तं कृतं प्रभूतं प्रतिगृह्ण तं अनामयन्तु ते भगवन् ।
इच्छाम ते कुमारं द्रष्टुं यदि ते अनुमतं स्यात ॥
स्वागतमनुरागतं ते सुप्तो तावत्प्रियदर्शि कुमारो ।
द्रक्ष्यसि त्वं प्रतिविबुद्धं विग्रहं इव जातरूपस्य ॥
प्रतिबुद्धं च कुमारं प्रवेशियं अष्टमंगलकृताये ।
उपनामयि मातृष्वा घनविवरकृतं च आदित्यं ॥
दृष्ट्वान तं ऋषिवरो कुण्डलमिव पट्टकम्बलान्यस्तं ।
अभ्युत्थहित्व त्वरितं अंकेन प्रतीच्छति कुमारं ॥
अङ्केन गृह्य निध्याय [113b] द्वात्रिंशल्लक्षणेषु उपागतं ।
तथा अनुव्यंजनेहि प्ररोदि आखण्डलसमानो ॥
तं अश्रुपूर्णनयनं राजा शुद्धोदनो इदमवोचत् ।
किं दानि ते कुमारं दृष्ट्वा दौर्मनस्यमुत्पन्नं ॥
यो तदहो जातमात्रो सप्त पदानुत्तरामुखो अगमि ।
तं तुवं ब्राह्मण दृष्ट्वा किं रोदिषि श्रोतुमिच्छामि ॥

1. C °jayena saphalâ | upa° B °lâni | upa° C °sita ṛishi nâ° B °nâmo pra°. — 2. BC °hemi | râ° C °vatonti ca° B °cat | kiṁ dâni te kumâraṁ atha°. — 3. BC °ṇḍapâdâ suvicitravici(C °travicitra)kalantakâḥ maṇivicitra(C °tra) prajña°. — 4. BC °jñaptu âsanava(B °na-dha)râ tatra nishide anujñâ pa°. — 5. C paryyaṅkasmiṁ° BC °nishaṇṇo paṁ° B °ṛishi ma° C °ṛishiḥ maha° BC °ṛddhiko bha°.

6. BC °treti | svâyaṁ çu° BC °râjâ bhota°. — 7. BC bhota kṛitaṁ° C °ṇu anâ° BC °yantu bhagavâu ichâ°. — 8. C °anugataṁ°. — 9. B °mugataṁ te suko tâva° C °râgatan te su° BC °darçane ku° C °kumâraṁ dra° B °mâro u.jasi tvaṁ. — 10. BC °grahaṁ iva jâ° °sya pra°.

11. B °buddhaṁ ca ku° BC °praveçiyaṁ°. — 12. C °mâtus [illegible] ghana° BC °taṁ ca âdityaṁ dṛi°. — 13. BC °shṭvâ ṛishivaraṁ kuṇḍa° C °patraṁ kambalaṁ nya° B °patra-kambala°. — 14. BC abhyutthahi° C °hitvaṁ tva° °prati kumâ°. — 15. B °gṛihya [illegible]° C °triṁçalaksha° BC °upagataṁ | anuvyaṁ°.

16. BC anuvyaṁ° B °hi prârodi sahaṇḍarasamâno taṁ a° C °ṇḍarasamâ°. — 17. BC °nayane râ° °ddhadanam idam a°. — 18. C °daumana° BC °nasya utpa°. — 19. B so tadaho mâtamâtraṁ sapta° C °dahaṁ jatamâtro sapta padâ anutta° BC °ttaramu° B °kho gami taṁ°. — 20. BC tam(C taṁ) bhuvaṁ bra° C °hmaṇe dṛi° B °shṭvâ rodi°.

यस्मिं तदहो जाते छत्रं च वीजनी च गृहेत्वान ।
अस्थान्तु अन्तरीक्षे दृष्ट्वा किं रोदिषि ब्रह्म ॥
यस्मिं तदहो जाते सर्वो ओभासितो अभूल्लोको ।
तं तुवं ब्राह्मण दृष्ट्वा किं रोदिषि श्रोतुमिच्छामि ॥
यस्मिं तदहो जाते उदुपाना दुवे नभे उद्वहेन्सुः ।
तं तुवं ब्राह्मण दृष्ट्वा किं रोदिषि श्रोतुमिच्छामि ॥
यस्मिं तदहो जाते देवा छत्रं नभस्मि धारेन्सुः ।
तं तुवं ब्राह्मण दृष्ट्वा किं रोदिषि श्रोतुमिच्छामि ॥
यस्मिं तदहो जाते देवा मन्दारवाणि प्रकिरेन्सुः ।
तं तुवं ब्राह्मण दृष्ट्वा किं रोदिषि श्रोतुमिच्छामि ॥
यस्मिं तदहो जाते अचेतना संप्रकम्पिता वसुधा ।
तं तुवं ब्राह्मण दृष्ट्वा किं रोदिषि श्रोतुमिच्छामि ॥
यस्मिं तदहो जाते सागरजलो क्षोभितो असिततोयो ।
तं तुवं ब्राह्मण दृष्ट्वा किं रोदिषि श्रोतुमिच्छामि ॥
यस्मिं तदहो जाते नभसि गता दुन्दुभियो वायन्ति ।
तं तुवं ब्राह्मण दृष्ट्वा किं रोदिषि श्रोतुमिच्छामि ॥
यस्मिं तदहो जाते पंच शता जाता शाक्यपुत्राणां ।
तं तुवं ब्राह्मण दृष्ट्वा किं रोदिषि श्रोतुमिच्छामि ॥
यस्मिं तदहो जाते पंच शता जाता शाक्यकन्यानां ।
तं तुवं ब्राह्मण दृष्ट्वा किं रोदिषि श्रोतुमिच्छामि ॥
यस्मिं तदहो जाते पंच शता जाता मह्य दासानां ।
तं तुवं ब्राह्मण दृष्ट्वा किं रोदिषि श्रोतुमिच्छामि ॥

1. B °vijani gra° C °vijani grahe° BC °tvāna a°. — 2. C asthātanḥ anta° B asthānanḥ anta° BC °kshe taṁ dṛi° °di brāhma |. — 3. C °sarve abhā° B °bhāsato abhā loko taṁ° C °lloke tan°. — 4. B taṁ | tu° C tan tu° brāhmaṇaṁ dṛi°. — 5. BC °pānā udvahetanḥ taṁ (C °tan tan)°.

6. BC taṁ (C tan) tuvaṁ dṛi°. — 7. C yasmiṁ jāta de° BC °traṁ nabhe dhārayetanḥ taṁ tu°. — 8. C °hmaṇaṁ dṛi°. — 9. C °kiretanḥ taṁ tu° B °kiretanḥ tuvaṁ°. — 10. B tuvaṁ° C °hmaṇaṁ dṛi°.

11. C °acetanā° BC °nā kampi° °dhā taṁ tu°. — 12. C °hmaṇaṁ dṛi°. — 13. B °to açitatoyo taṁ tu° C °sitatoyā taṁ°. — 14. C taṁ tuvo brāhmaṇaṁ dṛi°. — 15. C °nagasi° BC °gatāṁ du° °nti taṁ tu°.

16. C taṁ tuvo brāhmaṇaṁ dṛi°. — 17. BC °trāṇāṁ taṁ tu°. — 18. C °hmaṇo dṛi°. — 19. BC °çākyakanyānāṁ taṁ tu° — 20. C °hmaṇaṁ dṛi°.

21. BC yasmin tada° C °çatānāṁ mahyaṁ dā° B °sānāṁ taṁ tu°. — 22. C tan tuvo brāhmaṇaṁ dṛi°.

यस्मिं तदहो जाते पंच शता जाता मह्य दासीनां ।
तं तुवं ब्राह्मण दृष्ट्वा किं रोदिषि श्रोतुमिच्छामि ॥
यस्मिं तदहो जाते मह्य तुरगाणां पंच शता जाता ।
तं तुवं ब्राह्मण दृष्ट्वा किं रोदिषि श्रोतुमिच्छामि ॥
यस्मिं तदहो जाते पंच शता गजपोतानां जाता ।
तं तुवं ब्राह्मण दृष्ट्वा किं रोदिषि श्रोतुमिच्छामि ॥
यस्मिं तदहो जाते पंच निधिशता मुखानि दर्शेन्ति ।
तं तुवं ब्राह्मण दृष्ट्वा किं रोदिषि श्रोतुमिच्छामि ॥
यस्मिं तदहो जाते मण्डलिनो राजानो प्रणत मह्यं ।
तं तुवं ब्राह्मण दृष्ट्वा किं रोदिषि श्रोतुमिच्छामि ॥
यस्य राजाचार्या ब्राह्मण संदर्शनाय उपयान्ति ।
तं तुवं ब्राह्मण दृष्ट्वा किं रोदिषि श्रोतुमिच्छामि ॥
यं पश्यित्वा मनुजा भवन्ति हृष्टा सुखी उदग्रा च ।
तं तुवं ब्राह्मण दृष्ट्वा किं रो[114a]दिषि श्रोतुमिच्छामि ॥
अपनय ब्राह्मण शोकं भव मुदितमनो सुखं प्रतिलभाहि ।
एषो भविष्यति नृपो सप्तरतनवा पृथिविपालो ॥
एवं उक्ते ऋषी असितो सितसाश्रुकं रुदन्नवोचत् ।
अश्रूणि प्रमार्जन्तो . . . . . . आवृतो ऋषिभिः ॥
आनन्दकृतात्मसकलकरणार्कनिभो न सो पुरुषसिंहो ।
होहिति नरपति राजा होहिति शास्ता अनभिभूतो ॥
एषो हि वीरेहि कर्मेहि त्रैधातुकं लंघिया अनवशेषं ।

1. BC yasmin tada° C °çatâ mahya dâ°. — 2. C °hmaṇaṃ dṛi°. — 3. C °jâte pañca çatâ jâta mahyaṃ turagâṇâṃ taṃ tu° B °çatâ jâtâ taṃ tu°. — 4. C °vaṃ dṛishṭvâ brâhmaṇaṃ kiṃ ro°. — 5. B yasmin tada° BC °potâ jâtâ |.

6. BC °hmaṇaṃ dṛi°. — 7. C °jâtaṃ pañca° BC °çatâni mu° C °darçayanti taṃ tu°. — 8. C °vaṃ dṛishṭvâ brâhmaṇaṃ kiṃ ro°. — 9. C yasmiṃ jâte tadaho maṇḍa ° çatâ mahyaṃ |. — 10. BC °hmaṇaṃ dṛi° B °m ichati ||.

11. B °râjacaryâ brâ° BC °ṇa darça° C °upajâyanti taṃ tu° B °upajânti |. — 12. B °hmaṇe dṛi° C °hmaṇaṃ dṛi°. — 13. B °paçyiyâ ma° C °paçyitva ma° BC °bhavaṃ hṛishṭa sukhâ uda°. — 14. BC °hmaṇaṃ dṛi°. — 15. C vyupana ° hmaṇaṃ ço ° labdhâni bhavi° B °bhâhi bhavi°.

16. BC °shyati | nṛi° B °nṛipaṃ saptaratnaṃ pṛi° C °nṛipâ saptaratnavâ pṛi° BC °thivîpâlo ||. — 17. B evam ukte C evaṃmukte BC °asari asi° C °asito sito sitaṃ°. — 18. BC açruṇi ° ato vṛsi° B °bhiḥ nanda°. — 19. BC °ṇârkkanibhâ na so ° siṃho ho°. — 20. C hohiti na° B °pati na râjâ hohata çâ° C °jâ dehiti çâ°.

21. BC °ghiya anavaçeshaṃ çi°.

शिवममरं निरुपद्रवं अधिगमिष्यति उत्तमं धर्मं ॥
जीर्णो अहं गतवयो दहरो च नरोत्तमो अचिरजातो ।
कालगतो भविष्ये अहं यद् बोधिं प्राप्स्यति कुमारो ॥
बुद्धो अयं भविष्यति सर्वज्ञो सर्वधर्मवशवर्ती ।
स्वाख्यातधर्मविनये अहं च जीर्णो ति रोदामि ॥
नापि मह्यं मरणभयं कहिं तु जातो न म्रीयते मनुजो ।
बुद्धं तु अप्रतिसमं न द्रक्ष्यन्तेन रोदामि ॥
न खु मह्यं मरणभयं कहिं तु जातो न म्रीयते मनुजः ।
धर्मं तु ओपशमिकं न श्रोष्ये तेन रोदामि ॥
न खु मह्यं मरणभयं कहिं तु जातो न म्रीयते मर्त्यो ।
संघं गुणसागरमहं न द्रक्ष्यन्तेन रोदामि ॥
यो बुद्धो बोधयिष्यति प्रजामिमां मोहेहि चिरप्रसुप्तां ।
सो यं प्रादुर्भूतो अहन्तु जीर्णो ति रोदामि ॥
यो मुक्तो मोचयिष्यति प्रजामिमां रागबन्धनैर्बद्धां ।
सो यं प्रादुर्भूतो अहं तु जीर्णो ति रोदामि ॥
यो मुक्तो मोचयिष्यति प्रजामिमां मोहबन्धनैर्बद्धां ।
सो यं प्रादुर्भूतो अहन्तु जीर्णो ति रोदामि ॥
यो मुक्तो मोचयिष्यति प्रजामिमां रागद्वेषमोहेषु ।
सो यं प्रादुर्भूतो अहन्तु जीर्णो ति रोदामि ॥
यो आत्मना अरोगो भूत्वा अन्यां अपि काहिति अरोगां ।
सो यं प्रादुर्भूतो अहन्तु जीर्णो ति रोदामि ॥

1. C °vam amarañupatarāyaḥ madhigamiṣtim utta° B °nirupatarā ° gamastim utta°. — 2. BC °jāto kāla°. — 3. BC °gato bavoshyaṁ | aha bo° C °prāpya ku° BC °māro ayaṁ buddho bha°. — 4. BC °ṣyati | sa° C °çavatti svā° B °rti svā°. — 5. C °khyāta dhavina° BC °naye | ahaṁ°.

6. C °raṇaṁ bha° BC °bhayaṁ | kahin tu jāto na mriyate ° ja bu°. — 7. C buddhan tu a°. — 8. BC taṁ khu ma ° kahin to jāto na mriyate° C °manujo dha° B °jaḥ dha°. — 9. C dharma oupasami° B °maṁ opa° C °çroshyan tena ro°. — 10. BC °khu mahya ma° kahin tu jāto na mriyate° B °martiyā | C °martiyena saṁ°.

11. BC saṁghan tu sāga°. — 12. BC °māṁ bhagavati cira° B °suptā so yaṁ° C °suptaḥ so yaṁ°. — 13. B °rbhūtā | aha°. — 14. C °yishya prajā ° ndhanai baddhāṁ | . — 15. B °rbhūtaḥ ahaṁ jīrṇṇo° C °aham tu jīrṇṇo°.

16. C °yishyaṁ prajā° BC °mohaprabandha° C °ndhanaiḥ baddhāṁ | . — 17. C °ahaṁ tu jī°. — 18. B °yishyāmi prajā° C °yishyaṁ prajā ° rāgadveshamo°. — 19. C °ahaṁ tu jī°. — 20. BC ātmanā° B °anyampi kā° C °anya pi kā ° rogaṁ prādu° B °rogaṁ | .

21. B °rbhūta aha° C °rbhūtaḥ ahaṁ jī°.

यो आत्मना अशोको भूत्वा अन्यां अपि काहिति अशोकां ।
सो यं प्रादुर्भूतो अहन्तु जीर्णो ति रोदामि ॥
यो आत्मना विशल्यो भूत्वा अन्यां अपि काहिति विशल्यां ।
सो यं प्रादुर्भूतो अहन्तु जीर्णो ति रोदामि ॥
सुखिता इमे नरमरू काशिपुरे धर्मराजं द्रक्षन्ति ।
चक्रं प्रवर्तयन्तं अहन्तु जीर्णो ति रोदामि ॥
सुखिता इमे नरमरू द्रक्ष्यन्ते भगवरस्य मध्यगतं ।
अमृतं प्रतिभजमानं अहन्तु जीर्णो ति रोदामि ॥
व्याधि जरा च मरणं अंतरायकरा बहु मनुष्याणां ।
आश्चर्यका उत्पन्नो अहं अनाश्वस्तो रोदामि ॥
तथा ऋषि आलपित्वा बहूनि करुणायन्तो वेपित्वा ।
अनुशसि वाचाये नरव[114a]रदमकं तदा वृद्धा ॥
प्राचीनदिशं अवोच इहागतो नरुत्तमं गवेषन्तो ।
न हि सुलभो उत्पादो बुद्धान अदान्तदमकानां ॥
सो दानि बोधिसत्वं पञ्चशो अभिप्रदक्षिणं करित्वान ।
आमन्त्रये नरपतिं गच्छामि स्निग्धवती भवान्देतु ॥
बुद्धनिर्घोषं श्रुत्वा गच्छेसि विनायकोत्तमसकाशं ।
चर्येसि ब्रह्मचर्यं वचनपरिकरो च तस्य स्यात् ॥
साधु इति प्रतिश्रुत्वा अमितस्य नारदो इदं वचनं ।

1. B °çoka bhûtvâ | anyâhi pitikâhi açokâ so yam° C °tvâ anyâpi kâṁhiti açoko so yaṁ°. — 2. BC °rbhûto | a° C °ahaṁ tu ji°. — 3. B °çalyâṁ bhû° BC °anyâ pi kâṁhi(C °hi)ti viçalyâṁ so°. — 4. B so haṁ prâdurbhûtaḥ a° C °ahaṁ tu ji°. — 5. BC °imaṁ naramaruṁ kâ° B °dharmaṁ râjaṁ° BC °nti cakraṁ°.

6. BC °ntaṁ | aha° C °jîrṇo rodâ°. — 7. BC °maru drakshya° gataṁ a°. — 8. C °mṛitaṁ pritabha° BC °mânaṁ | a° C °ahaṁ tu ji°. — 9. BC °yakaraṁ bahû manu° B °nushyâm edṛi° C °nushyâ edṛi°. — 10. BC edriça(B °çaṁ)kaṁ âçvasto(B °çvanto) utpanno ahaṁ a° sto ti rodâmi | .

11. BC ṛishi(C °shiḥ) alipitvâ bahuni karuṇâni(B °ṇâti) santi ve° C °vepayitvâ° BC °tvâ a°. — 12. BC anuçâsa vâcâya na° C °damaṁkaṁ ta° shṭvâ prîtiṁ° B °shṭvâ prâ°. — 13. BC °naraṁ evaṁ ihâ(B °ha)gato naru(C naraṁ u)ttamaṁ° shanto na hi°. — 14. C °surabho u° ddhânâṁ adâ° B °ddhânâṁ adâ° BC °dântamadakânâṁ | . — 15. *Cette strophe et la suivante se suivent en ordre inverse dans les mss.* — BC °tvâna â°.

16. BC °ntraya naru° B °chhâmi | snigdhavatîm bhavân detu a° C °chhâmi sûçya(ou gdha)vati bhavânu detu a° A °gdhapatiṁ bha°. — 17. BC gaccheçi vinâ° ttamaṁ sakâçaṁ varayesi.°. — 18. C °tasyâçâ | . — 19. B sâdhvîti pra° C sâdhvîti pra° BC °canaṁ pra°.

प्रव्रजिय गतक्लेशो अनूपि अरहा विधुतक्लेशो ॥
कात्यायनस्य सगोत्रं नामेन नारदं जिनस्य सुतं ।
वनेवासिनं . . . . . वन्दिय परिनिर्वृतं स्थविरं ॥
तं निर्वृतं समशान्तं निरुपधिं सर्वोपधिक्षयविमुक्तं ।
सर्वप्रपञ्चातीतं वन्दिय परिनिर्वृतं स्थविरं ॥

चतुर्हि कारणेहि अमितेन बोधिसत्वो एकांशेन व्याकृतो बुद्धो भविष्यतीति ॥ कतमेहि चतुर्हि ॥ नखानां व्यक्ततायै सुविभक्ततायै गम्भीरतायै अनवद्यश्रेष्ठतायै ॥ बुद्धानां भगवतामशीत्यनुव्यंजनानि आसि ॥ बुद्धानां भगवतां तुङ्गनखा ताम्रनखा स्निग्धनखा वृत्तांगुली च चित्रांगुली च अनुपूर्वचित्रांगुली च । निर्ग्रन्थिशिरा च गूढशिरा च गूढगुल्फा घनसन्धी च अविषमसमपादा च । बुद्धा भगवन्तो प्रतिपूर्णव्यंजना च समन्तप्रभा च मृदुगात्रा च विसदगात्रा च अदीनगात्रा च । अनुसन्धिगात्रा च । सुसंहतगात्रा च । सुविभक्तांगप्रत्यंगा च । निखिलाद्युष्टशरीरा च । अपगततिलककालकगात्रा च पुनर्बुद्धा भगवन्तो तूलमृदुपाणयश्च । गम्भीरपाणिलेखा अनव्ययपाणिलेखा च अच्छिन्नपाणिलेखा च । अनुपूर्वपाणिलेखा च । बिम्बोष्ठा च । नात्यायतवदना च । मृदुतनुकरक्तजिह्वा च । गजगर्जितस्तनितस्वरा च । सुस्वरवरगिरा मञ्जुघोषा च बुद्धा भगवन्तो । नागविक्रान्तगामी च । ऋषभविक्रान्तगामी च । सिंहविक्रान्तगामी च । ह-

1. C *vrajitgaṇanjyeshṭo a* B *bhūshi | a* C *araho vi* B *vidhūta* BC *kleça kā*. — 2. BC kātyāyanagotro nāmnā nāla(C *ra)daṃ ji*. — 3. BC vanenaivasi vanda(C *naivāsi candrā)tha* C *rinirvṛitaṃ*. — 4. BC *ntaṃ niropadhiṃ upadhi* L *dhiṃ samopa*. — 5. C sarvaṃ prapañcātītaṃ* BC *ndatha | pa*.

6. B *ekāçena*. — 7[2]. B *ratāyaiḥ a* shṭatāyair buddhā*. — 8[1]. C *vatān açītya* BC *tvavyañja* C *ni āsi buddhā* B *si buddhā*. — 8[2]. BC *bhagavatāṃ(C *tā) aṅguṣṭ(C *gatā) vācatā mukhā aniçṭha* B *nakho varttaṃ vāguli ca ci* C *nakho ca vṛittaṃ vāṃgulīṃ ca vinigranthaçilā ca*. — 9. BC vinigranthaçirā ca(C *çilā ca) gūḍhasirā(C *çilā) ca gūḍhāṃ oledhū(C *ladhu)nakasatvānāṃ ca avi(B *abhi)prasasama(B *saya)pā* C *pādā ca bhaga*. — 10. BC *pratirūpaṃ vyañja(C vyañja)nā* B *ntavaharo ca mṛi* C *ntaharo ca mṛi*.

12[1]. BC anusantagātrā ca | . — 12[2]. BC susaṅghata(C *ta)gā*. — 12[3]. B *bhakahāṅgapra* C *bhakahāpratyaṅga gātrā ca | ni*. — 12[4]. BC nikllā a* C *shtagātrā ca eṣa*. — 13. BC *trā ca | punar boddho bha* C *pānayaçca | . — 14[1]. B *gnapāṇilekhā ca achinnapāṇilekhā ca | C *naspāṇilekhā anupā*. — 15[1]. C bimbo ca nābhyā*. — 15[2]. BC *dutanaka(C *taruka)lahujihvā ca | .

16[1]. C *nitasusvarā ca su*. — 16[2]. C *girimañjughoshaçca boddho bha* B *girimañjughoshā ca | bu * nto nā*. — 17[1]. C *kránto gā*. — 17[2]. C *kránto gā*. — 17[3]. C *kránto gā*. — 17[4]. C *abhipada*.

भिद्विषगामी च । उत्सदसमा च समन्तप्रासादिका च । शुचिसमाचारा च । परमशुचिविशुद्धलोमा च । वितिमिरसमन्तप्रभा च । बुद्धा भगवन्तो ऋजुगात्रा च । मृदुगात्रा च अनुपूर्वगात्रा च । चापोदरा चाक्षामपोदरा च । गम्भीरनाभी च । अभग्ननाभी च । अच्छिन्ननाभी च । अभिद्विषणावर्तनाभी च । परिमलजानुमण्डला च । बुद्धा भगवन्तो वर्तितदाठा च । तीक्ष्णदाठा च । अ[115ᵃ]भग्नदाठा च । अच्छिन्नदाठा च । अविषमदाठा च । तुंगनासा च । नात्यायतनासा च । असितनयना च । असितसितकमलसदृशनयना च । बुद्धा भगवन्तो असितभ्रू च स्निग्धलोमभ्रू च । अपरीत्तकर्णा च । अविषमकर्णा च । अपगतकर्णदोषा च । अनुपहता अनुपक्लिष्टा शान्तेन्द्रिया च उत्तमश्रेष्ठसंमितमुखललाटा च बुद्धा भगवन्तो ॥ असितकेशा च । संहितकेशा च । चित्रकेशा च । विवृत्तकेशा च अनभ्रकेशा च । अच्छिन्नकेशा च अपरुषकेशा च । स्निग्धकेशा च सुरभिकेशा च । वलितायकेशा सुशिरसो स्वस्तिकनन्द्यावर्तमुक्तिकश्रेष्ठसंनिकाशा च बुद्धानां भगवन्तानां केशा ॥

एतानि बुद्धस्य अमेयबुद्धिनो
काये अशीति अनुव्यंजनानि ।
येहि स्म कायो सततं अलंकृतो
देवातिदेवस्य नरोत्तमस्य ॥
प्रशस्तानि यस्य दुवे विंशति च
अशीतिं च काये अनुव्यंजनानि ।
समन्ता च व्यामप्रभा निश्चरेत्सु:

1[1]. C °ddharomâ ca vi°. — 2[2]. C buddho ṛju°. — 3[1]. BC châdo(C châto)ralâ cârukshâ abhagnodaro ca | . — 3[2]. C gambhîca abhida°. — 5[2]. C °nto vartitadâtâ ca ti° B °dâṭâ ca | . — 5[2]. B atîkshṇadâtâ ca | C °kshṇadâmtâ ca abha°.

6[1]. C abhayadantâ ca B °dâṭâ ca | . — 6[2]. C °nnadantâ ca B °dâtâ ca | . — 6[3]. C °madantâ ca B °dâṭâ ca | . — 6[4]. C °nâçâ ca. — 6[4]. BC nâyatyâyata° C °nâçâ ca. — 7[2]. BC ârcitacitakama°. — 7[4]. C buddho bha° sitalomâ ca sahitabhrumâ ca snilomabhruvaçca sniṅdhalomabhruva | apari° B °mabhramâ ca a°. — 8[3]. BC °parîtakarṇâ ca | . — 8[3]. B avishakarṇâ ca | . — 9[2]. C °hatâ anupakṛishṭâ° BC °çreshṭam ami(C °mṛi)tamu°. — 10[1]. BC ahasitake°. — 10[2]. BC cita(C vicitra)keçâ°.

11[1]. BC vitarka(C °rkka)keçâ ca abhâ°. — 12[2]. BC vellitâ° çâ suçira° kanandâvarttâmuttarîya çreshṭhasaññi(C °shṭasanni)bhâsâ ca | bu°. — 14. B °sya ameyabu° C °sya anekabuddhi° kâye kâye çîtî vyañja° B °kâye çîtim anu°.

16. BC °tamasya pra°. — 18. BC °triñçati ca a° nâni sama°. — 20. BC °çcaretsub | ka° C °tham nama vi° BC °vijñâ ji° C °prapride ça° B °side çala°.

कथं नाम विश्रू जिने न प्रसीदे ॥

शतगुणो समादाय यं पुण्यं सर्वसत्त्वनां ।
तेनास्य लक्षणवरं काये एकं निवर्तये ॥

राजा शुद्धोदनो सान्तःपुरो सार्धं कुमारेण उद्यानभूमिं निर्धावितो ॥ बोधिसत्वो उद्यानभूमीये अनुचंक्रमन्तो कृषिग्राममनुप्राप्तो ॥ तत्र पश्यति हलानि वहन्तानि । तेहि हलेहि दीर्घको च मंडूको च उत्क्षिप्ता । मंडूको गृहीतो भोजनार्थं । सो पि दीर्घको कुमारेण क्षिप्तो ॥ तं च बोधिसत्वेन दृष्टं । दृष्ट्वा च बोधिसत्वस्य महान्तं संवेगमुत्पन्नं ॥

कामं शरीरं समं तप्यति जीवितं च
प्राप्स्यामि यत्र अमृतं भवविप्रमोक्षं ।
वीर्यं मया हि प्रतिसंहरितुं न शक्यं
वेलाय व सलिलवेगं यथा सागरस्य ॥

जम्बुच्छायायां बोधिसत्वो निषण्णो पूर्वाह्णे परिवृत्ते दिवसकरे छाया बोधिसत्वं न जहाति । सवितर्कं सविचारं प्रथमं ध्यानमुपसंपद्य विहरति ॥ हिमवन्तपार्श्वतो पंच ऋषयो वैहायसेन विंध्यं गच्छन्ति । ते तत्र बोधिसत्वस्य न शक्नोन्ति उपरिगन्तुं ॥

वयमिह मणिवज्रकूटं गिरिं मेरुमभ्युद्गतं तिर्यगत्वर्थविस्तारिकं ।

2. C °dāya puṇyaṃ° BC °satvānāṃ B °nāṃ nāsya la°. — 3. BC °kāye niva° B °vartāto ekaṃ || C °rttaye | evaṃ çuddho°. — 4[1]. C °rddhaṃ umāre° C °rddhāvirddhāvito | B °vitā | . — 4[2]. BC °kramanto kṛ° C °grāma mupeāptaḥ ta°. — 5. C °çyati phalāni° B °ntāni tehi° C °ntāni phalo°.

6[1]. C °rghako ca maṃḍū ca u° B °maṃḍū ca u° BC °kṣipta dirghako maṃḍū°. — 6[2]. BC °nārtha so pi°. — 7[1]. BC °pto taṃ ca°. — 7[2]. C °tvena dṛṣṭvā B °dṛṣṭvaṃ dṛ°. — 7[3]. B °ṣṭvā bo° BC °ntaṃ vega° °anaṃ kāmaṃ°. — 9. B °sammatayati ji° C °samantaya ji° BC °psyāmi | a° B °kṣaṃ vī° C °kṣaṃ vīryya ma°.

11. C °maye hi pratisaṃhati | taṃ na ça° B °haritaṃ na ça° BC °çakya velā iva sali°. — 13. B jaṃbuchāyā° C jaṃbumulachāyā °satva ni° BC °ṣaṇṇo pū° C °vinirvṛtte di° tvaṃ ca ja°. — 14[1]. C °tarkka savicā° BC °thama dhyā° C °dhyānaṃ upasaṃ°. — 14[2]. BC °pārçve toyaṃ ca(C °va) ṛi° hāyena viṃdhyaṃ(C °vindhyaṃ) ga°. — 15. BC °çakunti u° °ntuṃ va°.

17. C vadāmiyaṃ anyakuṭi mirimeru° B vayam iva anyakuṭiṃ giriṃ meru °dgataṃ tenekaçotre sasthāvarā jaṃgama i..ha kāro° C °dgataṃ tenaikaçrotasaṃsthāvarā jaṃgam evaṃ saha°.

गज इव सहकारशाखाकुलां वृषवृन्दां प्रदारेत्य निर्धावित्वा नैकशः ॥
वयममरपुरे पि शक्रा गता देवगन्धर्वविमानानि चोर्ध्वं नभे निश्रिताः ।
वयमपि वनषण्डमासाद्य सीदाम भो क[115b]स्य लक्ष्मी निवर्तेति त्वदेवं ॥

देवा गाथां भाषन्ति ॥

नृपतिपतिकुलोदितो शाक्यराजात्मजो बालसूर्यप्रकाशो विदू ।
रविनयनप्रभातिरेकोहि वर्णप्रभैः लक्षणैर्भूषितांगो वरैः ॥
अयमिह वनमाश्रितो ध्यानचिन्तापरः ........... पार्थिवः ।
गुणशतसमकोटिसंवर्धितस्तस्य लक्ष्मी निवर्तेति त्वदेवं ॥

सो हि तिमिरान्धकारे प्रादुर्भूतो प्रदीपकः ।
अयं तं प्राप्स्यते धर्मं यज्जगं भासयिष्यति ॥
लोके क्लेशाभिसंतप्ते प्रादुर्भूतः महामुनिः ।
अयन्तं प्राप्स्यते धर्मं यज्जगं ह्लादयिष्यति ॥
शोकसागरकान्तारे यानश्रेष्ठमुपस्थितं ।
अयं तं प्राप्स्यते धर्मं यज्जगं तारयिष्यति ॥
महासंसारकान्तारे विप्रनष्टं जगत्त्रयं ।
अयं मार्गवरं श्रेष्ठं देशयिष्यति चक्षुमान् ॥
संसारचारके बद्धा दीर्घरात्रमियं प्रजा ।
अयं बन्धनमोक्षं च धर्मराजा करिष्यति ॥

1. B jaṅgama i..ha kāra° C jaṅgam evaṁ saha° BC °khākulaṁ vṛkshāṁ vṛindā(C °vṛiñdā) pradā° B °pradāloká ni° C °pradārontā nirddhāvayitvā nai° B °rddhāvitvā nekaçaḥ va°. — 2. C vayaṁm amapura° BC °purehva çaklā° BC °nibarvāveçanā(B °rane-çā)ni nibçritāḥ | . — 3. B °m api naṁsamāsādya C °m api samāsādya prasīdā° BC °kaçya ci lakshmī° C °vartteni çiddhiha° BC °laṁ de°. — 4. B deva gā° C devaṁ gā° BC °shati || . — 5. BC nṛipati yathā kulo° C °jo bārasuryapra° BC °kāço viṁ(C vi)durarvilara-gaḥ ravitaruṇapramupta(C °çaravaçakta)r ekavarṇṇa°.

6. B °r lakshitāṁ gauravaiḥ aya° C °kshitāṅgauravarṇṇo | aya°. — 7. BC °vanasha(C °kha)ṇḍam āçritya dhyā° B °paraḥ pārthi° C °paramapārthi° BC °vaḥ guṇa°. — 8. B °çataḥ samakoṭisamvarddhi°. — 9. B so ha timi° C so haṁ timi° BC °timilāndha.° pradīpe yaṁ āyataṁ pra°. — 10. B °rmaṁ | ya° C °jjaga avāsayi°.

11. C °saṁpapte prādubhūtaḥ°. — 12. C ayaṁ taṁ pra° °dharma yaj jataṁ hlā°. — 13. C °kāntore yā° BC °çreshṭam u°. — 14. BC ayaṁ pra°. — 15. B °jagad ayaṁ | C jagatayaṁ.

16. B ayaṁ ya mā° C ayaṁ ca mā° BC °çreshṭaṁ de°. — 17. C °rāke ba° °rgharāshtraṁ iyaṁ pra° B °rātraṁ iyaṁ pra°. — 18. B °kshaṁ dha°

आकृष्टे गूरमिच्छन्ति मल्लेषु कुशलं सदा ।
महार्थं अर्चयन्ते तु अन्नपानेन सुप्रियं ॥

राजा भक्तवेलायां कुमारं पृच्छति । कहिं कुमारो आहारं करिष्यति ॥ राज्ञो श्रुत्वा कंचुकीया च वर्षवरा च किराता च वामनका च समन्तेन प्रधाविता कुमारं मार्गन्ता ॥ कुमारो जम्बुच्छायायां ध्यायन्तो कंचुकीयेन दृष्टो परिवृत्ते दिवसकरे जम्बुच्छाया कुमारं न जहाति ॥ कंचुकीयो दृष्ट्वा विस्मितो महाभागो कुमारो यस्य अचेतना छाया न जहाति ॥ कंचुकीयेन राज्ञो शुद्धोदनस्य निवेदितं ॥

आवृत्ते तिमिरनुदस्य मण्डलस्मिं
ध्यामाभं शुभवरलक्षणाग्रधारिं ।
ध्यायन्तं गिरिमिव निश्चलं नरेन्द्र
सिद्धार्थं न जहति जम्बुच्छाया ॥

राजा कंचुकीयस्य श्रुत्वा येन कुमारस्तेनोपसंक्रमन्तो पश्यति जम्बुच्छायायान्तं । राजा विस्मितो आह ॥

हुताशनो वा गिरिमूर्धनस्मिं
शशीव नक्षत्रगणावकीर्णो ।
ह्लादेति गात्राणि निरीक्षमाणो
ध्यानस्थितो तैलप्रदीपकल्पो ॥

राजा आह ॥ महाभागो अयं यस्य अचेतनवन्ता पि छाया संनमन्ति ॥ राज्ञा शुद्धोदनेन बोधिसत्त्वस्य जम्बुच्छायागतस्य पादा वन्दिता ॥

1. BC °shṭe sūra° C °nti yuntesha kuvalayaṁ sahaḥ area° B °ahe ku lavaṁ sahā° L °çalaṁ sahā°. — 2. B sahāryaṁ | a° BC °arcayante ahu a°. — 3¹. BC °chati ku°. — 3². B °kiyā ca kukra ca varsha° BC °varā ca virā° B °rāgā ca vā° samantena pi dhāvi° BC °vito kumā° C °rganto ku° B °ntā ku°. — 5. BC °māraṁ jambu° drishṭvā pari° C °pari-nirvṛtte° C °chāyāṁ ku°.

7. BC °dhaṁ vyāhu°. — 8. BC vyāharanto(C °ntaṁ) timi° B °randayama° C °ra uda-yarkkamaṇḍalāmmiṁ dhāmāṁ dhuvarala° B °dhyāmāṁ bhavadhāvarala° BC °riṁ dhyā°. — 10. BC °niaṁparam iva bale(C °la) narendraṁ si° BC °jahāti jaṁbuchāyā | .

12. C rājāṁ kaṁ° BC °yāntaṁ ||. — 14. B °sano vā gi° BC °rddhanimmiṁ° B °ki-rṇamā hlā°.

16. C °gātrāni niri° BC °nirikshamāṇo° BC °tailadīpakalpo ||. — 18¹. C °tāvā sa-nama°. — 18². C rājā çu° BC °sya jaṁbucchā° C °chāyāṁ ga°.

राज्ञो शुद्धोदनस्य एतदभूषि ॥ यथा कुमारस्य ध्यानेषु ध्यानेषु चित्तं रमति सो खल्वेव असितस्य ऋषिस्य सत्यो व्याकरणो भविष्यति ॥ तेन राज्ञा कुमारस्य विस्तीर्णमन्तःपुरमुपस्थापितं यथा कुमारो गृहे अभिरमे[11 6ª]य ॥ राज्ञा कन्यानामर्थाय विविधं नानाप्रकारं अशोकभाण्डं कारापितं । कपिलवस्तुस्मिं च नगरे घोषणा कारापिता । सर्वाहि कन्याहि राजकं उद्यानं निर्धावितव्यं सर्वार्थसिद्धो कुमारो कन्यानामाभरणानि विश्राणेष्यति ॥ तहिं उद्याने राजायत्तीये कपिलवस्तुतो बहूनि कन्यासहस्राणि निर्धावितानि ॥ महानामस्य शाक्यस्य यशोधरा नाम धीता महतीये समृद्धीये निर्धाविता ह्रियायन्ती कुमारमल्लीना ॥ यदा भगवानभिनिष्क्रान्तो अनुत्तरां सम्यक्संबोधिमभिसंबुद्धो प्रवृत्तप्रवरधर्मचक्रो तं भिक्षुहि श्रुतं ॥ भगवतो कुमारभूतस्य उद्यानवनगतस्य कन्यानामाभरणानि विश्राणेन्तस्य यशोधरा ह्रियायन्ती कुमारस्य अल्लीना ॥ भिक्षु भगवन्तं पृच्छन्ति ॥ कथं भगवं यशोधरा भगवतो कुमारभूतस्य ह्रियायन्ती अल्लीना ॥ भगवानाह ॥ न हि भिक्षवः इदानीमेव यशोधरा मम ह्रियायन्ती अल्लीना । अन्यदापि एषा मम ह्रियायन्ती अल्लीना ॥ भिक्षू आहन्सुः ॥ अन्यदापि भगवं ॥ भगवानाह ॥ अन्यदापि भिक्षवो ॥

भूतपूर्वं भिक्षवो अतीतमध्वानं नगरे वाराणसी काशिजनपदे ब्राह्मणो कौशिकसगोत्रो । सो कामेषु आदीनवं दृष्ट्वा अनुहिमवन्तं ऋषिप्रव्रज्यां प्रव्रजितो ॥ तेन तहिं अनुहिमवन्ते गंगाकूले आश्रमं मापेत्वा पूर्वरात्रापररात्रं जागरिकायोगमनुयुक्तेन विहरन्तेन बाहितकेन मार्गेण चत्वारि ध्यानान्युत्पादितानि पंचाभिज्ञा सा-

1¹. C râjâ çu °nasyaitad a°. — 1². B °cittaṁ ramati | sâ khu° C °cittaṁ na ramati | sâ khu°. — 2. BC °pitaṁ | ya° B °mârâ gri° ramaya | C °ramayâ kaññyâ°. — 3. C °prakâre aço° B °kabhaṇḍaṁ kâ°. — 4. BC °pitâ sa°. — 5. BC °rvâhi kaññyâhi° C °râjakyaṁ u° BC °mâro kaññyâ° B °viçrâṇeshyati | .

6. C tahim udyâ° BC °stune bahûni kaññyâsa°. — 7. B °tîya samṛ° C °vitâ hriyâyantî ku° B °yâyanti | ku° °llîna ya° C °llîno câ ya°. — 8. BC °n abhikrânto° C °k saṁbuddham abhisaṁbuddhaḥ pra° B °vṛitto prava° cakraṁ | taṁ° C °cakraṁ bhikshu° B °çrutaṁ bhu°. — 10. C °kaññyâ° BC °çrâṇanto° C °yâyanti ku° B °ntî | kumârasya allînâ bhi°.

12¹. C °thaṁ bhagavan yaçodharâṁ bhaga° °sya hriyâ° B °yâyanti allînâ || . — 13¹. C °kshavo idânîṁm evaṁ yaço° B °dânîṁm eva° BC °dharâ nâ mama° C °ma hriyâ° B °yâyantî a°. — 13². C °ma hriyâ° B °yâyantî a°. — 14¹. C °âhaṁsuḥ | . — 14². C °gavâṁ | . — 15². C °n âha || na bhikshavaḥ bhûta°.

16. BC °m adhvâne naga° C °ṇo kauṇḍinyasagotro° BC °tro so kâ°. — 17¹. C °hiṁ anuhima° çrama mâ° C °pûrvâparâtrapa° B °râtraparaṛâtraṁ | jâ° yuktaṁ no vi° C °ke mârgeṇa ca° pañcabhi° ikṛita candra° B °ikṛitâ candra°.

चात्मृता । चन्द्रमसूर्यपरिमार्जको महर्द्धिको महानुभावो ऋषि संवृत्तो न च संविभागशीलो ॥ तस्य दानि ज्ञातिको कायस्य भेदाच्चन्द्र्यर्चकायिकेषु देवेषूपपन्नो पंचशिखो नाम गन्धर्वपुत्रो ॥ सो देवभूतो तं कौशिकं स्मरति । क्वहिं कौशिक आकाशे प्रवृत्तजीवो ति मृतो ति ॥ सो समन्वाहरति । पश्यति तं कौशिकं ऋषिप्रव्रज्यां प्रव्रजितं । अनुहिमवन्ते गंगाकूले स आश्रमे प्रतिवसति असंविभागशीलो ॥ तेन शक्रस्य देवानामिन्द्रस्य आरोचितं ॥ यो मम मनुष्यभूतस्य ज्ञाति प्रियो मनापो सो ऋषिप्रव्रज्यां प्रव्रजितो अनुहिमवन्ते गंगाकूले आश्रमपदे प्रतिवसति सो च असंविभागशीलो । तस्य अनुग्रहार्थाय उपसंक्रमेम संविभागस्मिं नियोजेम ॥

शक्रो दानि कौशिकस्य ऋषिस्य अनुग्रहार्थं आहारदेशकाले [116b] चन्द्रमसूर्येहि सार्धं मातलिना च संग्राहकेन पंचशिखेन च देवपुत्रेण ब्राह्मणवेशमभिनिर्मिणित्वा ...... कौशिकस्य ऋषिस्य आश्रमं आहारदेशकाले एकमेको उपसंक्रान्तो । स च सुनखो नानाप्रकाराणि उच्चावचानि वर्णानि उपदर्शेति ॥ कौशिक आह ॥

नाहं क्रिणामि नापि विक्रिणामि
न चापि मे सन्निधि अस्ति किंचित् ।
परीत्तकं मम भोजनं इमं
श्यामाकप्रस्थं नलसेधो दुविन्नं ॥

सुनख आह ॥

अल्पातो अल्पकं दद्यात् अनुमध्यातो मध्यिमं ।

1. C °mārjanta maha° BC °çīlo tasya°. — 2. C °ko koyasya bhe° °cakāyesha de° B °pañcaçikho nā° C °pañcaçikhyo nā° BC °tro so de°. — 3a. C °çika smara°. — 3b. B °kauçikam ā° C °çikam ākāçe pravishṭam jīva° B °vṛttam jīva°. — 4a. C °samatrāha° BC °rati pa°. — 4b. BC °jitam anu°. — 5. B °kūle āçra° °sati | a° °çīlo tena° C °çīlo tasya anugrahārtha tena°.

6b. C yo ma manushya° C °jitaḥ | anu° B °jito | anu° BC °sati | so ca° C °ca asaṃvibhā° BC °çīlo tasya°. — 8. C °rthāya saṃkrāmo saṃvibhā° yojemaḥ |. — 10. B °sūryehi ca sārddhaṃ | mā° C °mātarinā ca saṃ° °ca çikhyena ca de° treṇa veçmabhini° BC °ṇitva kauçi° C °shiya āhāraṃ āçrāmaṃ deçaṃkāle e° krāntaḥ tasya ca suna°.

13. C tasya ca su° ccāvacāni va°. — 15. C nāhaṃ kriyāmi nāpi me sa° B nāhaṃ kriyāmi nāpi vikriyāmi° C °sti kiñcit paritaṃ°.

17. C paritaṃ °mam syamāka° BC °sthaṃ nālam e° C °m eko dubhinnaṃ ||. — 19. C sunakho āha ||. — 20. C °dadyād amma° B °dyāt | a° C °dhyāto paccimaṃ |.

वङ्कातो वङ्कं दद्यात् यदानं नोपपद्यति ॥
नत्वाहं कौशिक ब्रूमि भुंजाहि च ददाहि च ।
आर्यमार्गसमापन्नो एकांशं विन्दते सुखं ॥

चन्द्रो पि उपसंक्रान्तो ॥ कौशिको आह ॥

नाहं क्रिणामि नापि विक्रिणामि
न चापि मे सन्निधि अस्ति किंचित् ।
परीत्तरूपं मम भोजनं इमं
श्यामाकप्रस्थं नलमेषो त्रयाणां ॥

चन्द्र आह ॥

यडिशं सो संगिलति दीर्घसूत्रं अयोमयं ।
यो अतिथिस्मिं आसीने अदत्वा भुंजति भोजनं ॥
नत्वाहं कौशिक ब्रूमि भुंजाहि च ददाहि च ।
आर्यमार्गसमापन्नो एकांशं विन्दते सुखं ॥

सूर्यो पि उपसंक्रान्तो ॥ कौशिक आह ॥

नाहं क्रिणामि नापि विक्रिणामि
न चापि मे संनिधि अस्ति किंचित् ।
परीत्तरूपं मम भोजनं इमं
श्यामाकप्रस्थं नलमेषो चतुर्णां ॥

सूर्य आह ॥

मोघं तस्य व्रतं भोति मोघं चापि समाहितं ।

1. BC °dyât âdânaṃ vo(C °co)papadyati | . — 2. B °naitvarhaṃ kau° C °na tvahaṃ kau° BC °çika krumi bhuṃ° B °jâhi dadâ°. — 3. B °rgasampannâ e° C °kâṃça vi°. — 4¹. C °krânto ekâçaṃ vindate suta | kau° B °nto kau°. — 4². C kauçika âha ‖. — 5. B nâhaṃ viçrâminâpi vi° C nâhaṃ vikriṇâmi napi kriçâmi na câpi saṃnidhi a° B °câpi sanni ° cit pari°.

8. C °çyâmâkaprasthaṃ° BC °sthaṃ nâlam e° B °çâṃ ca°. — 10. BC yadiçaṃ so gila(C °ra)ti° C °yaṃ ati° B °yaṃ yo ati°.

11. BC °smiṃ | â° B °âçinenâdatvâ° C °âsîd anenânudatvâ°. — 12. BC natvahaṃ kau° B °çika krubi bhuṃ° C °çika krumi bhuṃ°. — 13. BC °nno evaṃ saṃvin(C °viṃ)date su°. — 14¹. C sûryo pi tu upasaṃpanno evaṃ saṃvidyate sukhaṃ ‖ B °nto kau°. — 15. BC °vikriṇâmi na° B °me | saṃni° C °me sannidhi° BC °cit pari°.

17. BC °janaṃ | i° C °çyâmâkapra° B °kaprasthaṃ° BC °sthaṃ nâlam e° caturṇâṃ ‖

20. BC mohaṃ ta °ti mohaṃ câ°.

यो अतिथिषिञ्चं आसीने अदत्त्वा भुंजति भोजनं ॥
नत्वाहं कौशिक ब्रूमि भुंजाहि च ददाहि च ।
आर्यमार्गसमापन्नो एकांशं विन्दते सुखं ॥

मातलि पि उपसंक्रान्तो ॥ कौशिक आह ॥

नाहं क्रिणामि नापि विक्रिणामि
न चापि मे संनिधि अस्ति किंचि ।
परीत्तरूपं मम भोजनं इमं
श्यामाकप्रस्थं नलमेषो पंचानां ॥

मातलि आह ॥

सत्यं तस्य हुतं भोति सत्यं चापि समाहितं ।
यो अतिथिषिञ्चं आसीने दत्त्वा भुंजति भोजनं ॥
नत्वाहं कौशिक ब्रूमि भुंजाहि च ददाहि च ।
आर्यमार्गसमापन्नो एकांशं विन्दते सुखं ॥

शक्रो पि उपसंक्रान्तो ॥ कौशिक आह ॥

नाहं क्रिणामि नापि विक्रिणामि
न चापि मे सन्निधि अस्ति किंचित् ।
परीत्तरूपं मम भोजनं इमं
श्यामाकप्रस्थं नलमेषो षण्णां ॥

शक्रो आह ॥

सरस्वतीं सो जुहोति चाक्रतां गमये अपि ।

1. C yâ ati°. — 2. C natvaha kau° BC °çika krumi bhuñ°. — 3. C °rgasya sampanno ekâñça vi°. — 4¹. BC mâtari pi° B °krâtau kau° C °krânto evañ samvindate sukhañ | kau°. — 5. C °vikriṇâmi° C °me sannidhi asti kiñcit | pa°.
7. C °ima syâmâkapra° BC °sthañ nâlam e° C °sho pañcânâñ ‖. — 9. C mâtari â°.
10. B satyañ satya hutañ bho° C satyañ satyañ hutañ bho°.
11. B °çine da° C °çina da°. — 12. BC natvahañ° B °ka kruhi bhuñ° C °ka krumi bhuñ° BC °dâhi ca â°. — 13. C °rgasampanno ekâñçañ vi°. — 14. C °nto evañ samvindate sukhañ | kau°. — 15. BC na câpi san (C °sañ)nidhi a°.
17. BC °janañ | i° C °syâmâkapra° BC °sthañ nâlam eshâ(C °shâñ) sharṇṇâñ ‖. —
20. BC °svati so ju° B °juhâti câhadâñ gama° C °câhu âgama° L °câhutâñ sama° BCL °mayâm api |.

यो अतिथिस्मिं आसीने दत्वा भुंजति भोजनं ॥
नत्वाहं कौशिक ब्रू[117a]मि भुंजाहि च ददाहि च ।
आर्यमार्गसमापन्नो एकांशं विन्दते सुखं ॥

कौशिक आह ॥

उदारवर्णा इति ब्राह्मणा इमे
अयं च वो सुनखो किस्य हेतु ।
उच्चावचां वर्णनिमां निदर्शये
आख्याय मे को नु भवे भवन्तो ॥

शक्र आह ॥

चन्द्रो च सूर्यो च इहागता ते
अयं च सो मातलि देवसारथिः ।
अहं च शक्रो त्रिदशान ईश्वरो
अयं च सो पंचशिखो . . . . . ति ॥
यस्यैव प्रतिगृह्णाति अन्नं च पानं च कौशिक ।
पाणिस्वरं कुम्भथूनं मृदंगानां स्वराणि च ।
सुप्तं न प्रतिबोधेन्ति प्रतिबुद्धो च नन्दति ॥

. . . . . . . . . . . . . . . . . . . . . . . . . .

तुवं नो ज्ञाती पुरिमासु जातिषु
त्वं कौशिका मत्सरिपापधर्मः ।
तुभ्यानुकंपाय इहागता स्म
मा पापधर्मो निरयं व्रजेसि ॥
ये मत्सरी रोषकपापधर्मा

1. B ye tithi° C yā tithismiṁ açine da° B °āçine adatvā°. — 2. BC natvahaṁ kauçika krumi bhuñ°. — 3. C °rgasya saṁpanno°. — 5. B °hmaṇa i° kho kimasya hetuḥ | C °kho kima hetuḥ |.

7. B °coloavo varṇṇa° C °colvaco varṇṇa° bhāṁ darçaye na ākhyā° B °rçaye nanu ākhātamedāe nu bha° C °ko anubha°. — 10. C °ihogatau ayaṁ° B °hāgato ayaṁ° C °mātad da°.

12. C °çānam īçva° B °çāna īçva° BC °ro | ayaṁ° C °yaṁ ca pañcaçirahati | yasyai° B °pañcaçiahati || yasyai°. — 14. B °kauçikaḥ pāṇi° C °çika pāṇi°. — 15. B °mbhabhūyaṁ mṛ° C °mbhathūkaṁ mṛ° BC °daṁgāhaṁ varāṇi ca°.

16. BC suptānāṁ pra° ati | pratibu°. — 18. BC °jñāti pu° B °purimasu jātisu | tvaṁ° BC °çiko matsa° B °tsarīyāpadharmaḥ tu° C °tsarirahakapāpadharmā tu° — 20. B C °sma | mā°.

22. B °dharmo pra° C °çravaṇāhrā° BC °ṇānāṁ pā°.

प्रद्वेषका श्रमणब्राह्मणानां ।
पापानि कर्माणि समाचरित्वा
इतो च्युताः ते निरयं व्रजन्ति ॥
ये चेह दानानि ददन्ति पण्डिता
प्रसन्नचित्ताः श्रमणब्राह्मणेषु ।
पुण्यानि कृत्वा इह जीवलोके
इतो च्युतास्ते सुगतिं व्रजन्ति ॥

कौशिक आह ॥

एषो ऽद्यैवं करिष्यामि पुण्यं
दास्यामि दानं श्रमणब्राह्मणेषु ।
एतेहि दद्यादहमन्नपानं
नाहं अदत्त्वा अमृतं पि पास्ये ॥
एवं च मे ददतो सर्वकालं
भोगा च मे व सर्वा क्षिपिष्यन्ति ।
ततो अहं सुगतिं प्रव्रजिष्यं
प्रहाय कामानि तथाधिकानि ॥

नगोत्तमे गिरिवरगन्धमादने
मोदन्ति देववराधिपात्मजा ।
उपागता अधिवर सर्वे पूजितुं
सुपुष्पितां द्रुमवरशाखां गृह्णिय ॥
शुचिं सुगन्धां त्रिदशेहि सत्कृतां
सुपुष्पितां अमरवरेहि सेवितां ।

2. C pâpâṇi dharmâṇi° B °rmâni sa° C °ito cuto te nilayaṁ° BC °janti yad iha dâ°. — 4. C °ni dadâti pa° C çravaṇabra° B °brâhmaṇabrâhma°.
6. C °ita cyu°. — 9. B °dyaiva karishye pu° C °rishya pu ° çravaṇabrâ°.
11. C °hi ete dânaṁ dadyâ nâhaṁ° L °hi ete dadayahi dânaṁ nâ° B °dyâd dânaṁ nâhaṁ° BC °adatvâ amṛi° C °pipâsâ | . — 13. C °bhogâya ca me° BC °me vâ sarvâ kshipa- (C °pri)hanti | L °me vâ sarva kshîpihanti | . — 15. BC °ahaṁ pravrajishyâmi prahâ° C °dhikâmâni nago°.
17. BC °ragandhamâ° B °dane | mo° C °modanti deva amarâdhi°. — 19. B upâgamâ ṛi° C °game ṛi ° sarvapû ° gṛihniya çu° B °gṛihniya çu°.
21. BC çuciṁ | sugandhâ trida ° tkṛitâ supushpitâ ama° B °sevitâ tâṁ° C °sevitâḥ tâṁ°.

को वेहपूर्वं कलहं उदीरये ॥
यो सर्वलोके चरति महामुनिः
नामेन सो नारदो सत्यविक्रमो ।
सो अब्रवीत्पर्वते गन्धमादने
गत्वान भूताधिपतिं हि पुच्छथ ॥
  इतो सो उत्तरतो दिशायां
गंगाय कूले हिमवन्तपार्श्वे ।
सो कौशिको दुर्लभपानभोजनो
तस्य सुधां प्रेषयि देवसारथिः ॥
अग्निं जुहन्तस्य प्रतिष्ठतो मम
प्रभंकरो लोकतमोनुदो यथा ।
आदित्यलोकस्मिं तथैव ईर्यसि
का देवता किस्य इहागतो सि ॥
शंखोपमं श्वेतमतुल्यसन्निभं
मनोज्ञगन्धं प्रियरूपदर्शनं ।
न दृष्टपूर्वं मय चक्षुषेदृशं
का देवता किन्तु ददासिदं मम ॥
अहं महेन्द्रेण महर्षि प्रेषितो
सुधाहरि त्वां त्वरितं उपागमि ।
जानाहि मां मातलि देवसारथिं
भुंजाहिमां कांचिषु भोगमुत्तमं ॥
भुक्ता हिमां द्वादश . . . . हि पापका
क्षुधापिपासां अरतिं ज्वरं क्लमा ।

2. BC °nīḥ nāmena °kramo so a°. — 4. BC °vā || pavvate° C °vate andha°.
6. C °uttarāto° C °gaṅgākūle°. — 8. BC °jano | te° C °rathi a° B °rathiḥ a°. —
10. B agnijuha° C agnihutaṁ tassa pratisthato° B °tiṭṭhato°.
12. C °yathaivaṁ ishyasi kā° B °mim yatheva iryasi° C °vatā kassa ihagatā si | . —
14. BC °khopamaṁ ceta° C °tamatulyasaṁnibhā manogandhaṁ pri° B °sannibhaṁ manogandhaṁ pri° BC °rçanaṁ na dṛ°.
16. BC °pūrve ma° C °mayaṁ cakshuḥ odṛçakā de° BC °vate kiṁ tu adā° C °dāsidaṁ°.
— 18. C °ndreṇa mārsha preshitāḥ su° BC °mahātari māṁ(C °mā) tvari°. — 20. C °mātari de° B °tali deva° C °hi mā kāṁ° B °bhujam u° C °bhojanam uttamaṁ | .
22. BC °dvādaçehi pā° C °pakaṁ kalu° B °pakāt kahudhā° BC °pipāçaṁ ara° kramā kro°.

चाख्याहि मे त्वं कतमासि देवता ॥
श्रिरी ह्यमस्मि मनुजेषु संमता
ऋक्षुद्रसत्वा परिसेविनी सदा ।
सुखेषिणी तुह्य सकाशमागता
तं मां सुधाये वरप्रज्ञ भागय ॥
श्रीजिनुपेतं चरणेन बुद्धिये
उपेतसत्त्वं मनुजेन कर्मणा ।
त्वया उपेतो श्रिरिजातिमन्तिया
प्रेषेति दासं विय भोगवां सुखी ॥
ऋचो पि दासो ऋलसो ऋशिल्पको
सुदुर्गतो वापि नरो ऋरूपवां ।
त्वया उपेतो श्रिरिजातिमन्तिया
तदिदमसाधु यदिदं त्वया कृतं ॥
प्रभा[118ᵃ]सयन्ती यशसा यशस्विनी
मनोरमैशाद्वयनां दिशां प्रति ।
पृच्छामि त्वां कांचनवेदिविग्रहे
आचिच मे त्वं कतमासि देवता ॥
श्रद्धाहमस्मि मनुजेषु सम्मता
ऋक्षुद्रसत्वा प्रतिसेविनी सदा ।
सुखेषिणी तुह्य सकाशमागता
तं मां सुधाये वरप्रज्ञ भागय ॥
भार्यापि मे स्त्री सदृशा हि सत्कृता

2. BC °m amnim ma° C °sim sammatâḥ a° B °tâ | a° C °satvo parise° B °satva parisatvaparise° BC °sadâ sa°. — 4. BC °kâça âga° B °tâ | tam mâ sa° C °tam sâ sa° B °sadhâya vara °gaya çi° C °gayah çi°.

6. C çiceno° B çilenupe° BC °petâm ca° B °buddhiḥ | ye u° C °ye | upeta sa° BC °satvâ pra° C °rmaṇâḥ tva° B °ṇâ tva°. — 8. C tvayopetam giriyântimântiyâm preshitâ sam viya° B °manti | yâ preshati dâ° C °sukhim | B °khi stha°. — 10. BC °çilpa | tâm sudugatâ vâpi° C °narâ anupavâm | B °naro rûpavâm tva°.

12. B °peto jâti° C °petam yâtimanteya ta° BC °tad idam asâdhu | ya° C °idam tvâyâ°. — 14. B °sayanti yaça° C °sayanti yad idam yaçasâ° BC °manmmayâ sâhvayanâ diçâm°.

16. C °ciksha me tvam°. — 18. C çucdhâha° B çrarddhâha° BC °m amnim ma° C °sha sammatâ | a° B °tâ | a° C °tivediya sa° BC °sadâ sa°. — 20. BC °kâça âga° B °tam mâm sadhâya vara° C °tam sa suddhâya ca prajñâm varabhogaya | .

22. B °me sho sa° C °dṛçâbhi satkṛ° BC °ikṛita kalyâ° rmâya pa(B °pra)tivratâya | .

कल्याणधर्मा च पतिव्रता च ।
प्रहाय स्वकुलं भीतरा च
करोति श्रद्धां पुन कुम्भकाशिये ॥
शीलं श्रुतं चापि तथापि संयमं
श्रद्धा सती यत्र .... एकदा ।
नैषा मावचेन विशालदर्शना
तदिदमसाधु यदिदं त्वया कृतं ॥
सा मे च मन्तिके चापि च वयसे
विजाने मूढासि धूर्तानुवर्तिनी ।
न एदृशी अर्हति आसनोदकं
कुतो सुधां गच्छ न मे त्वं रोचसि ॥
जहाति रात्री अरुणस्मिं उद्गते
सा तिष्ठसि तारवरा व ओषधी ।
पृच्छामि ते कांचनवेदिविग्रहे
आचिक्ष मे त्वं कतमासि देवता ॥
मृगीव भ्रान्ता सरनाय वर्जिता
निराकुला मन्दं समं अवेक्षसे ।
का ते सहाया भृकुटिं च लक्षते
न भायसे एकिका तुवं देवता ॥
न मे सहाया इह आगता कौशिक
..... प्रवराक्षि देवता ।
आशा सुधाये इह आगतास्मि

2. BC °ya sukula dhitarāya ka° BC °punaḥ ka° B °mbhakā | çiye | . — 4. B °saṁca-maṁ | çra°.

6. C °darçinā BC °tad idaṁ asādhu yad itaṁ tva°. — 8. C tameva° B mame va° BC °api vādyase vicarja(C °rjji)nā mudhurānuvartianā(C °no) | . — 10. B °edriçau arha° BC °daka kuto | sudhāga(C °āga)cha na°.

12. B °rāḍi a° C °rātri arupesmiṁ° BC °smiṁ dhate sa ti° C °ravanā ca oçari | B °varā ca oçari(?) | . — 14. C °vedavi° B °ksha se tvaṁ°.

16. C °nā saraṇiṁ pravrajitā° B °saravāya va° C °kçilā vandāni ave° B °manda sui ave°. — 18. B kānte sahāye mṛi° C kāṁ te sahāyo mṛi° B °tri rakshite na bhā° C °lakshati na bhā° BC °kā tu deva°. — 20. BC °çika mamkka(C °mika°) sāmpra° B °varamni de° C °varamniṁ de°.

22. C āsā su° BC °dhāya iha° C °āmmiṁ taṁ sudhā° B °jña bhakaya (corr. en bhāgaya?) | C °bhāgayā | .

तस्मे सुधाये वरसत्त्व भागय ॥
आघ्राय येषाशि कुपन्ति कर्षका
सपुत्रदारा संघटन्ति एकतो ।
नं वर्ष हरति अशनी च उत्थिता
तदिदमसाधु यदिदं त्वया कृतं ॥
आश्राये एके मनुजा धनार्थिका
नावां समारुह्य तरन्ति (सागरं) ।
आलम्बने तत्र सीदन्ति अथापि च
दुःखं निगच्छन्ति विनष्टपुण्याः ॥
सा मे च सन्तिके अपि च वयसे
विजाने मूढासि धूर्तानुवर्तिनी ।
न एतृशी अर्हति आसनोदकं
कुतो सुधां गच्छ न मे त्वं रोचसि ॥
का दृष्टासि ...... पिनद्धमंजरी
सीहांगदा कांचिप्रमृष्टधारणी ।
कुशाग्ररक्ता सुपिनद्धकुण्डला
उद्गीरवर्णा प्रतिभाय शोभसि ॥
गते यथा प्रावृषि अत्र शारदे
अलंकृता लोहितमालिनी ..... ।
पृच्छामि त्वां कांचनवेदिविग्रहे
आचिक्ष मे त्वं कतमासि देवता ॥
हिरीयमस्मि मनुजान सम्मता
अक्षुद्रसत्त्वप्रतिसेविनी सदा ।

2. B °ya kshatrâ° BC °rshakâ | sa ° dârâ pi sam ° ekadâ nam°. — 4. BC nam esha harati | asa° BC °tvayâ na kṛi°.

6. B açâyise ke ma° C âsâyike ma° BC °taranti âlambe(C °bhya)°. — 8. C âlambhyate ta° B °ndanti ta ° nti | athâ° BC °pi ca evam duḥkham° C °gachati vi° B °nti | vi° BC °shṭapraprṇyâḥ(C °ṇyâ) sa me°. — 10. BC sa me va santi api° BC °vijânâmi mûḍha si dhû° B °varttini | .

12. BC na etâdṛiçanî arha°. — 14. B kâ drashṭrâm pi° C kâ na dramshṭrâsi pi° C °ddhamamjalî simham° BC °gadâ(C °jâ)kâñcuprama(C °ṛi)shṭa°.

16. C °ṇḍalâḥ udîrnavaprati° B °bhati | . — 18. BC kâle yathâ° C °tra çârade° B °mâlini | C °lini pṛichâ°. — 20. B °kâñcavedi° C °vatâḥ hi°.

22. C °m asmim ma ° na sammatâ° B °mmata a° BC °drasatva(B °tvo)parise°.

जाम्बूनदं सन्तपनीयसन्निभं ।
प्रज्वाल्यमानं रविकरसंनिभं
अलंकृतं सुवर्णविम्बविचित्रं ॥
गताच हस्तिकपिञ्जाप्रदीपिचो
मृगा च वेडूर्यमया उपागता ।
तं पुच्छका ज्योतीरसमया शुभा
मणीवेडूर्यमया च ईदृशा ॥
हेट्ठा मनेसी उपरिं च कुप्परं
सुवर्णचन्द्रा च रथे उपागता ।
तं यानश्रेष्ठं अभिरुह्य मातलि
दश दिशायो अभिनन्दयेत् महीं ॥
नगांश्च शैलांश्च वनस्पती च
ससागरां कम्पमानां वसुन्धरां ।
सो क्षिप्रमेव त्वरितं उपागमि
तमाश्रमं यत्र अभूषि कौशिको ॥
सो मातलि . . . . . . . .
दूतो अहं पृच्छति ते पुरंदरो ।
श्रिरीय श्रद्धाय च आशायापि च
ह्रिरी श्रेया केन गुणेन मन्यसि ॥
. . . . . . . . . . . . .
. . . श्रिरी मे प्रतिभाति मातलि ।
श्रद्धा अनित्या पुन देवसारथि

2. B °ravikâra° C °ravikâçasannibhaṁ° B °rūpavicitramaṇḍalaṁ | . — 4. C °hastikapiñghra° BC °mṛgâta vai° C °gatâṁ | B °gatâ taṁ pu°.

6. BC °shkarâ jyotirasamayâ subhâ ma° C °shkarâ jyotirasâmayâ çubhâḥ ma° BC °maṇiravaiḍû° yâ iva (C °tvam) âdṛçâ he°. — 8. B °manesi u° C °parim ca° B °kuparaṁ° BC °raṁ suvarṇacandravarathe° C °gatâḥ | . — 10. BC °çreshṭam abhi° C °bhirûhya mâtari da° udaye mahiṁ || .

12. B °çpathiṁ sasâ° BC °garâṁ prathamâni ca va° C °vasuṁdharâṁ so° B °ndharâṁ so°. — 14. B °tvaritaṁ âçramaṁ° C °yattha abhû° çikaḥ | B °çiko so°.

16. BC so mâtali(C °ri) dûto° B °dûto haṁ pri° C °ahaṁ ca pṛi° BC °purandaro çi°. — 18. C °rîya çaddhâ° BC °ddhâya âçâ° C °çâyam api ca° BC hiriçriyâṁge(C °yâṁge) na gu° C °guṇe ca manyase | .

21. C çirî me °mâtari çra° B °tali çra°. — 22. C °ddhâ atityâ yana deva° B °punar deva° BC °sârathiḥ âdâṁ visaṁ° B °vâdidikasayantâṁ mama hiri° C °vâdidiçâṁ samantâ mama hiri°.

आशा विसंवादिकसंयता मम ॥
हिरी मनापा परिशुद्धकेवला
संघामश्रीर्वै न रता प्रवर्जिता ।
विपश्यमाना सुर[119a]भी उपद्रुता
हिरिर्निवारेति स्वचित्तमात्मनो ॥
हिरीह श्रेष्ठा मनुजेषु मातलि
दहरे कांक्षति महर्द्धिके च ।
प्रियं च भ्रातृत्वं करोति चण्डं
हिरिर्निवारेति स्वचित्तमात्मनो ॥
को ते इमां कौशिक दृष्टम् . . . .
उग्रो हि इन्द्रो अथवा सहांपति ।
इन्द्रो तव इन्द्रसगोत्र कांक्षति
तस्यैव भावसहव्रतानुज ॥
स कौशिकः तं जहियान उच्छ्रयं
शीलोपपेतो असपूर्यभूतो ।
पुण्यानि कृत्वा विपुलानि आश्रमे
कायस्य भेदात्स्वर्गेषु मोदति ॥

स्यात्खलु पुनः भिक्षवो युष्माकमेवं अन्यो सो तेन कालेन तेन समयेन नारदो नाम ऋषि अभूषि कौशिकसगोत्रो । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । अहं

2. BC °manâpaṁ pa° BC °kevalaṁ saṁ° C °çirahyeṇa rate pravrajitâḥ vi° B °çiraheṇa rate pravrajitâ | . — 4. BC vipaçyamâ° B °rabhi u° C °rabhir upadrutâḥ hiri nivâre° B °hirir nivâre ° tmane hiri° C °tmano ko te imâṁ kauçika dṛishṭam ugrâhi indro athavâ sahâṁyati indro tava indrasagotrikâ hirir nivâreti svacittam âtmane hiriha çreshṭâ°.

6. C hiriha° BC °çreshṭâ ma° C °mâtari dahareti kâṁ° B °mâtaliḥ da° BC °kâṁkshati ma° C °maharddhikâya pri° B °ddhikâya pri°. — 8. BC priya bhrâtari striyâ(C °yaṁ) karoti chaṇḍaṁ purushâ hi(C °di) durgatâ hi nivâ° B °ttam âtmanaḥ | . — 10. BC °kauçikaḥ dṛi° C °dṛishṭvam ugra hi° B °ugrâ hi ° thavâ mahâryati indro° C °sahâpati indro ° sagotri kâṁkshati | tasyaiva°.

12. C indro tavendra sagotri kâṁ° B °sagotri kâṁ° BC °bhâvâsahavratânuksha sa° (C °nuja ça)°. — 14. B °taṁ jâhiyaçam u° C °taṁ jâhiyanam uchayaṁ | çî° B °yaṁ | çîlâpa° BC °bhûto puṇyâ° B °petaṁ asadhṛjjabhâ° C °petaṁ asadhûrjjabhâ°.

16. BC °çramo | kâ° C °rgeshu vadati syâ°. — 18. C °puna bhikshavaḥ yu ° m eva sa syâd anyaḥ sa tena° B °m evam anya sa tena° C °abhûmi kauçikago° BC °tro na°. — 19[1]. C °khalvevaṁ drashṭaṁ | . — 19[2]. C °hetor ahaṁ° B °toḥ ahaṁ°. — 19[3]. C ahaṁ sa bhikshavo tena kâ ° yena nâlado nâma° C °çikasagotro | .

सो भिक्षवस्तेन कालेन तेन समयेन नारदो नाम ऋषिरभूषि कौशिकगोत्रो ॥ स्यात्खलु पुनर्भिक्षवो एवमस्या अन्या सा तेन कालेन तेन समयेन शक्रस्य देवानामिन्द्रस्य हिरी नाम धीता आसि । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोर्भिक्षवो । एषा एव यशोधरा तेन कालेन तेन समयेन शक्रस्य देवानामिन्द्रस्य हिरी नाम धीता अभूषि । तदापि एषा मम ह्रीयायन्ती अक्षीना । एतरहिं पि मम एषा ह्रीयायन्ती अक्षीना ॥

समाप्तं मंजरीजातकं ॥

भिक्षू भगवन्तमाहंसुः । कथं भगवं यशोधरा न शक्यति तोषयितुं ॥ भगवता कुमारभूतेन कन्यानामलंकारां पि विश्राणयन्तेन यशोधरायै शतसहस्रमूल्यं हारं दिन्नं । सा च आह । एत्तकमात्रं अर्हामि ॥ कुमारेण भूयो शतसहस्रमूल्यं अंगुलीयकं दिन्नं तथापि न सन्तुष्यति ॥ कथं यशोधरा अतृप्ता न शक्यति राधयितुं ॥ भगवानाह ॥ एषा भिक्षवो यशोधरा न इदानीमेव अतृप्ता अन्यदापि एषा अतृप्ता ॥

भूतपूर्वं भिक्षवो अतीतमध्वाने नगरे वाराणसी काशिजनपदे राजा सुप्रभो नाम राज्यं कारयेसि । तस्य कुमारो सुतेजो नाम कृतपुण्यो महेशाख्यो निवातो सुखसंस्पर्शो पूर्वाभाषी प्रियभाषी अमात्यानां भटबलाग्रस्य श्रेष्ठिस्य नैगमस्यानां सर्वस्य इष्टो बहुमतस्य ॥ राज्ञो उत्पन्नो । इमो सर्वजनकायो कुमारस्य गुणगृहीतो कदाचिदेते मम जीविताद्व्यपरोपयित्वा कुमारं राज्ये प्रतिष्ठापयेन्सुः । तेन रा[119 b]ज्ञा सो कुमारो विप्रवासितो ॥ सो दानि कुमारो भार्याय सार्धं अनु-

2. C °kshavaḥ evam asyâ anyâ° C °ndrasya hiri nâ°. — 3[1]. C °d evaṁ tad drashṭa° BC °vyaṁ tat ka°. — 3[2]. BC °kshavo e°. — 4. BC eshâm eva(C °vaṁ) yaço° C °ndrasya hiri°. — 5[1]. C °ma hriyayâyanti° B °yantrî alli°. — 5[2]. BC etahiṁ pi° C °eshâṁ hriyâyanti alli° B °shâ hriyâyantrî allinâ ‖.

7. C iti çrîmahâvastuavadâne mañjalijâtakaṁ samâptaṁ ‖. — 8[1]. C bhikshu bha° B bhikshûr bhaga° C °hatsuḥ ‖ B °ansuḥ ka°. — 8[2]. C °gavan yaço°. — 8[3]. C °tena kaññyânâ° B °nâma tvaṁ kâlâ pi vi° C °kârâṇi viçrâṇamanto° dharâya çata°. — 10[1]. C ettakâmâtraṁ arhâpi ka° B °rhâmi ka°. — 10[2]. B °dinna tathâ° C °na saṁtushyati ‖.

11. B °kyati codhayituṁ ‖ C °kyati bodhayituṁ ‖. — 12[1]. B esho bhi° C esho hi bhi° BC °dharâ idâniṁ(C °ni) atṛptâ a(C ° ‖ a)nya° C °pi ca eshâ° B °esho a°. — 14. C °evaṁ hi bhi° tîtem a° BC °vârâṇasi kâ° C kârayasi ‖. — 15. C °sujâto nâma° C °vâto mukhasaṁ° BC °bhâshiṇo amâ° B °bhaṭavalâ° C °ṭṭavalâgrâsya çre° BC °ishṭo ‖ ba° taçca râ°.

17[1]. BC °mo i°. — 17[2]. C °mârasya sarvaguṇa° BC °d vyavaropa° payetsuḥ ‖. — 18. C °râjño so°. — 19. B °rddhaṁ ‖ anu° C °nuyatasmiṁ° C °tṛṇakuṭi ca parṇakuṭiṁ kṛ° B °vasati ‖ mâ° C °kena pâyanto su° vâhamâlaini° B °paribhuñjanto ‖.

हिमवन्ते अन्यतरस्मिं वनखण्डे तृणकुटिं च पर्णकुटिं च कृत्वा प्रतिवसति मूलपत्रफलोदकेन यापेन्तो मृगोपपन्नानि च मृगवराहमांसानि परिभुंजन्तो ॥ तस्य दानि आश्रमातो [निर्गतस्य] मार्जारेण वठरां गोधां मारेत्वा तस्य भार्याये अग्रतो निक्षिपित्वा गतं ॥ सा तां गोधां पाणिनापि च न स्पृशति ॥ कुमारो मूलपत्रफलानि आदाय आश्रमं गतो पश्यति च आश्रमे तां गोधां रौद्रां वठरां । सो तां राजधीतां पृच्छति कुतो इमा गोधा ॥ सा आह ॥ एषा मार्जारेण आनीता ॥ कुमारो आह ॥ किं दानि एषा गोधा सिद्धा ॥ सा नं आह ॥ गोमयो ति कृत्वा न सिद्धा ॥ कुमारो आह ॥ न एषा गोधा अभक्ष्या भक्ष्या एषा मनुष्याणां ॥ सा दानि गोधा तेन कुमारेण निर्लंविकृत्वा पक्वा । पचित्वा द्रुमशाखायामोलंबिता ॥ सा चास्य भार्या घटमादाय उदकहारिं गता । गच्छामि अहं उदकमाहरिष्यामि । ततः आहारं करिष्यामि ॥

ताये तां गोधां पक्वां समानां दृष्ट्वा वर्णसंपन्नां च गन्धसंपन्नां च अरूहां च प्रत्ययां च अभिलाषमुत्पन्नं । कुमारस्यापि ताये भार्याये एतदभूषि । एषा राजधीता इमां गोधां असिद्धां हस्तेनापि न इच्छति स्पृशयितुं । यत्र च वेनां पक्वा ततः अभिनन्दति भोक्तुं । यदि एताय मम मूले प्रेमा भवे तदेषा गोधा मया फलहारगतेन सिद्धा भवेया । नास्या अतो गोधाये किंचित्संविभजिष्यं गोधां परिभुंजिष्यामि ॥ तेन सा गोधा ताये राजधीतरे उदकहारिं गताये खादिता राजधीता च उदकघटमादाय आगता ॥ सा दानि कुमारस्याह ॥ आर्यपुत्र कहिं सा गोधा ॥ कुमार आह ॥ पलायिता ॥ सा चिन्तेति । कथं पक्वा गोधा वृक्षशा-

2. BC °māto mārjjā° C °raṇa jaṭharā go° B °vaṭhara go° BC °godhā māre ° kshipetvā gataḥ(C °to) ‖ . — 4¹. C °nāpi na spṛ°. — 4². C °gatā paçyati ca āsamanto go° BC °draṁ jāparāṁ | . — 5. BC °imāṁ godhā ‖ .

6¹. C sā āha ‖ kiṁ dāni°. — 6². B sahāṁ sā°. — 7¹. BC °dāni tedhāṁ go° B °godhāṁ siddhā sā naṁ°. — 7². C sā taṁ āha ‖ . — 7³. BC gometi kri° C °siddhāḥ ‖ . — 8². C °eṣo godhā abha ° kshyā na mānushāṇāṁ | . — 9¹. BC °ṇa nicchavi(C °vi)kritvā° C °paktā paci° B °kvā paci°. — 9². BC °çikhāyam olaṁvitā | (C °tāḥ). — 10¹. C °gatāḥ ga°. — 10². C gachāmyahaṁ° C °ahyāmaḥ | .

11. C tato āhā°. — 12. C °paktāṁ samā ° gandhasaṁpannā ca rūhāṁ° B °gandhasaṁpannāṁ ca ruhāṁ° C °pratyagrā(ou çrā?)ṇāṁ ca° BC °tpannaṁ ku°. — 13¹. B °icchati | na spriçayituṁ | . — 14. B °pakvāṁ tataḥ° C °pakvāṁ taṁto abhi° B °bhoktuṁ yadi°. — 15. C °premnā bhavet tad e° BC °premnā bhaved etāṁ go° B °godhāṁ ma ° veyā nā°.

16. B nāsya ato° C nāsya gato godhāye kiṁ saṁ ° bhuñjishyā | . — 17. C °go tāye rājadhitāye° C °khādito | rā°. — 18². C °kahiṁ sā dhe ‖ . — 19¹. C °yito sā° B °yitā sā°. — 19². B °çikhāyem ā° C °çikhāyam ā°.

वायामायया पलायिता ति ॥ तस्या राजधीताये एतदभूषि । नाहं कुमारस्य दृष्टा ॥ तस्या तं दौर्मनस्यं हृदयं प्रविष्टं ॥

सर्वसत्त्वा मरिष्यन्ति मरणान्तं हि जीवितं ।
यथाकर्मं करिष्यन्ति पुण्यपापफलोपगा ॥
नरकं च पापकर्माणो कृतपुण्या च स्वर्गतिं ।
अपरे च मार्गं भावेत्वा निर्वायिष्यन्ति अनास्रवाः ॥

सो दानि राजा सुप्रभो कालधर्मेण संयुक्तो । अमात्येहि सुतेजो कुमारो वनातो आनेत्वा राज्ये वाराणसीयं अभिषिक्तो ॥ [120a] राज्ञो सुतेजस्य देवीय मूले न किंचिद्परित्यक्तं । न किंचित्तत्र राज्ये रत्नसंमतं । सर्वं देवीये उपनामेति यानि वस्त्राणि उदाराणि आभरणानि हारार्धहाराणि तानि देवीय उपनामयति न च शक्नोति आराधयितुं । ताये च नं गोधा हृदयं गता ॥ तस्य राज्ञो सुतेजस्य भवति । अहं देवीये न सा किंचिद्गुणजाती यां न करोमि न सा किंचित्प्रियता यां न दर्शेमि न च शक्नोमि तोषयितुं ॥ सो तामाह ॥ देवि अहं तव न किंचिद्गुणजाती यां न करोमि न सा च प्रियता यां न दर्शेमि न च शक्नोमि तोषितुं न परिबुध्यामि किमत्र अन्तरं । वक्तु देवी ॥ सा दानि देवी तं सुतेजं राजानं गाथया वाध्यभाषति ॥

अद्यापि ते तं वनस्मिं अनुबुध्यामि क्षत्रिया
यस्य ते धनुहस्तस्य सानुबद्धकलापिनो ।
ओलम्बा द्रुमशाखायां पक्वा गोधा पलायिता ॥

राजा आह ॥

नमे नमन्तस्य भजे भजन्तं

1b. BC °rasya na labdhâ ta°. — 2. B tasya taṁ° C tasyaivaṁ daurmanasya hṛ°. — 3. B °shyanti paraçântaṁ hi jîvitaṁ | C °çântaṁ jîvitaṁ | . — 4. C °shyati pa° BC °lopamâ | . — 5. C narakaṁ pâpa° °ṇyâçca sva°.
6. C °bhâvayitvâ° BC °tvâ parinirvâ°. — 7a. B °yukto amâ°. — 7b. BC °tyehi sujâta ka°. — 9a. BC °matam sa°. — 9b. C sarva de° devîye upa° BC °upanamayati°.
11b. B yâye ca° C yâyer ca naṁ°. — 12. BC °jâtî yaṁ na ka° C °romi mânanâ kiṁcin pri° BC °yatâyaṁ na° C °çaknoti tosha°. — 13a. BC so tam âha || . — 13b. BC devi ahaṁ° BC °jâtî yaṁ na ka° B °romi | sitâ ca priyatâmana darça° C °romi iti tâṁ ca priyatâmanaṁ darçe° C °paribadhyâmi kiṁ atra anantaraṁ ja° B °ntaraṁ jalpa°. — 15b. B °gâthâya câdhyabhâ°.
17. BC adyâpi me taṁ° B °taṁ tavasmiṁ ca badhyasmi kshetriya yasya° C °taṁ vâsmiṁ ca badhyasmiṁ kshetriya ya ° atasyâ sânubaddhasya karâpito ola° B °ddhasya kalâpito ola°. — 19. C °dhâ paryâtâ || .
21. BC name namotasya bha° B °je bhajaṁtaṁ kṛtânnkâ | riyasya ka° C °nukâriyasya kâreyâ°.

कृतानुकार्यस्य करेय चर्यं ।
असंभजन्तं च न संभजेय
नानर्थकामस्य करेय चर्यं ॥
त्यजे त्यजन्तं सततं न गच्छे
अपेतभावेन न संवसेया ।
द्विजो द्रुमं क्षीणफलं विदित्वा
अन्यं परीक्षेय महां हि लोको ॥

स्यात्खलु पुनर्भिक्षवः युष्माकमेवमस्यादन्यो सो तेन कालेन तेन समयेन सुतेजो नाम राजा अभूषि । न खल्वेवं द्रष्टव्यं ॥ तत्कस्य हेतोः ॥ अहं सो तेन कालेन तेन समयेन वाराणसीयं सुतेजो नाम राजा अभूषि ॥ अन्या सा राज्ञो सुतेजस्य देवी अभूषि अग्रमहिषी । न खल्वेतदेवं द्रष्टव्यं । एषा सा भिक्षवः यशोधरा राज्ञो सुतेजस्य देवी अग्रमहिषी अभूषि । तदापि एषा अतृप्ता न शक्यति तोषयितुं । एतरहिं पि एषा अतृप्ता न शक्यति तोषयितुं ॥

इति श्रीगोधाजातकं समाप्तं ॥

भिक्षू भगवन्तमाहन्सुः । भगवता कुमारभूतेन उद्याने कन्यानामाभरणानि वि-श्राणयन्तेन यशोधरायै एव अक्रकं दिन्नं ॥ भगवानाह ॥ न भिक्षवो इदानीमेव मया यशोधरायै अक्रकं दिन्नं ॥ भिक्षू आहन्सुः ॥ अन्यदापि भगवन् ॥ भगवानाह ॥ अन्यदापि भिक्षवः ॥

भूतपूर्वं भिक्षवो अतीतमध्वाने नगरे वाराणसी काशिजनपदे राजा राज्यं कारयति [120ᵇ] कृतपुण्यो महेशाख्यो संगृहीतपरिजनो दानसंविभागशीलो महाबलो महाकोशो महावाहनो । तस्य तं राज्यं ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकी-

2. C tenaṁ bhajantasya na saṁ° BC °na saṁbhajeyânânartha°. — 4. B °utaṁ sa taṁ na ga° C °saṁvaseyâ |.

6. BC dvijâ dru° B °anya parikshe° C °anye parikshe° BC °loko ||. — 8. C °d anyaḥ so te° B °sâ na° C °bhûshi | tadâpi na khalu dra°. — 9¹. BC °hetor ahaṁ°. — 9². C °haṁ sa tena° C °vârâṇasyâṁ su°. — 10. BC °bhûshi || agra° C °mahishi na° B °hishi na khu°.

11¹. BC °devi agra° C °mahishi°. — 12. BC °toshâyituṁ ||. — 14. C iti çrîmahâvastuavadâne godhâ°. — 15¹. BC bhikshu bhu°. — 15². C °vatâ rabhûte °ne kaṁnyânâ° çrâmantena° BC °râye sarvaṁ bahukaṁ°.

16¹. B °idânîṁ evam ayaṁ yaço° C °na evaṁ maye yaço°. — 17¹. BC bhikshu â° C °âhatuḥ |. — 18. B °kshavaḥ bhû°. — 19. C °çâkhye samṁgri° BC °vâhano tasya°.

21. C °râjyaṁ sphitaṁ° B °bhikshaṁ ca câki° C °câkirnnapanamanushyaṁ ca praçânta-janamanushyaṁ ca praçâ° B °daṇḍabhramara sami° C °skaravyavahârasampannaṁ |.

र्णजनमनुष्यं च सुविभक्तजनमनुष्यं च प्रशान्तदण्डडमरं सुनिगृहीततस्करं व्यवहारसंपन्नं ॥ तस्य दानि राज्ञो पञ्चशतमन्तःपुरं । तस्य या अग्रमहिषी सा सर्वस्यान्तःपुरस्यातीव प्रासादिका च दर्शनीया च पण्डिता च विधिज्ञा च सर्वकलासमन्वागता च ॥ सो राजा अभीक्ष्णं अन्तःपुरस्य वस्त्राणि च आभरणानि च विश्राणेति । तस्यापि राज्ञो शतसहस्रमूल्यो हारो आमुक्तको तस्य च हारस्य मध्ये मणिरत्नं यत्र चत्वारि महाद्वीपा दृश्यन्ति जम्बुद्वीपो पूर्वविदेहो अपरगोदानीयो उत्तरकुरुः सुमेरुश्च पर्वतराजा । अनेकशतसहस्रमूल्यं तं मणिरत्नं तस्य महाहारस्य मध्ये ॥ तां देवीं पृच्छति आभरणानि विश्राणेन्तो ॥ देवि अतीव त्वं मे मनं हरसि । को च उपायो येन देवी मे मनं हरति ॥ सा दानि देवी तं राजानं गाथयाध्यभाषति ।

चेष्टालीलासमाचारा निमित्तस्य च ग्राहणं ।
कौतूहलेन चपलास्त्रिभिरारञ्जन्ति पार्थिव ॥

स्यात्खलु पुनर्भिक्षवः युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन काशिराजा अभूषि । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । अहं स भिक्षवस्तेन कालेन तेन समयेन काशिराजा अभूषि । अन्या सा तेन कालेन तेन समयेन काशिराजस्याग्रमहिषी । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एषा सा भगवती यशोधरा तेन कालेन तेन समयेन काशिराजस्याग्रमहिषी अभूषि । तदापि एतस्या मया बहुं दिन्नं ॥

इति श्रीयशोधराये हारप्रदानजातकं समाप्तं ॥

यदा बोधिसत्वो अकामकानां मातापितॄणामश्रुमुखानां रुदन्मुखानां हस्तोत्त

1ᵃ. BC °hpuram tasya°. — 2ᵃ. C °gramahishyâ sâ sa° syâtîvam prâ° BC °ardgatâ ca so râ°. — 4. C °vastrâni câbha°. — 5. C °mûlya âro âba° BC °sya ca hâramadhye° C °çyanti jambudvî° godâvali utta° B °godâvari utta° C °kuru sumo° râjo a° B °râjâ ane°.
7. C °madhye râjâ tâm° B °madhye tâm°. — 8ᵃ. BC °prcchati | â° B °çrânanto de°. — 8ᵇ. BC devi ati° C °tvam mama manam°. — 9ᵃ. C °devi mama mana harati | . — 9ᵇ. B °gâthâyâdhya° C °gâthayâ bhâ°.
11. B coshṭhali° BC °ca grâhanâ | . — 12. B °lena ca harâs tri° C °lena ca râjâ sirbhi° BC °bhir ârâyanti pârthi(C °pârthi)vah ‖ . — 13. B °kaharah ‖ yu° C °d anyo sa te°. — 14ᵃ. C °khalevam dra°. — 14ᵇ. BC °hetor aham°. — 14ᶜ. C °kaluvo tena kâ° BC °sama-yena kâçirâjasyâgra° C °mahishi abhûshi | na kha°.
16ᵇ. B °bhavati yaço° C °vati yaço° râjasya 'gramahishi°. — 17. C °bahu dinnam ‖ . — 19. C iti çrîmahâvastunavadâne yaço°. — 20. BC °kramatûnâ° C °râd anagâriyam pra° B °çodhara de°.

च चक्रवर्तिराज्यमपहाय अग्रं च गृहवासमपहाय अगारादनगारिकां प्रव्रजितो तदा यशोधरा देवदत्तेनोच्यते ॥ मम भ्राता प्रव्रजितो आगच्छ मम अग्रमहिषी भविष्यसि ॥ सा दानि न इच्छति बोधिसत्वमेव अभिकांक्षति । सुन्दरनन्देनापि उच्यति । मम भ्राता प्रव्रजितो आगच्छ मम अग्रमहिषी भविष्यसि । तस्यापि न इच्छति बोधिसत्वमेवाभिकांक्षति ॥ यदा भगवां प्रवृत्तधर्मचक्रो तदाहि ए[121a]तं भिक्षुहि श्रुतं । भिक्षू भगवन्तं पृच्छन्ति । कथं भगवं यशोधरा सुन्दरनन्देन च देवदत्तेन च प्रार्थयन्ती न इच्छति भगवन्तमेव प्रार्थेति ॥ भगवानाह ॥ न भिक्षवो इदानीमेव यशोधराये सुन्दरनन्देन च देवदत्तेन च प्रार्थयमाना न इच्छति मम एवाभिकांक्षति । अन्यदापि एषा एतेहि प्रार्थयन्ती न इच्छति मम एवाभिकांक्षति ॥

भूतपूर्वं भिक्षवो अतीतमध्वाने हिमवन्तपादमूले सर्वेषां चतुष्पदानां समागमो अभूषि ॥ अस्माकं राजा नास्ति चतुष्पदानां राजा स्थापीयतु ॥ तहिं तेषामुत्पन्नं स्थापीयतु चतुष्पदानां राजा ति प्रवरं ॥ ते आहंसु । को दानि चतुष्पदानां राजा स्थापीष्यतीति ॥ तेषां दानि उत्पन्नं । यो अस्माकमितो सप्तमे दिवसे सर्वप्रथमं हिमवन्तं पर्वतराजं गमिष्यति सो चतुष्पदानां राजा भविष्यति ॥ ते एवं समयं कृत्वा ततो प्रदेशातो येन हिमवन्तो पर्वतराजा तेन प्रधाविता ॥ तेषां सर्वेषां पृष्ठतो कृत्वा व्याघ्री हिमवन्तं पर्वतराजानं अनुप्राप्ता ॥ व्याघ्री हिमवन्तं पर्वतराजानं गत्वा चतुष्पदानां प्रतिपालेति ॥ चतुष्पदा च सर्वे हिमवन्तं पर्वतराजमनुप्राप्ता । तत्र च तां व्याघ्रीं पश्यन्ति प्रतिपालेन्तीं ॥ ते दानि चतुष्पदा तां

3[1]. BC so dâni° B °echati | bo° C °m evaṁ abhi°. — 3[2]. C °nâpi ucyati B °ccati mama°. — 4[1]. BC °mahishi°. — 4[2]. C °ichasi bo° m evaṁ âkâṁ° B °m evâkâṁ°. — 5. C °gavâṁ pravṛ° cakraḥ tadâhiṁ etaṁ bhi° B °tadâhi etaṁ bhi° taṁ bhi°.

6[1]. B bhikshu bha° C bhikshu bhaga° echati | . — 6[2]. C °gavaṁ yaço° ttena prâ° BC °rthayanti na i° C °m evaṁ prâ°. — 8. BC °idânîṁm e° C °m evaṁ yaço° ttena prâ°. — 9. B °prâyanti° C °prâpayanti na i°.

11. C °pûrva bhikshavoḥ ati° bhûmi | . — 12[1]. B asmâkaṁ râjâ nâsti catushpadânâṁ samâgamo abhûshi || asmâ° C °sthâpishantu ta° B °sthâpayantu tahiṁ°. — 12[2]. BC °teshâṁm utpa° C °tpannaṁ thapiyantu tahiṁ teshâṁ utpannaṁ thapiyantu | catushpadânâṁ râjâ sthâpishyatîti catu° B °piyantu catu° BC °râjâti pravaraṁ te âha°. — 13[1]. C °âhaṁsuḥ ko dâ° B °ṁsuḥ ko dâ°. — 13[2]. C °sthâpayishyati | . — 14[1]. BC °nnaṁ yo°. — 14[2]. B °sarve pratha° C °sarvaṁ pratha° tarâjânaṁ gami° BC °mishyati | so°. — 15. BC °himavantaṁ parva° C °dhâvitâḥ | B °dhâvitâ teshâṁ°.

16. BC °pṛshṭato kṛ° jânaṁ anuprâpto(C °ptaḥ) vyâ°. — 17. C °tipâlayati | . — 18. C °catuḥpadâ° C °prâptaṁ | . — 19[1]. BC °paçyati pratipâlenti te dâ°. — 19[2]. B °shpadânâṁ tâṁ° C °shpadâṁ tâṁ° B °shṭâ cotsamûjâ° C °shṭâ cotsamûjâ° B °rmanâ âhi°.

व्याघ्री आह ॥

सर्वाकारवरोपेतं गिरिं वा स्वयमागतं ।
एतादृशं पतिमिच्छे मूर्ध्नापि प्रतीच्छितं ॥

स्यात्खलु पुनर्भिक्षवो युष्माकमेवं स्यादन्यः स तेन कालेन तेन समयेन सिंहो मृगराजा अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । अहं सो भिक्षवो तेन कालेन तेन समयेन सिंहो मृगराजा अभूषि ॥ अन्यो सो तेन कालेन तेन समयेन ऋषभो अभूषि । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवः सुन्दरनन्दो तेन कालेन तेन समयेन ऋषभो अभूषि ॥ स्यात्खलु पुनर्भिक्षवः युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन हस्तिनागो अभूषि । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवो देवदत्तो तेन कालेन तेन समयेन हस्तिनागो अभूषि ॥ स्यात्खलु पुनर्भिक्षवः युष्माकमेवमस्यादन्या सा तेन कालेन तेन समयेन व्याघ्री अभूषि । एषा सा यशोधरा ॥ तदा[122ᵃ]पि एषा एतेहि मार्थयन्ती न इच्छति मम एवाभिकांचति । एतरहिं पि एषा एतेहि मार्थियन्ती न इच्छति मम एवाभिकांचति ॥

इति श्रीयशोधरायै व्याघ्रीभूतायै जातकं समाप्तं ॥

बोधिसत्त्वस्य उद्याने कन्यानां रत्ना विश्राणयन्तस्य यशोधरा सर्वपश्चा आगता सर्वेहि अलंकारेहि विश्राणियन्तेहि ॥ [राज्ञा शुद्धोदनेन अमात्या आणत्ता । कतमाय कन्याये कुमारस्य चक्षु निपतन्ति ॥] कुमारस्य यशोधरां दृष्ट्वा ताये चक्षु निपतितं । यो कुमारस्य हारो आबद्धको महार्हो शतसहस्रमूल्यो सो हारो कुमारेण ओमुञ्चिय यशोधराये दिन्नो ॥ सार्धप्रहसन्ती आह ॥ इयमहं एत्तकं

2. C °giriṃ vā sva°. — 3. BC °mūrddhnenāpi praticchitā ‖. — 4. C °m evam asyād a ° samaye siṃho°. — $5^1$ BC °ahi mai°. — $5^2$. C °hetor ahaṃ° B °toḥ ahaṃ°. — $5^3$. C °haṃ sa bhi°.

6. B anyā sakā tena ° bhūaṣi na°. — $7^2$. C °hetor eṣha° B °toḥ e°. — 8. B °bhūaṣi na kha°. — $9^2$. BC °hetor eṣha°. — $10^1$. C °kaharaḥ de°. — $10^2$. C °kaharo evam asyād anyo sā te° B °d anyaḥ sā te°.

$12^1$. BC °dharā tadā°. — $12^2$. BC °eshā na prārthayanti(C °nti) na i° C °kahanti ‖. — 15. C çrimahāvastuavadāne yaça°.

16. C °ne kaṃnyānāṃ ratnā viçrāṇantasya° B °sarve paçcā° BC °laṃkālehi C °viçrāṇantehi BC °ntehi rā°. — $17^1$. C rājño ça° B °danena amātya ā° C °mātyāṇattā ‖ B °tā ka°. — $17^2$. B °ta kaṃnyāye° C °cakshuṇi patanti ‖ B °tanti ku°. — 18. B °shṭvā cakshu nipatati tāyā cakshu ni° C °shṭvā cakshuṇi patitāyā cakshu° BC °tāā yo ku°. — 19. BC °ddhakā mahā° B °mūlyaṃ so hā° B °dinno sā°. — $20^1$. BC sārddhaṃ prasahanti°. — $20^2$. B imaṃ ahaṃ° C imaṃ aham ekatvaṃ āṇaham iti ‖ B °kaṃ āṇaham iti ‖.

अरहामीति ॥ कुमारेण महसत्वेन शतसहस्रमूल्या अंगुलिका अंगुलीतो ओमु-चियान दिन्ना ॥ एवं कुमारो रत्नानि कन्यानां विस्राणेत्वा राजकुलं प्रविष्टो ॥

राजा अमात्यान्पृच्छति ॥ कतमायां कन्यायां कुमारस्य चक्षु निपतितं ॥ अमात्या आहन्सुः ॥ सा महाराज महानामस्य शाक्यस्य यशोधरा नाम धीता । तत्र कुमारस्य चक्षु निपतितं ॥ राज्ञा महानामस्य प्रेषितं । यशोधरां धीतां मम पुत्रस्य देहि सर्वार्थसिद्धस्य कुमारस्य ॥ महानामो संदिशति राज्ञो शुद्धोदनस्य ॥ न शक्यामि यशोधरां कुमारस्य दातुं । यत्कारणं कुमारो अन्तःपुरे संवृद्धो न कहिंचिदागतो शिल्पे वा अश्वस्थे वा हस्तिस्कंधे वा धनुस्तस्कंधे वा राजशास्त्रेषु वा न कहिंचित्कुमारो गतिंगतः ॥ राज्ञो शुद्धोदनस्य श्रुत्वा दौर्मनस्यं जातं । एवमेतं यथा महानामो वदति । न मया कुमारो कहिंचि शिल्पे प्रेषितो अतिप्रेम्णेन ॥ सो दानिं राजा दुर्मना गृहं प्रविष्टो । कुमारेण दृष्टो पिता ॥ कुमारो पितरं पृच्छति । किं तातो दुर्मना ॥ राजा आह । भवतु पुत्र किं तवैतेन ॥ कुमारो आह ॥ न हि तात अवश्यं आचिक्षितव्यं ॥ राज्ञा कुमारं गुरुकं प्रेक्ष्य तेन भूयो भूयः पृच्छमानेन आचिक्षितं ॥ एवं चैवं च महानामेन शाक्येन आचिक्षितो तव अर्थेन यशोधरां याचयमानेन । तव पुत्रो अन्तःपुरसंवृद्धो न कहिंचि प्रेषितो शिल्पे वा अश्वस्थाने वा हस्तिस्कंधे वा रथस्कंधे [१२२ b] वा धनुस्कंधे वा । नाहं तस्य धीतां ददेहं ॥ कुमारो पि श्रुत्वा पितरमाह ॥ मा तातो उत्कण्ठतु । नगरजनपदे घोषणां कारापेहि कुमारो सप्तमे दिवसे दर्शनं दास्यतीति । यो तत्र

1. B °prasahantena° C °mūlyā aṃgulikā allinye omu°. — 2. BC °nāni kaṃnyā° C °viçrāmaṇetvā rājakuraṃ pra° B °shṭo rājā°. — 3¹. B °amātya nirgacchati ‖ C °amātyā nirgacchati | . — 3². C katamāyaṃ kanyā°. — 3³. BC amātya āha° C °hataḥ | . — 4. BC sa mahā° BC °dhitā tatra°. — 5¹. B °nipatantitaṃ | . — 5². C rājño ma° BC °shitā yaço°.
6. B °rājñā çu° C °rājño suddho° BC °nasya na ça°. — 7¹. BC °çakyāni ya°. — 7². C °ṇaṃ kuro a° BC °hpuraṃ saṃṛiddho° B °gato silpe° B °dhanuorasmiṃ° C °dhanupā orasmiṃ° B °ṭ kumārasya gatiṃgataḥ rā° C °ro gatiṃgato | . — 9¹. C rājā çu° B °rmanasya jātaṃ evaṃ a° C °jātaṃ yathā°. — 10. C °kahiṃva çilpaṃ çishito° B °çilpaṃ çeshito | atipremenā so dā°.
11². C °dṛishṭvo pitā ku° BC °pitā kumā°. — 11³. B °raṃ pṛipṛicchati | . — 12². C bhagavanta kutra kiṃ tavetena ‖ B bhavanta putra°. — 13¹. B °çyaṃ ācakala°. — 13². BC rājño kumāra(C °re)smiṃ guruko pra(B °pra)shya āna°. — 14. B °ācikshipto | tava° B °yāciyamānena tava°. — 15. C °antaḥpure saṃṛiddho° B °pura saṃṛiddho° C °dhanudhesmiṃ vā° B °nusmiṃ vā nāhaṃ°.
16. BC °dhitā da°. — 17¹. B °utkaṇṭhātu | . — 17². BC °ghoshaṇā kā° C °divase da° dāsyāmiti yo°. — 18. B °kshito | so ā° C °strajñāne vā ya° B °balāhu(?)kke vā ha° C °balāhu(?)kke vā ha° B °dhanusmiṃ vā dupavittarkeshu vā | C °pavitarke vā | A °pavittakeshu vā | .

शिक्षितो सो आगच्छतु यदि शिल्पज्ञाने यदि इष्वस्त्रज्ञाने युद्धे वा नियुद्धे वा छेद्ये वा भेद्ये वा जवे वा बलाकृष्टे वा हस्तिस्मिं वा अश्वस्मिं वा रथस्मिं वा धनुस्मिं वा चर्मस्मिं वा उपविलंघेषु वा ॥ राजा शुद्धोदनो श्रुत्वा प्रीतो संवृत्तो ॥ तेन नगरे कपिलवस्तुस्मिं जनपदे घोषणा कारापिता यथा कुमारो सप्तमं दिवसं दर्शनं दास्यतीति । यो तत्र शिक्षितो सो आगच्छतु यदि शिल्पज्ञाने यदि इष्वस्त्रज्ञाने ॥ अन्येहि पि अधिष्ठानेहि दूता प्रेषिता । शुद्धोदनस्य सर्वार्थसिद्धो कुमारो सप्तमं दिवसं दर्शनं दास्यति । यो तत्र शिक्षितो सो आगच्छतु ॥

ततो कपिलवस्तुतो जनकायो निर्धावति जनपदेष्वपि जनो आगच्छति । अन्येहि पि अधिष्ठानेहि कौतूहलजातः आगच्छति । शाक्यकुमाराणां विक्रमं पश्यामः बलपराक्रमं च कुमारस्य सर्वार्थसिद्धस्य पश्यामः ॥ तहिं अनेकायो जनसहस्रियो समागतायो कुमारा कपिलवस्तुतो निर्धावन्ति च ॥ अपरो पि श्रान्तो हस्तिनागो बहिर्नगरातो कपिलवस्तुं प्रविशति षष्टिहायनो परमेण स्थामेन च समन्वागतो । देवदत्तो च कपिलवस्तुतो तं दर्शनस्थानं निर्धावति हस्तिस्कन्धवरगतो । तस्य सो हस्तिनागः श्रान्तो अभिमुखो आपतितो । तेन कुपितेन देवदत्तेन सो हस्तिनागो षष्टिहायनो तलप्रहाराय एकाहतं कृत्वा तत्रैव नगरद्वारे निहतो । सो तं हस्तिनागं हत्वा निर्धावितो तं द्वारं ॥ तत्र महाजनकायस्य संपिण्डा सुन्दरनन्दो च कुमारो अनुप्राप्तो ॥ सो पृच्छति भो भणे किमिदं नगरद्वारे जनसंपिण्डा ॥ जनो आह ॥ देवदत्तेन निर्धावन्तेन एषो हस्तिनागो एकाये त-

3². C °kapilasmiṃ ja° B °ghoshaṇâ kârâpitâ yehi ku° C °pitâ | ye ku°. — 5. BC °echatu | yadi çi° C °çilpajñâna yadi çilpajñânam yadi i°.

6¹. C anyehiṃ pi adhiṭhânehi dû° B °adhiṭhâne dûtâ preshitâ ça°. — 6². C °nasya putro sarvâ °syatîti | . — 7. C °chatu yo sâ darçanakâmo âgachatu | . — 8¹. BC intercalent le passage suivant : tahiṃ anekajanasahasriyo sannipatitâyo(B °tâ | yo) kapilavastusmiṃ lumbiniye ca tatra kumâro darçanaṃ dâsyati | ete daça kroçâṃ tatra sapta tâlâh sapta tâlâ kroçântareṇa nikhata (C °nisharṇṇâ) saptânâṃ tâ(C °sâ)lânâṃ parato bherî ucchritâ (C °bheriṃ ucchritâh) (cf. p. suiv. l. 20) BC °vastuno janakâ° C °pada eâpi jano°. — 8². BC anyehi pi adhiṭhânehi kautûhalena jâ° C °jâtâ âga°. — 9. BC °vikhayaṃ paçyi(C °çyâmah bala-(B °h | varalpanâ °siddhasya parâkramaṃ paçyi°. — 10. C °nekayojanasaha° B °hasriyo sa° C °gato kumâ° BC °vastuno ni° B °riddhâvati ca | .

11. C °ito ca hastinâgo varhir na° B °lavastu praviçati | sha° BC °shashṭihâyano para° C °parameṇa ca sama° B °mâgato de°. — 13. BC °vastuno taṃ da °riddhâvati | ha° C °ndhavarato B °gato tasya°. — 14¹. C tasya ca so hastinâgo bhrâ° BC °âpatito | . — 14². C °prahârâye ekâhato kṛ° B °ekâhatye kṛ° C °tatreva na° BC °dvârehi hato so taṃ°.

16¹. BC °dvâraṃ tatra°. — 16². C °saṃpiṇḍa(?) su° prâpto pṛ° B °prâpto so pṛ°. — 17. BC °cchati ho bhaṇe ki(B kiṃ)syedaṃ° C °piṇḍâye janâ â° B °ṇḍâ ja°. — 18¹. C janâ âha | . — 18². C °hâraye mahatâ te° B °hato tena°.

तलप्रहाराये हतो । तेन हस्तिनागेन एवं नगर[193a]द्वारमोवद्धं न च तं देवदत्तो शक्नोति अतः नगरद्वारतो अपकर्षयितुं लंघयित्वा अतिक्रान्तो ॥ सो दानि हस्तिनागो सुन्दरनन्देन यानातो अवतरित्वा ततो द्वारतो सप्त पदां कड्ढितो । दृष्ट्वा महाजनकायेन हक्कारो मुक्तो । अहो कुमारस्य सुन्दरनन्दस्य उत्साहो ॥ सुन्दरनन्दो पि तं हस्तिनागं द्वारतो सप्त पदानि अपकर्षयित्वा अतिक्रान्तो ॥ बोधिसत्वो महता समृद्धीये अनुप्राप्तः ॥ बोधिसत्वो पृच्छति । किस्य एष नगरद्वारे महां जनकायसमागमो ॥ ते आहन्सु ॥ कुमार देवदत्तो न कपिलवस्तुतो निर्धावति धावन्तो च हस्तिनागो प्रविशति नगरद्वारं अभिमुखो देवदत्तस्य आपतितो । तेन कुपितेन सो हस्तिनागो एकाय तलप्रहाराये निहतो सो एषो हस्तिनागो नगरद्वारं ओरुन्धित्वा पतितो च । देवदत्तो न शक्नोति अतः नगरद्वारातो अपकर्षितुं लंघित्वा अतिक्रान्तो । सुन्दरनन्देन सप्त पदानि कड्ढितो । तदेव जनकायो संपिण्डाये कथं पि निर्धावति ॥ तेन कालेन तेन समयेन कपिलवस्तु सप्तहि प्राकारेहि परिक्षिप्तो अभूषि । बोधिसत्वेन यानातो अवतरित्वा मातापितृकेन बलेन तं हस्तिनागं अतो नगरातो तेषां सप्तानां प्राकाराणां परस्तरेण क्षिप्तो ॥ तं बोधिसत्वस्य उत्साहं दृष्ट्वा अनेकेहि देवमनुष्यसहस्रेहि हक्कारा मुक्ताः बोधिसत्वो पि निर्धावितो ॥ राजापि शुद्धोदनो शाक्यगणपरिवृतो महानामो पि शाक्यो निर्धावितो ॥

तहिं कुमारेण सर्वार्थसिद्धेन दर्शनो दिन्नः सर्वशिल्पकर्मायतनानि कुमारेण संदर्शिता । सिद्धार्थकुमारस्य न कोचित्समसमो तथा युद्धे वा नियुद्धे वा न कोचित्कुमारस्य समसमो ॥ पश्चिमे निदर्शने वाणा विध्यन्ति ॥ एते दश कोशा तत्र सप्त तालाः । सप्त ताला कोशान्तरेण स्थिहता सप्तानां तालानां पुरतो भेरी स्थो-

1. B °çaknoti ataḥ° C °tvā atyabhikrānto |. — 2. C °ritvā tataḥ dvārato sa° dāṁ kaṭṭito B °dāṁ kaṭṭito dṛ°. — 4¹. BC °janakāye hakkā° B °mukāro aho° C °muktaḥ aho°. — 4². BC °tsāho sunda°. — 5¹. C °sapta padāni° B °dāni apaṁkarshi° C °tvā atyabhikrānto |. — 6¹. C °samṛiddhiye anuprāpto ||.

6². B kiṁsya e° C °janakāyo samā°. — 7¹. C °āhaṁsuḥ |. — 7². C kumāro deva° BC °vastuto nirddhā° B °nāgo ca pravi° BC °dvāre abhi° B °sya āpatito tena°. — 9. BC °shitena taṁ hastinâgam ekā° C °stinâgo nâga° C °oruṁdhitvā° BC °tito ca de°. — 10. BC °çaknoti | ataḥ° C °laṁgayitvā atyabhikrānto | B °krānto sunda°.

11¹. B °nandattena sapta° C °nandas tena sapta° BC °ni kaṭṭito tad e°. — 11². C °aha janapadāni janakā° B °kāye sapiṇḍā° BC °kathaṁ vi ni°. — 13. C °yānāto atari° C °parastalena kshipto ||. — 15. C bodhi° °ri muktaḥ bo° BC °sto rājā°.

16. B °sivṛitā mahā°. — 18. C °dinno | sarva° B °rçitā si°. — 19. BC °sya na kvacit sa° C °niyuddhe° BC °ddhe vā na kvacit ku° samo pa°. — 20¹. C pachime nidarçanaṁ vāṇā° BC °dhyanti | tatra° (p. suiv. l. 1).

पृच्छति ॥ एतस्य यज्ञस्य किं फलं किं गुणनिर्वृत्ति । केदृशमेतेन यज्ञगुणं निर्वर्तयिष्यति इमं एत्तकं प्राणवधं कृत्वा ॥ राजा आह ॥ एते यत्तका प्राणजाती अत्र यज्ञे हनिष्यन्ति सर्वे स्वर्गं गमिष्यन्ति । अहं च यत्तका एते प्राणा एत्थ य[130b]ज्ञे हनिष्यन्ति तत्तकां वारां स्वर्गे उपपद्यामि ॥ कुमारो आह ॥ महाराज न एवं एतं मिथ्यादृष्टि एषा अहिंसा परमं धर्मं ॥ प्राणातिपातो अधर्मो प्राणातिपातवैरमणो धर्मो । अदिन्नादानो अधर्मो अदत्तादानवैरमणो धर्मो । कामेषु मिथ्याचारो अधर्मो कामेषु मिथ्याचारवैरमणो धर्मो । सुरामैरेयमद्यपानं अधर्मो सुरामैरेयमद्यपानातो वैरमणो धर्मो । मृषावादो अधर्मो मृषावादातो वैरमणो धर्मो । पिशुनवाचा अधर्मो पिशुनवाचातो वैरमणो धर्मो । संभिन्नप्रलापो अधर्मो संभिन्नप्रलापातो वैरमणो धर्मो । अभिध्या अधर्मो अभिध्यातो वैरमणो धर्मो । व्यापादो अधर्मो व्यापादातो वैरमणो धर्मो । मिथ्यादृष्टि अधर्मो सम्यग्दृष्टि धर्मो ॥ दश कुशला कर्मपथा धर्मो ॥ दशहि महाराज अकुशलेहि कर्मपथेहि समन्वागताः सत्वा नरकेषूपपद्यन्ति । दशहि कुशलेहि कर्मपथेहि समन्वागताः सत्वा स्वर्गेषूपपद्यन्ति ॥ तदेवं महाराजेन न एष स्वर्गाणां पथो गृहीतो नरकेषु गमनाय एष पथो गृहीतो ॥ एवं सुधनुस्य कुमारस्य धर्मदेशनां श्रुत्वा राजा सुचन्द्रिमो ते च सर्वे राजानो सर्वो महाजनकायो प्रीतो । तेन राज्ञा सुचन्द्रिमेण सुधनुस्य कुमारस्य धर्मदेशनां श्रुत्वा ते सर्वे प्राणकजातीयो जलचरा च स्थलचरा च ओसृष्टा ॥

1¹. B ettasya ya° guṇaṁ nivṛitti ‖ C °guṇaṁ kiṁ nivṛittiṁ | . — 1². C kena sadṛiçena tena ya° B kedṛiçenam ato° BC °ṇaṁ nivartayishyati | i°. — 2¹. B °jāti atra° C °hanishya sarve° BC °rve surga ga° C °mishyati | . — 3. B ahaṁ ca ettakā° C ahaṁ ca ete ettakā prā° BC °nā etthaṁ yajñe hanishyanti(C °shyati) | tatta° B °ttakā vārāṁ sva°. — 4¹. B °rājā na° C °shṭi enā ahiṁ°. — 5. B °ṇo dharmo a°.

6¹. BC adinnadāno° C °ṇo dharmaḥ | B °rmo kā°. — 6². BC kāmesu mithyā(C °thyāçā)ro adharmo(C °rmaḥ | ) vyāpādāto | (C °to) vaira° C °dharmaḥ | mithyādṛishṭi adharmo | mithyādṛishṭivairamaṇo dharmaḥ | B °dharmo mithyadṛishṭi adharmo surāmaireyamadyapānāto vai°. — 7. C °adharmaḥ su° C °dharmaḥ | . — 8. C °adharmaḥ mṛi° C °dharmaḥ | . — 9¹. C °adharmaḥ pi° C °dharmaḥ | . — 9². C °adharmaḥ saṁ° BC °ramaṇo dha° C °dharmaḥ | . — 10. C °adharmaḥ a° BC °ramaṇo dha° C °dharmaḥ.

11¹. C °adharma vyā° B °ṇo aramo | C °dharmaḥ | . — 11². BC °adharmo(C °rmaḥ) saṁmyagdṛishṭi dha° C °dharmaḥ | . — 12¹. BC daça ku° C °pathā adharmaḥ daça kuçalā karmapathā dharmaḥ | B °dharmā ‖ . — 12². B °tāḥ satvāṁ sa°. — 13. B °pathe sa°. — 14. BC tad etaṁ ma° C °jena naisha svargāṇāṁ pathe gṛi° pathe gṛi° B °ṇāṁ pathā gṛihī° hīto nalakeshu gamanāya esho patho gṛihīto ‖ . — 15. B °sudhanusya ku° saṁ çrutvā te sarve prāṇaka° C °no sarve mahāja°.

16. BC te ca rā° C °sudhanasya° B °sthalacarā ca dharmaṁ o° C °sthalacarā ca dharma o°.

मनोहरा किन्नरी सुधनुस्य कुमारस्य स्वाधीना । सर्वं च किन्नरभवनं मनसि न वर्तति सुधनुस्य प्रेमेण ॥ सुधनुस्यापि अन्या क्रीडारतीयो मनसि न वर्तन्ति मनोहराये प्रेमेण ॥ राज्ञापि सुचन्द्रिमेण यथा सुधनुना कुमारेण संदिष्टं तथा निर्गडं यज्ञं अनवद्यं ॥ अनेकानि श्रमणब्राह्मणकृपणवनीपकसहस्राणि अन्नपानेन सन्तर्पिताः आच्छादनेहि आच्छादिताः ॥ वृत्ते यज्ञे सुधनुकुमारो मनोहराये सार्धं हस्तिस्कन्धवरगतो महता परिवारेण महता समृद्धीये महता समुदयेन महता विभूषाये सिंहपुरातो हस्तिनापुरं गतो ॥

कुमारस्य हस्तिनापुरं प्रविशन्तस्य नगरं [131ᵃ] हस्तिनापुरं अलंकृतं विततवितानं चित्रदुस्यपरिक्षिप्तं ओसक्तपट्टदामकलापं सिक्तसंमृष्टं धूपितधूपनं मुक्तपुष्पावकीर्णं देशेदेशेषु नटनर्तकऋल्लमल्लपाणिस्वर्याकुम्भतूणिका ॥ एवं सुधनुकुमारो महता समृद्धीये महता समुदयेन मनोहराये सार्धं हस्तिस्कन्धवरगतो हस्तिनापुरं प्रविष्टो ॥ तेन कुमारेण सर्वा राजकन्या ओसृष्टा मनोहराये सार्धं क्रीडति च ॥ राज्ञो सुबाहुस्य षष्टीहि नगरसहस्रेहि कार्यसहस्राणि परिहायन्ति अनेकसहस्राणि निवर्तन्ति ॥ नैगमजानपदेहि राजा सुबाहु विज्ञप्तो । महाराज सुधनुकुमारो मनोहराये किन्नरीये प्रमत्तो अर्थार्थानि न समनुशासति राजकार्याणि परिहायन्ति षष्टीहि नगरसहस्रेहि अनेकसहस्राणि निवर्तन्ति ॥ राज्ञा सुबाहुना सुधनुकुमारो शब्दापितो ॥ पुत्र जानपदा ओरवन्ति । अर्थार्थानि न समनुशाससि यथापूर्वं मनोहराये किन्नरीये प्रमत्तो विहरसि विसर्जेहि पुत्र एतां किन्नरीं अनु-

1ᵃ. C °rā kiṁnarī° BC °sudhanasya ku°. — 1ᵇ. C °manasi vartati° B °vartiati | su° BC °dhanasya pre°. — 2. BC sudhanasyā° C °krīḍyāramaṇīratīye manasi vartanti° B °vartanti | mano° °meṇa rājñā°. — 3. C °drimena ya° BC °saṁdṛṣṭaṁ | ta° C °thā nigaḍaṁ°. — 4. B °brāhmakṛpaṇavaṇiyakasa° C °chādita vṛ° B °ditaḥ vṛ°. — 5. BC °sudhano ku° C °ndhavalagato° BC °mṛddhi(C °ddhīye mahatā parivāreṇa mahatā samu° B °dayena mahatā vibhū° C °bhūṣāyena siṁhapurā° °raṁ gataḥ |.

8. B °sya hastipuraṁ pra° C °nagaraṁ hastināpuram alaṁ° BC °oṣaktapaṭṭadāma° C °lāpasiktasaṁmṛṣṭā dhūpa° °lāpaṁ siktam saṁrjya dhūpi° C °sha naṭanartta° B °ṇanartakarā ṛ° BC °mbhatūṇa° B °ṇikā evaṁ°. — 10. C °dhanu kumā° °ddhaṁ hastikandhavalagato° B °ddhaṁ hastikandham avagato° praviṣṭho |.

12. B °sarva rāja° C °sarvāṁ rājakāṁ oṣṛ° C °ārddha krī° BC °date na rājño°. — 13. B °ṣaṣṭīhi° C °srehi kāyaṁ saha° BC °yanti(C °nti | ) anye ca sahasrāṇi varttanti | B °yanti anena ca sahasrāṇi nivartianti |. — 14ᵃ. C naikamanujānapadanegamānegamajānapadehi | rājā° B °hu vipto mahā°. — 14ᵇ. B °hāraja su° C °rīye pravṛtto | athā-thāne samu° B °arthāthāni na samu° BC °hāyanti | ṣa° B °ṣaṣṭihi na° C °nagarasahasre° B °sneyasahasrā niva° C °anekajanasahasrā niva°.

16. C °dhanukumā° BC °pito pu°. — 17ᵃ. BC putro jā°. — 17ᵇ. B arthāthāni° C athārthāni° B °śāsi | ya° BC °tto viharasi visa° C °sajjehi | putra etāṁ kinnarīṁ anujā° BC °nāhi taṁ ga°.

आगमाहि मां गमनाये ॥ सो कुमारो मनोहराये तृष्णाजालेन बद्धको न तामनुजानाति । पितरे पुनःपुनर्वदति । पुत्र विसर्जेहि एतां किन्नरीं अन्यानि ते राजकन्यानि यत्तकानि इच्छसि तत्तकानि आनयिष्यामि ॥ सो कुमारो पुनर्पुनः तेन पितुना उच्यन्तो न विसर्जयति ॥ अमात्या च पुनःपुनः राज्ञो सुबाहुस्य निवेदेन्ति ॥ महाराज सुधनुकुमारो मनोहराये किन्नरीये प्रमत्तो राजकार्याणि न करोति बहूनि राजकार्याणि परिहायन्ति ॥ राज्ञा च अमात्या आणत्ता उपरुन्धथ कुमारं ॥ सो अमात्येहि राजाणत्तीये उपरुद्धो ॥ उपरुद्धेन कुमारेण मुहूं निःश्रेयं संवृत्तं सर्वा लक्ष्मी चनरहिता । मनोहरा स्वयं सुबाहुना अनुज्ञाता निरति किन्नरनगरं गमनाय । मनोहरे गच्छ अनुज्ञातासि येन सुखानि शीतलानि वनानि मातापितॄणां सकाशं ॥

सा दानि सर्वालंकारविभूषिता ततः प्रासादतो ओतरिता । ताये ओतरन्तीये बहूनि स्त्रीसहस्राणि सुधनुस्य रोदन्ति मनोहराये शोकेन । हस्तिनापुरे जनपदस्य अन्तरं नास्ति वामदक्षिणेन हस्तेन मनोहराये हस्तिनापुरातो निष्क[131^b]-मन्तिये । वामदक्षिणातो अंजलिसहस्राणि प्रतीच्छमाना गन्धमाल्येन पूजियमाना स्त्रीसहस्रेहि बहुना च जनकायेन अनुगच्छियमाना सा दानि हस्तिनापुरातो निर्यात्वा जनकायस्य विसर्जनं कृत्वा उत्तरामुखं येन हिमवां पर्वतराजा तेन प्रयाता उपगच्छति च उत्तरामुखं येन च हस्तिनापुरं तेन सुधनुं अवलोकेति ॥ तहिं च अनुहिमवन्ते शतद्रुनदीकूले द्वे लुब्धकपुत्रा मृगव्यां चरन्ति । एको लुब्धकपुत्रो

1. C °rāye tṛṣṇājālenabbaddhake | na te anujānati | B °lena varddhako na taṁ anujānāti pi°. — 2¹. C °re punarpunar vadati B °vadati putra°. — 2². C °nnarīm anyā° B °kṣani | tatta°. — 3. C °rpunas tenāpi pi°. — 4. C °punarpunaḥ rā° BC °ḥ rājñā su°. — 5. C °dhanakumā° °jakāryyā pari° B °karonti bahuni rāja° C °riharanti | rājñā°.

6. B rājño ca a° C rājā ca a° B °rundha kumāraṁ ‖ . — 7¹. B °rājaṇattiye uruddho | C °rājā āṇattiye uparuṁdhaḥ uparuṁdhena°. — 7². C uparuṁdhena ku° haṁ niçreyaṁ B °haṁ niçreyaṁ saṁ° C °sarvaṁ lakṣhmī°. — 8. C °harā svayaṁ svayaṁ° C °nirati saṁ° B °haṁ niçreyaṁ saṁ° C °sarvāṁ lakshmī°. — 8. C °harā svayaṁ svayaṁ° C °nirati saṁ° B °nirati kinnaranagaraṁ°. — 9. B °jñātāsi ye° BC °lāni varāni sa° B °pitṛṇāṁ°.

11¹. BC sa dāni° C °bhūshitāḥ tato prā° B °taḥ prasā° BC °to ottaritā tā(B °to)°. — 11². B toshe ota° C °otaranti | bahū° B °bahuni stri° si | sudhanusya ro° C °dhanusyā-ntaḥpurasya ro° B °rāye | sokena hasti°. — 13. B °nishkramantiye vā° C °manti | . — 14. C yena vāma° BC °aṁjaliṁ saha° B °sahasrāṇi pū° BC °pūjayamā° °mānā | sā dāni° C °janakāyasya vi° trā uttaramukhena hima° param tena sudhanuṁ kumāraṁ avalokenti | B °dhanuṁ avalokenti tahiṁ°.

17. C °nte satadru° B °nte sadrūpe kule dve° C °putro mṛ° B °yāṁ avati | C °ayanti | . — 18. C °lako nama dvi° B °māṇavako°.



उत्पलको नाम द्वितीयो लुब्धकपुत्रो मालको नाम ॥ तेहि दृष्टा मनोहरा किन्नरी दूरतो आगच्छन्ती सर्वालंकारविभूषिता अक्षुद्रानुलेपना अम्लानगन्धमाल्या पुनर्पुनः पृष्ठतोमुखी अवलोकयन्ती आगच्छन्ती ॥ तेहि सा किन्नरी प्रत्यभिज्ञाता ॥ ते कृतांजलिपुटा अभिपतिता पृच्छन्ति ।

गच्छन्ति अवलोकेसि अवलोकेन्ति गच्छसि ।
किं भद्रे अवलोकेसि कहिं वा त्वं गमिष्यसि ॥

मनोहरा आह ॥

उभयं अभिप्रार्थेमि .... किंपुरुषनगरं ।
सुधनुं चावलोकेमि निरतिं चाभिप्रार्थये ॥

ते दानि लुब्धकपुत्रा आहंसु ॥

सुधनुस्य कुमारस्य कुरुपंचालेषु नारियो ।
ताहि सार्धं रममाणो न सो तुभ्यं स्मरिष्यति ॥

मनोहरा आह ॥

आनयिष्याम्यहं सुधनुं प्रेषितेन क्षितेन च ।
कोचिद्वृद्धो च मातंगो वशे एषो भविष्यति ॥

तावे तेषां लुब्धकपुत्राणां हस्ते शतसहस्रमूल्या च अंगुलिका दिन्ना तालीसमाला च । यदि मम पृष्ठतो सुधनुकुमारो आगच्छेय मम मार्गमाणो इमं अभिज्ञानं दास्यथ मम वचना अभिवादनं पृच्छेयाथ । वक्तव्यो । इतो एवं निवर्ताहि दुर्गमो

1. BC °dṛishṭvā ma° B °cchanti sarvālaṁkārabhūshitā | adrāsule° C °shitāḥ a° B °amlānagaṁdhamālyā° C °punaḥ punaḥ pṛi° khi avalokayante āga°. — 3. C °jñātaḥ B °jñātā te kṛi°. — 4. B °jaliṁpūtā praṇi° C °praṇipatitā pṛichanti ava° B °nti ga°. — 5. C avalokenti avaloke gachanti kiṁ° B gacchanti avaloke avalokenti gacchati | .

8. C ubhayeṁ abhiprā° BC °rthemi(C °si) kiṁpurusha°. — 9. BC sudhanaṁ cāva° C °lokesi niratiṁ nāma nagara cābhiprārthayet | B °niratiṁ cābhiprārthayet || . — 10. C °putra āhaṁsuḥ | .

11. B sudhanasya kumārapañcā° C sudhanasya kurūpañcāreshu nāriyo°. — 12. B sa tāhi° C so dāni sārdhaṁ ramamāṇo tumhyaṁ smarashyanti | B °smaranti || . — 13. C °shyām ahaṁ sudhanaṁ prahitenāsmiṁ tena ca kaṁcid vṛi° B °sudhanu prekshitena smiñitena ca kaṁ°. — 15. B kañcid vora mātāṅgā vaçam esho bha° C °ddho ca mātaṁgo vaçam esho bha°.

16. C °mūlyāṅgulikā di° BC °dinnāḥ tāli° C °samārā ca | . — 17. BC °sudhanakumāro° C °rgamāṇoñhasya imaṁ° BC °jñānaṁ dā° B °dāsya mama va° C °pṛicheyatha. — 18¹. C uktayo ito°. — 18². B °evaṁ vivartā° C °evaṁ vivattāhi darganne paratahi tena mama° B °paratena mama°.

परतरेण मनुष्याणां । नियतो मे मनुष्याणां विनाभावः ॥ एवं लुब्धकपुत्राणां संदिशित्वा मनोहरा अस्पृशन्ती पादतलेहि उदकं शतद्रुनदीं तीर्णा ॥

राज्ञा सुबाहुना यं कालं जानाति गता मनोहरा इति ततो सुधनुकुमारो आनायितो उत्सङ्गे उपविशापितो पितरे पि मातरे पि ॥ मा पुत्र किंनरीमनुस्मराहि विस्तीर्णो ते अन्तःपुरो बहूनि कन्यासहस्राणि अपराणि ते आनायेष्यं । ताहि सार्धं क्रीडाहि रमाहि परिचारेहि किं ते किंनरीये त्वं मानुषो ॥ राजा कुमारं चाश्वासयति अमात्या च आयत्ता । कुमारस्य गृहं अलंकारापेथ ॥ [132a] अन्तःपुरस्य संदिष्टं । सुष्ठु कुमारं अभिरमापेथ यथा कुमारो मनोहरां न समनुस्मरेय ॥ राज्ञो वचनमात्रेण कुमारस्य गृहं यथा दिव्यं विमानं तथा अलंकृतं सर्वसंस्थितं ॥ सप्तसु द्वारशालासु सुवर्णघटानि स्थापितानि अक्षतानि स्थापितानि यानि अन्यान्यपि लोकस्य मंगलसंमतानि सर्वाणि स्थापितानि ॥ ब्राह्मणसहस्रियो कुमारस्य द्वारे उपस्थापितानि तथान्यो पि जनकायो कुमारं प्रतिपालयन्तो ॥ कुमारो पि पितरा समाश्वासित्वा विसर्जितो । गच्छ गृहं उपसेवेहि ताहि विलिम्पाहि कामाल्याभरणो क्रीडाहि रमाहि प्रविचारेहि राजकार्याणि च समनुशासेहि ॥ एवं संदिशित्वा पितरे कुमारो सुधनु विसर्जितः ॥

सो दानि राजकुलातो निर्यात्वा सार्धं वसन्तकेन एकिना परिचारकेन भावामुरकेन हस्तिनापुरातो नगरातो निर्यात्वा येन हिमवन्तपर्वतराजा तेन प्रक्रान्तो मनोहराये पर्याये ॥ कुमारस्य तानि पैतृकानि षष्टिनगरसहस्राणि स्फीतानि

1¹. C nijaro me tena manu ° bhāvo | B °to me mayāvinābhāvaḥ evaṁ°. — 1². B °trāṇāṁ saṁ° BC °drunadīrṇṇāṁ rājñā°. — 3. B °hunāṁ yaṁ kā ° rā iti | tato° C °tataḥ su° B °ānāyito utsaṅge u° BC °tare pi mā pu°. — 4. C °nnaro pi anusmare pi hi vistīrṇṇo antaḥpure bahū° B °antapuro° BC °hūni kanyā° C °rāni te anāpe° B °rāṇi te anāpe°. — 5. BC tehi sā° C °sārddha krī° B °parivārehi kinnarīye | tvaṁ° BC °mānushī rā°.

6. BC rāja kumāraṁ vā(C °cā)svāsati a ° yattā ku°. — 7. B °laṁkārāye antaḥ° C °laṁkāpetha. — 8¹. C °hpurasyāpi saṁ° BC °saṁdṛṣṭaṁ su°. — 8². BC °petha | yathā°. — 9. C °divyavimā ° kṛtaṁ | antaḥpurikāpihi ātmanaṁ alaṁkṛitaṁ sarvasaṁginaṁ B °jñinaṁ sapta°. — 10. B °dvāraçālā° C °çālāsu suvarṇṇaghaṭāni sthāpitāni yāni akhātāni sthāpitāni anyāni lo° B °yāni anyāto api lo° C °kasya maṁgalasammatāni sarvā° B °galasammatāni sarvā ° tāni brā°.

11. BC °pitāni | tathā° C °thānye pi janakāya ku ° tipālayanto B °nto ku°. — 13¹. BC °ro pi pitaraṁ samā° C °māsvāsi visa° B °māsvāsitvā jarjito ga°. — 13². BC °haṁ | sevehi° C °kāmamālyābharaṇo° C °rājakāryāṇi ca sa° B °çāsehi |. — 15. B °sudhano visa° C °rjjito |.

16. C °parivārakena bhā° C °himavāṁ parva°. — 18. B °shashṭiṁ na° C °shashṭhi na ° stīrṇṇāntaḥpu° B °stīrṇṇaṁ anta°.

अनिलगुञ्जनपदानि विस्तीर्णं च अन्तःपुरं मनसि न वर्तति । मनोहरामेव किंनरीं शोचति समनुस्मरति ॥

राज्यं राष्ट्रपरिदेववीचणकालेन तनद्दा सर्वं ।
अपविध्यियान प्रक्रमि अधीतमलिनं पटं गृह्य ॥
अनुरक्तभक्तिभावं चैकं परिचारकं गृहीत्वान ।
पर्वतराजाभिमुखो सो हिमवन्तमभिप्रसरेसि ॥
अचिरेण गतो सुधनु हिमवन्तं रम्यपर्वतनितम्बं ।
तत्राद्दशासि लुब्धकां उप्पलकं मालकं चैव ॥
पश्यति च गङ्गनदीं शुचिविमलस्फटिकनिकाशां सततं ।
. . . . . . . . . . . . . . . . . . . . . . . . . .
शुभा सुशीतलतोया प्रस्यन्दमाना मृदुतरुणानुजाता ।
सा शाद्वला प्रमुदिता वहन्ति अर्घाह्णियो शतद्रू ॥
सुधनू उवाच कांचिल्लुब्धका श्यामां अपुद्गानुलेपनां ।
नारीं अभिम्लानगन्धमाल्यां विक्रमन्तिं अपश्यथ ॥
अवोच लुब्धकपुत्रा यादृशीं त्वं पृच्छसि सा इतो चिरं ।
उत्तीर्य नदीं गता सा एतेन कालेन हिमवन्तं ॥
प्रव्याहृतं हि ताये सुधनुर्नामेन पृष्टतो मह्यं ।

1. C °m evaṃ ki° B °anarī ça°. — 3. B rājaparidevavīkshaṇena kālo° C rājaṃ ridevavicakshaṇena kālena taṃ tadā° BC °sarvaṃ apa°. — 4. B °kramī | adhau° C aparijmi(?)yāna prakrāmi | adhautamalinaṃ pa° B °dhautamalinaṃ pa° °hya ann°. — 5. BC °bhāvaṃ ca ekaṃ pa° C °parivārakaṃ gṛhitvāna B °tvāna parva°.

6. BC °kho hima°. — 7. C °m gaṃm ābhasantāni nānāpra° (p. 106, 5; je remplace ici C par M) B °sudhanu hi° M °dhanukumāraṃ hi° ° ramaṇīṃ nitambaṃ B °mbaṃ tatrā°. — 8. BM °ddarçāsi lubdhako u° M °utpalakaṃ mālakaṃ caivaṃ° B °ppalako malakaṃ cai° BM °carva(M °vaṃ) sudha° (B et M placent ici la strophe des lignes 13-14). — 9. BM °çanakaṃ nadīṃ(M °dīṃ) çuci° kāçāṃ viprasannā satataṃ | çubha°.

11. BM çubhaṃ ° toyā syanda° B °mānāṃ mṛdu° BM °sujātā sādva(M °dalā pra°. — 12. BM sādva(M°da)lā pra° B °lito vaha° M °lita vahati akshiṇyo ça° B °vahati akshoṇyo çatadrū devasa° (l. 15) M °çatadru nadīṃ devaça° (l. 15). — 13. B sudhanu dve lubdhakaputrān uvāca kaçcilla° M sudhanukumāro dve lubdhakaputrān uvāca | kaçcillu° BM °lubdhaka çyāmā akshīṇā(B °ade)nulepana(M. °nā) nārī āmi°. — 14. BM nārī āmi° M °lānagandhamālyā abhikrama° B °mālyā vi° BM °manti apaçyatha | paçya°. — 15. M °putro yādṛçī tvaṃ° B °cchasi | sa ito cira çatadruṃ nadīṃ | gatā° M °sā yito cira çatādruṃ nadīṃ°.

16. BM °mavantaṃ pra°. — 17. M pratyāhṛ° B °taṃ | hi° M °dhanu kumāro nāmena pṛshṭato° B °hyaṃ yadi°.

यदि एष्यति लुब्धकपुत्रा दाश्याथ इमं अभिज्ञानं ॥
इममङ्गुलीयकं मम इमां च तालीसगन्धिकां मालां ।
दाश्याथ लुब्धकपुत्रा भर्ता मम स्वामिकस्या[130b]मि ॥
अभिवादनं च लुब्धका मम वचना स्वामिकं भणेयाथ ।
प्रतिगच्छ हस्तिनापुरं नियतो नियमो विनाभावो ॥
प्रत्ययदेहि मालां आलम्बेसि मुद्रिकां प्रमोदन्तो ।
अपि मरणं अभ्युपेमि मनोहराये व समागमं ॥
ते तं भणन्ति लुब्धका सुधनु इतो एव त्वं निवर्तेहि ।
हस्तिनापुरम्हि नगरे त्वा तुह्यमसुखं वर्तेया ॥
तं तस्य नैव हृदये भापि च तेषां शृणोति सो वचनं ।
गन्तुं येवाध्यवसितो प्रतट्ठं च महानदीं तीर्णो ॥
लुब्धका पि ते व्यवसिता राजामर्षौ भवेया अस्माकं ।
यदि सुधनुमेवंरूपे व्यसने परित्यजेयामः ॥
अवतीर्णा ते पि नदिं व्याघ्रगणसिंहवारणसंघोषां ।
मृगविहंगमानुयातां मनोरमां च चक्रवाककलां ॥
तालतन्त्रीण तीर्णा महानदीं हंससारसाभिरुतां ।
व्यालेहि किन्नरेहि च प्रपातशालां सुरमणीयां ॥

तत्र दानि कुमारो च वसन्तको च परिचारको उत्पलको च लुब्धकपुत्रो मालको च लुब्धकपुत्रो एवंकृताध्यवसाया मनोहराये पदेहि हिमवन्तं पर्वतराजं प्रविशन्ति ॥

1. B yadi esha tu° M yadi evaṁ tu ° trā açvatha i° B °trā danyathā | ° maṁ imam a°. — 2. B °ṅgulīyakaṁ° BM °mālāṁ dadyatha | lubdha°. — 3. M °bdhakaputro gattā mama° B °trā gatto mama°. — 4. B anivādanaṁ° BM °bdhakaputrā mama°. — 5. BM °raṁ niryāto niyame vinā°.
6. M °lāṁ ālambya mu° B °mbesu mu°. — 7. BM °raṇaṁ abhya° B °pemi | ma° BM °rāya vā samā° B °gamam te bhaṇa° M °gamaṁ tato nti bhaṇa°. — 8. BM te bhaṇanti | lubdhaka su° B °dhanu ito° M °dhanakumāraṁ ito evaṁ tvaṁ° BM °rtehi hasti°. — 9. BM °puresmiṁ° B °tuhyaṁ abhinnaṁ vartteyā taṁ ta° M °tuhyam abhinna vartteyā. — 10. BM °çṛṇoti vacanaṁ ||.
11. B °yevadhyāvasito° BM °sito saharṣā ca mahā° B °nadi tī° M °tīrṇṇaḥ. — 12. BM °kā pi vyava° B °vyavasitā rājā patham bha° M °jā pathaṁ bha° B °vayā | asmākaṁ yadi°. — 13. M °sudhanakumāram evaṁrūpe byayenas...ṁ pa° B °rūpe bhyayenasmiṁ pa°. — 14. BM °tīrṇṇo pi te pi nadiṁ(M °dī) vyā°. — 15. BM mṛgavigamo so (M °sā) nuyātāṁ°.
16. B tāntakabhaṇena° M °dīm haṁsasāra°. — 17. B ahvāle kinna° M vyāle kinna° BM °ra prapāta°. — 18. M °māro vasanta° BM °paricārako | u° BM °mā(B māla)ko(M °lavako) ca lubdhakaputro sarvakṛtyaça(M °va)sāyo mano° M °pravisanti | B °çanti mano°.

मनोहराणि नानावर्णानि वरकुसुमानि ओलम्बमानानि आबन्धमाना गच्छति ॥ ते दानि कुसुमानि पश्चा दृष्ट्वा अनुगच्छन्ति । इह विश्रमित्वा श्यामा इतो गता ॥ इह मुहूर्तमात्रं अयनस्था पुष्पनिकरं इह कृतानि शुभमालानि निर्माल्यकानि चास्या वरकुसुमकर्णपूरधारिणीये देशेदेशे पश्यन्ति जानन्ति इतो गता श्यामा एवन्ते गच्छन्ति । आभरणानि नानाप्रकाराणि पथे पतितानि पश्यन्ति वनशाखेषु लग्नानि पश्यन्ति अन्यानि च चिह्नानि पश्यन्ति ॥ यथायथा च हिमवन्तं अनुप्रविशन्ति तथातथा बहूनि रत्नरत्नानि पश्यन्ति ॥ सुवर्णशृंगाणि पर्वतानि पश्यन्ति रूप्यशृंगाणि पश्यन्ति लोहकाराणि पश्यन्ति ताम्रकाराणि पश्यन्ति आरकूटकाराणि पश्यन्ति यशदशृंगाणि पश्यन्ति अंजनपर्वतानि पश्यन्ति मनशिलपर्वतानि पश्यन्ति । किन्नरमिथुनानि क्रीडन्तानि पश्यन्ति । अन्यानि बहूनि आश्चर्याद्भुतशतानि पश्यन्ति । देशेदेशे किन्नरीगीतशब्दानि शृण्वन्ति सिंहनादशब्दानि च शृण्वन्ति शार्दूलना[133a]दशब्दानि च शृण्वन्ति । अच्छभल्लनादानि च शृण्वन्ति । मृगरुतानि च नानावर्णानि शृण्वन्ति । चमराचमरुतानि च शृण्वन्ति । पिशाचकुम्भाण्डरुतानि शृण्वन्ति ॥ नानाप्रकाराणि च ओषधीसहस्राणि पश्यन्ति विद्याधराणि च पश्यन्ति ॥

तेहि गच्छन्तेहि काश्यपस्य ऋषिस्य आश्रमं दृष्टं बहुमूलपत्रपुष्पफलोपेतं वृक्षसहस्रसंकुलं पानीयसंपन्नं च ॥ ते दानि तहिं आश्रमे प्रविष्टाः पश्यन्ति च तत्र आश्रमे काश्यपं ऋषिं वृद्धं महाभागं सपरिवारं आसन्नं ॥ ते दानि ऋषिस्य अभि-

1. B °rṇṇāni ca raktakusu° BM °alambamā° M °ābaddhamānāni ga° B °ābandhamānā gacchanti | . — 2¹. BM °paccha dṛ° B °nti iti viçra°. — 2². M iti viçra° BM °tvā çyāma ito gato gatāḥ | (B °tā) iha°. — 3. B °hūrtta dāni aya° M °hūrttakaṁ dāni aya° ha kṛtāye çu° B °kṛtāya çubhamālāni dālpakāni cā° M °lanirdālpakāni ca° BM °cāsya vara° M °sapakarṇṇa° BM °rṇṇapuradhāriṇī deçadeçe paçyati jā° B °cchante | M °cchantaṁ | . — 5. M °ṇāni nāpra° BC °gnāni lagna(C °gnaṁ) paçya° B °nti | anyāni vaçcāṁhnāni° C °nyāni ca ciṁhnāni°.

6. C °vantaparvatam anupra°. — 7. C °çṛiṁgāni paçyanti loha° B °rvatāni paçyanti | rūpya °lakārāni paçyanti tāmra° BC °tāmrakārāni(C °kālāni) paçyanti hārakūṭakā(C °hārakūṭāgā)rāṇi paçyanti || ye gantuṁ çṛiṅgāni° (L °nti sṛçatāngaçṛiṅgāni° C °nti | uttaṅgaçṛiṁgāni) paçyanti añja(C °añja)naparvatāni paçyanti manaçila(C °nti | manaçilāçṛiṁga)-parvatāni paçyanti | . — 10¹. B kiṁnara°. — 10². B °bahū āçca°.

11. B °gītaçabdāni çṛiṇānti siṁhanādaçabdāni ca çṛiṇānti çārdūlanādaça° C °siṁhanādaçabdāni ca çṛi° lanādaçabdāni çṛi°. — 12¹. C °bhallanādāni°. — 13². BC piçaçaku°. — 14. B °dharāṇi ca paçyanti ca tehi°.

16. B °paçya çṛiṣya āçra° C °vṛikshasahasraṁcha° BC °pānīyasaṁpannaṁ ca te dā°. — 17. BC °āçramaṁ pra° C °viṣṭāḥ praviçanti ca | ta° B °ṣṭāḥ praviçanti ca | ta° C °paṁ çāma ṛiṣiṁ° BC °āsantaṁ | . — 18. C °ṣṭitāḥ | B °ṣṭitā ṛiṣisya°.

वाद्नं कृत्वा सपरिवारस्य अयतो स्थिता ॥ ऋषिस्य भवति ॥ महात्मना इमेन कुमारेण भवितव्यं कृतपुण्येन पुण्यवन्तेन यो एषो इमं आश्रमं प्रविष्टः । प्रदेशो न चैमेणानुप्राप्तो ॥ तेन कुमारो अभिनन्दितो ॥ स्वागतं कुमारस्य निषीदाहि । एतानि शिबिकानि ॥ कुमारो निषण्णो सपरिवारो । ऋषिणा चुद्रमधुमधुराणि फलानि आप्रीपितानि पानीयं च ॥ यत्र वेलां कुमारेण फला परिभुक्तानि पानीयं च पीतं ततो नं सो ऋषि पृच्छति ॥ किं कुमारस्य सुखसंवृद्धस्य इमाहिं आगमनप्रयोजनं ॥ कुमारो आह ॥ काचित्ते भगवं एवंरूपा नारी अतिक्रमन्ती दृष्टेति ॥ ऋषि आह ॥ आम दृष्टा अज्ञोना सा इमं आश्रमं मम पादौ वन्दित्वा गिरिवरस्य अनुतटेहि गता । तत्कुमारो इतो एवं आश्रमातो निवर्ततु । दुष्करं कुमारेण कृतं इमं तावत्प्रदेशं गच्छन्तेन किं पुन अतो परतरेण गतेन अगमनं मनुष्याणां इतो एवं निवर्ताहि ॥ कुमारो आह ॥ न शक्यामि भगवन्निवर्तितुं । या तस्या मनोहराये गति सा मम येनैव मार्गेण गता तेनैवाहं गमिष्यामि ॥ ऋषि आह ॥ अन्या किन्नरीणां गतिः अन्या मनुष्याणां । पक्षी पि किन्नराणां गतिं न संभुणन्ति कुतो मनुष्या । पक्षी पि तं प्रदेशं कथं विप्रगच्छन्ति । किन्नरा यत्र नच्छन्ति मोदमाना रतिविहारं समनुभोन्तो अगमनं कुमार मनुष्याणां पर्थेहि । इतो एवमाश्रमातो निवर्ताहि ॥ पिता ते षष्टीनां नगरसहस्राणां ईश्वरो [133b] ननु उदारेहि परिभोगेहि कुमारेण क्रीडितव्यं रमितव्यं अनुभवितव्यं एतं अगम्यं देशं न शक्यसि गन्तुं ॥ कुमारो आह ॥ भगवं मरणं वा मा वा पश्चितव्या ॥

1². B °punyuna pu° C °ntena | ya eshâ imam âçramâm prade° B °vishṭâḥ prade°. — 2. BC pradeçam kahe° C °menânuprâptaḥ ‖ . — 3¹. BC °ndito svâ°. — 3². C °rasya anurâgam kumârasya ni°. — 4¹. B etâni viçikâni ku°. — 4². B °sharṇne sa° C °sharṇṇâ sa° B °vâro ṛi°. — 4³. C °dramadhumadhu° B °phullâni a° C °allidhitâni°. — 5. C °velâ ku° tam | tato tam so ṛishi kumâram pṛcchati | B tato na so ṛi° cchati kim ku°.

6. B °imâhi â° C °imamhi â° BC °gamanam pra°. — 7². C kâçcitte bhagavantevam rû° BC °rûpayâ nâ° C °nârim ati°. — 8². C âma dṛishṭvâ allinâ mâ i° B °dṛishṭhâ a° C°çramam ma pâdâ vandi° sya anunadâhi gatâḥ B °sya anadhâ(sa ṭâ ?)hi gatâ tat ku°. — 9². C °tâvan pradeçam° B °cchanta | kim° C °cchantam | kim punar ato° BC °paratena gatena(B °na | ) aga° C °itaḥ eva° B °evam niva°.

11². C °gavam niva°. — 11³. BC °tasya ma° B °gati | sâ° C °gatiḥ sâ mamayenaivam mâ °naivam aham°. — 12. C ṛishir âha ‖ . — 13². C anyâni ki° BC °tiḥ amanushyâṇâm pa°. — 13³. C pakshi pi ki° çâm gatiḥ na sam° BC °ṇanti | ku° shyâ pakshi°. — 14¹. B °pravaçam° C °dgachati ki°. — 15². BC °rativiraha samanubhonto âgamanta(C °nto) ku° shyâṇâm a(C °nâm a)rthehi ito°.

16². C °evam âçra°. — 16³. C pitâs te sha° BC °shashṭhinâm° B °parigogehi ku° dîrgamidavyam a° BC °nubhajita° etam âgamam deçam na çakyâmi gantum ‖ . — 18². C bhagavam ma° tavyo.

ऋषि महाभागो महामैत्रीविहारी कारुणिको । तस्य भवति ॥ मे कुमारस्य अगम्यं देशं गच्छन्तस्य शरीरविनाशो भवेया ॥ सो ऋषि आह ॥ कुमार इमां रात्रिं इह आश्रमे वीतिनामेहि याव इह उद्देशे वानरा प्रतिवसन्ति । यो तेषां यूथपति सो मम अभिप्रसन्नो नित्यकालं मम पादवन्दो आगच्छति चुद्रमधुसदृशानि फलानि आदाय । तमहं वानरराजं अध्येषिष्यं । सो तव द्रुमस्य किंनरराज्ञो निरति नाम किंनरनगरं नेष्यति ॥ कुमारो ऋषिस्य वचनेन तहिं आश्रमे तां रात्रिं स्थितो रात्रिये च प्रभाताये कुमारो सिंहस्य च घोसरन्तस्य शब्दं शृणोति । कुमारो ऋषिकुमाराणां पृच्छति । कस्य एष घोसरणशब्दो ॥ ऋषिकुमारो आह ॥ एवं वानराधिपतिस्य घोसरन्तस्य शब्दो नित्यं एषो इह वेलाये चुद्रमधुसदृशानि फलानि आदाय तं घोसरन्तो द्रुमात् द्रुमं संक्रमन्तो अस्माकमुपाध्यायस्य पादवन्दो आगच्छति ॥ तदानि कौतूहलेन उत्थाय यतो तं वानरस्य घोसरन्तस्य शब्दं ततः निध्यायति । तेन सो वानरराजा दृष्टो द्रुमातो द्रुमं संक्रमन्तो आगच्छन्तो ॥ सो वानरराजा तं आश्रममागत्वा चुद्रमधुसदृशानि फलानि ऋषिस्य पुरतो निक्षिपित्वा निषण्णो ॥ ऋषि आह ॥ वानरराज करोहि मे व्यापारं ॥ वानरराजा आह ॥ भगवं करिष्यामि । आणपेहि ॥ ऋषि आह ॥ इमं कुमारं आत्मना चतुर्थं द्रुमस्य किंनरराज्ञो निरतिं नाम किंनरनगरं तहिं नेहि ॥ वानरो आह ॥ भगवन्नेमि ॥

सो दानि वानराधिपति ततो एव आश्रमातो आत्मना चतुर्थं कुमारं पृष्ठं आरोहयित्वा पर्वतानां शृङ्गतो शृङ्गं संक्रमन्तो द्रुमातो द्रुमं नचिरस्यैव द्रुमस्य किंन-

1[1]. C °shi mâhâbhâgo° B °ṇiko tasya°. — 1[2]. BC so kamâ°. — 2[2]. B °me vinâmehi | yâ° C virâ(ou nâ?)mehi | yâ° C °iha udeçe C °praviçanti. — 3. C °so mamâbhipra ° kâraṁ | mama° B °davanto âgacchati || kaho ° dâya tam a°. — 5[1]. C °rarâjâ adhye° B °rarâja adhyeshishyaṁ so tava°. — 5[2]. C °shyanti | .

6. C °sthitaḥ râtriṁ ca pra° B °sthi râtriṁ ca prabhâtâ ku° BC °mâro ca siṁhasya ca osa° C °çrinoti | . — 8[1]. BC kasya esha te saraṇa(C °çaraṇa)çabdo || . — 9. C °nityataṭo nidhyâyati | esho° C °ranto drumâ drumaṁ saṁ° BC °ntanto | asmâ° C °dasandanto âga°.

11. B °utthitâye tato taṁ vâ° C °utthitâya tato taṁ vâ° BC °çabdo tataḥ°. — 12[1]. BC tehi so° C °drishṭvo drumâ° B °echanto so vâ°. — 12[2]. C °purataḥ nikshipitvâ pâdâ vanditvâ nishaṇṇo || B °shaṇṇo || . — 13[1]. BC °râjâ karo°. — 15[1]. C bhagavan kari°. — 15[2]. BC °tmanâ ca catu° C °çya kiṁnararâ ° raṁ tarhaṁ neti | B °nehiṁ || .

17. C bhagavân nesi | . — 18. C °evam âçra ° turtha ca kumâraṁ prishṭham ârohayitvâ° B °shṭhaṁ ârohayitvâ° C °nâṁ çriṅgâto çriṅgaṁ° C °mâto drumanto na° B °maṁ te nari° C °syaivaṁ drumasya kiṁnara° B °nnaranarâjño° BC °kailâçasya° B °mâriddhnam anu° C °mâriddhnâm samprâptaḥ | B °pto paçya°.

च नगरं प्रीतं तथैव एदृशो आमोदः ॥ सुधनु पृच्छति ॥ कहिं उदकं इमं नीयति ॥ आहन्सु ॥ सा मनोहरा स्नापयिष्यति । तस्या मनुष्यगन्धमपनयिष्यति ॥ तेन कुमारेण अंगुलीयका पश्चिमे उदकघटे प्रक्षिप्ता यथा ताहि किन्नरीहि न दृष्टा ॥ मनोहरा स्नायति च अंगुलीयका स्नायन्तीये ततो घटकातो उत्सङ्गे पतिता ॥ मनोहराये सा अंगुलीयका दृष्टा परिज्ञाता । ताये एतदभूषि । सुधनुकुमारः आगतो मम अर्थाय । सुकुमारो राजपुत्रो कथं सो इमामगम्यां दिशामागतो ॥ सा दानि त्वरितत्वरिता वस्त्राणि प्रावरित्वा अश्रुकण्ठा अश्रुमुखा मातापितृणां प्रणिपतित्वा आह ॥ [134b] यो मम जम्बुद्वीपे भर्ता सो आगतो सुधनु नाम राजपुत्रो सुबाहुस्य राज्ञो एकपुत्रो ॥ द्रुमो किन्नरराजा न पत्तीयति । पुनि न शक्यं मानुषेहि इमां दिशामागन्तुं ॥ मनोहरा आह ॥ न हि तात अयुक्तमागतो ॥ द्रुमो किन्नरराजा पृच्छति ॥ किं त्वया स्वयं दृष्टो उताहो परतो श्रुतो ति ॥ सा आह ॥ न मे स्वयं दृष्टो नापि परतो श्रुतो अपि मे स्नापयन्तीये सुधनुस्य अंगुलीयका उत्सङ्गे पतिता ॥

द्रुमेण किन्नरराज्ञा उदकहारीयो शब्दापितायो । ता दानि शब्दापिय पृच्छीयन्ति ॥ कश्चिद्वो उदकहारिं गताहि पुरुषो दृष्टो ॥ ता आहन्सुः ॥ महाराज दृष्टो किन्नरकुमारः प्रासादिको दर्शनीयो आत्मना चतुर्थो पुष्करिणीये कूले ॥ तस्य भवति ॥ सो एषमेषो कुमारो मनोहराये ति । कथं सो शक्नोति इमां दिशामागन्तुं ॥ सो दानि तां धीतरं पृच्छति ॥ मनोहरे प्रविशतु सुधनु राजकुमारो इमं राजकुलं ॥ सा आह ॥ तात प्रविशतु ॥ सो इह मम प्रेमेण आगतो

1[1]. C sudhanukumāro pṛ°. — 2[1]. B āhansu sā ma° C āhatsuḥ sā°. — 2[2]. C tasya ma° B °ndham ayenayiṣyati | C °ndham ayenalipyati | . — 3. B °aṃguliyakā paçyime° C °liyakā paçyimaḥ u ° kṣiptāḥ | ya° B °kṣipto ya ° nnarina dṛ° BC °dṛṣṭvā ma°. — 4. B °aṃguliyakā snāyatiye | tato° C °liye snāyatiye | tataḥ gha ° utsaṅge pa° BC °titā ma°. — 5[1]. C °rāye sā aṅguli° C °jñātāyaita° B °tā tāye°. — 5[2]. B °ṣhi su°. — 5[3]. C sudhanukumāro ā° BC °rthāya su°.

6. B sudhanukumā° B °ro āgato sā dā°. — 7. B °tatvaritvā va° C °ritaṃ va° BC °aśrumukhaṃ mā°. — 8. C °dhanu nāma rā ° sya rājñaḥ e°. — 9. B °rarājā patipātiyati | . — 10[1]. B putra na ça° C putraṃ na ça ° nuṣyehi°.

11[1]. B °echati kiṃ°. — 11[2]. B kiṃ taye sva° C kin taye svayaṃ dṛṣṭvā u ° to çrutaṃ | . — 12[1]. C tāta na me svayaṃ dṛṣṭvā nāpi parato çru ° sya rājakumārasya āṅguliyakā° B °aṃguleyikā°. — 14[1]. C °rāye kinnariyo ça° B °tāye tā dā°. — 14[2]. B °yanti kva°. — 15[1]. BC kvacid vā u° C °hāriṃ ga°. — 15[2]. C °āhaṃsuḥ | B °nsuḥ ma°. — 15[3]. C °mārakulo pra° BC °ṣkariṇī taṃ ku(C °kū)le ta°.

17[1]. C °evam eṣo ku° B °yeti ka°. — 17[2]. BC °kyato imāṃ°. — 18[1]. C °tāṃ rājadhītaraṃ pṛcchanti B °tāṃ dhītaraṃ pṛcchati ma°. — 18[2]. C °dhanu rā°. — 19[1]. B so āha | . — 19[2]. BC °tu so i°. — 19[3]. C °mama premena° BC °bahūni ca te ° tāro taṃ ha°.

बद्धो च तेन मम मित्राणं पितृसकाशातो अभिमतो उपकारो । तेन बन्धनवधदुःखो अनुभूतो न च तेन अहं कदाचित्परित्यक्ता । ततो सुधनु कुमारो पितरेण मुचापिता बन्धनागारे बन्धित्वा अहं विसर्जिता । सो एष मुक्तो समानो मम पृष्ठतो आगतो ॥ द्रुमेण किन्नरराज्ञा अमात्या आणत्ता ॥ शीघ्रं नगरं अलंकारापेथ यावच्च राजकुलं यावच्च असुरका पुष्करिणी विततवितानं कारापेथ चित्रपुष्पपरिक्षिप्तं अवसक्तपट्टदामकलापं सिक्तसंमृष्टं मुक्तपुष्पावकीर्णं सर्वगन्धोदकसिक्तं । ये मम नगरे प्रधानपुरुषाः चतुरंगबलकायो सर्वे ते मम आगमन्तु प्रत्युद्गच्छन्तु छत्रध्वजपताकानि च आदाय ॥ अमात्येहि वचनमात्रेण सर्वं प्रतिश्रावितं महता समृद्धीये प्रत्युद्गमनं कृतं ॥ मनोहरापि महार्हेण अंशुकेन प्रावृता सर्वालंकारविभूषिता बहूहि किन्नरसहस्रेहि परिवृता तूर्यसहस्रेहि वाद्यमानेहि प्रत्युद्गता ॥ सा दानि सुधनुं दृष्ट्वा मूर्ध्नेन पादेहि पतिता मुखेन च केशेन च पादानि संपरिमार्जेति ॥ एवं सुधनु महता विभूषाये महता समृद्धीये द्रुमस्य किन्नरराज्ञो नगरं प्रविशि[ । 35a ]तो यावद्राजकुलं द्रुमेण च किन्नरराज्ञा अभिनन्दितो अंगमंगे परिष्वक्तो आश्वासितो च ॥ एषो ते नगरो सर्वसौवर्णो उद्यानसहस्रमण्डितो अनन्तकल्पो इह मम धीतराये मनोहराये सह क्रीडाहि रमाहि प्रविचारेहि ॥

सुधनु दानि किन्नरनगरे बहूनि वर्षाणि प्रतिवसित्वा क्रीडित्वा रमित्वा प्रविचारेत्वा सर्वोद्यानेषु संवर्तनीये अनुभवित्वा मनोहरामामन्त्रेसि ॥ मनोहरे जानासि त्वं यथा अहं मातापितॄणां एकपुत्रको प्रियो मनापो । अहं तव प्रेमेन अना-

1. BC °bandharo vadha° B °anutaro na ca taṁ ahaṁ° C °na ca tam ahaṁ ka° tyaktaḥ | . — 2. C tataḥ sudhanuku° kuno bandha° BC °nāgāraṁ ba° B °rjjitā se°. — 3. BC °mukta samā° C °māno pṛishṭha°. — 4[1]. C °ṇattāḥ B °ṇattā çī°. — 4[2]. C çrīghraṁ nagaram alaṁ° B °kārāyetha° C °tha | yāva ca rā° tradnakṣyṇpari° C °avaçakta° B °saktapagaraṁ alaṁ° B °kārāyetha° C °tha | ... C °avaçakta° B °saktapagaram alaṁ° ... ṭadā° B °siktasaṁspṛiktaṁ mu° C °siktasaṁsprishṭaṁ mu° B °ndhodakaṁ siktaṁ ye ma° C °kaṁ yaṁ ma°.

6. BC ye (C yaṁ) mama° C °purushāç caturaṁgabalakāye sarve° B °caturaṁgavarakāyo sa° dgacchantuṁ cchu°. — 8. C °vacanamātyehi vacanamātyena sa° BC °sarvapra° B °grihaṁ ma°. — 9. C °hara pi mahāreṇa aṁ° B °harāye pi mahāṁsbena āṁçu° C °prāvṛitāḥ sa° C °bahudbhi ki° dgato | . — 10. BC °sudhanaṁ dṛi° C °mūrdhachi pā° B °mūrddhne pā° C °dāni saparimārjeti | .

11. C °dhanakumāro mahatā vi° rājñaḥ naga° BC °çito | yā° C °yāvac ca rāja° BC °drumena ca° C °rājño abhinandita aaṁge sarve vaçito āçvā° B °taaṁge sarvato ā° BC °ta ca eabo°. — 14. C eshmete na° B °ro savasan° BC °saharāye sarva krīḍā° cirehi sudha°.

16. C sudhanaḥ dā° rahāṇi praviçitvā krī° B °prativaçitvā krī° C °ro pradhāneshu saṁvartaniyam anubhavetvā manoharām āmantrayasi | B °shu saṁvartaniye a° rāyām āmantresi °ṇamo° — 17. B °tvaṁ | ya° ye manyaya haṁ ta° C °nāpo haṁ ta°. — 18. B °tava premayena a° C °premena anā° vaakāṇi ujhi° B °vaakāṇi ujhitvā ātma° C °manāṁ pari° B °gato iha me āgato iha me a° C °praviçantasya B °ntasya tato°.

पृच्छित्वा मातापितॄणां सर्वकानि उज्झित्वा आत्मना परित्यागं कृत्वा इह आगतो इह मे अद्य बहूनि वर्षाणि प्रतिवसन्तस्य । ततो आमन्त्रेहि मातापितरं गमिष्यामि हस्तिनापुरं ॥ ताये मनोहराये मातापितॄणां आरोचितं ॥ द्रुमेण किन्नरराज्ञा सुधनु पृच्छीयति ॥ कुमार गमिष्यसि मातापितॄणां सकाशं ॥ कुमारो आह ॥ यदि तात अभिप्रेतं ततो गमिष्यामि ॥ द्रुमो आह ॥ विसर्जयिष्यामि इति ॥ यम्भका नाम यक्षा किन्नराणामाज्ञप्तिकराः ॥ राज्ञा यम्भका यक्षा आणत्ता ॥ मम जामातारं सपरिवारं मनोहरासहितं येन हस्तिनापुरं नेथ प्रभूतं च रत्नरतनं ॥ तेहि सुधनु कुमारो सपरिवारो मनोहरा च किन्नरनगरातो गगनगता एवमुत्क्षिपित्वा प्रभूतं च रत्नरतनं हस्तिनापुरमानेत्वा राजक्ये उद्याने स्थापिता ॥ प्रभाताये रात्रीये कुमारो सुधनु विबुद्धो हस्तिनापुरे च भेरीघोषं शृणोति जनशब्दं च ॥ तस्य भवति ॥ कहिं अहं हस्तिनापुरं आनीतो ॥ इमं राजक्यं उद्यानं पश्यति । तानि रत्नमयानि पर्यंकानि यथा मघाशाति मनोहरां च तं दिव्यं परिवारं प्रभूतं च रत्नं । कुमारो प्रीतो संवृत्तो यथाभिप्रेतं स्वकं नगरमागतो ॥

कुमारस्य हस्तिनापुरा गतस्य राज्ञा सुबाहुना मार्गणा कारिता महता उद्योगेन । यं कालं राज्ञा कुमारस्य प्रवृत्तिं न उपलभति तस्य भवति । मृतो भविष्यति कुमारो मनोहरां मार्गन्तो ॥ तेन राज्ञा कुमारस्य सुधनुस्य मृतस्य कार्याणि कारितानि ॥ सर्वस्य अधिष्ठानस्य भवति । [135a] मृतो सुधनु ॥ तहिं दानि राजक्ये उद्याने अयद्वारिय उद्यानपाला निर्धाविता उद्याने पताकानुच्छ्राप-

1. BC °tremi mā° shyāmi | ha° raṁ tā°. — 3[1]. C °tṛṇām āro°. — 3[2]. C °ṇa kiṁnara° BC °rājño su° C °dhanu kumāro pṛcchīyati | B °yati kumā°. — 4[1]. B kumāre ga° pitṛṇāṁ sakāçaṁ | . — 4[2]. C yadi tota a°. — 5[2]. C °shyāmiti.

6[1]. C yaṁbhakā° B yambhakāro nā° BC °yaksho ki°. — 6[2]. C °kā nāma yaksho āṇatto B °yattā mama°. — 7. BC °jāmātā saparivāro mano° hitakā yena hasti° tha | pra° C °tnaratanaṁ B °naṁ tehi°. — 8. BC tehi kumāro ca(C °roca) su° C °dhanu saparī° nnaragarāto° B °evam occhipitvā° C °ca ratnaṁ hasti° B °ca ratnaṁ ratanaṁ° C °puraṁ ānitvā rājanye udyānaṁ sthāpitāḥ B rājanye udyānaṁ sthapitvā pra°. — 9. BC °pure ca bhari° B °ripāṇaṁ çṛṇoti° C °rīpāṇaṁ çabdaṁ çṛ° bdaṁ ca çṛṇoti |.

11[1]. BC °vati kahiṁ°. — 11[2]. B °haṁ asti° nītā | . — 11[3]. B °rājanyaṁ u° C °rājanyam udyānaṁ kumāro paçyati | . — 12. C °ratnāmayāni pa° noharāye ca taṁ° B °harā ca taṁ° C °bhūtaṁ ratnaṁ° BC °tnaṁ kumā°. — 14. BC °purāto tasya rājño subāhunā mārgaṇā ka° B °yena yaṁ°. — 15[1]. B yaṁ kāraṁ rā° C °rājñā ku° labhyati ta° B °bhoveti mṛ°. — 15[2]. BC °shyati | ku° nto tena°.

16. B °tāni sarva°. — 17[1]. C °adhisthānasya° BC °vati mṛ°. — 17[2]. C °dhanu B °dhanu kahiṁ dā°. — 17[3]. B kahiṁ dā° B °rājanye udyāne a° C °patākā ucyamanti āpa° B °ochrāyapātanti āpa° BC °çati | taṁ° C °dhanu kumāraṁ mano° varga pari° shṭhā ca punar dhāva° viçeshi mahā° B °viçiṣṭā mahā°.

यन्ति आगता च उद्यानं पश्यन्ति तं च सुधनुं मनोहरां च तं च विवर्णं परिवारं रत्नमयानि च पर्यंकानि महान्तं च रत्नराशिं दृष्ट्वा च पुनः धावन्तो हस्तिनापुरं प्रविष्टा ॥ महाजनकायो पृच्छति क्षेमं । ते आहन्सु: । क्षेमं सुधनु कुमारो आगतो हि । सो एव प्रीतो भवति ॥ तेहि राजकुलं गत्वा उद्यानपालेहि राज्ञो सुबाहुस्य आरोचितं ॥ महाराज दिष्ट्या वृद्धि सुधनु कुमारो आगतो ॥ राजा श्रवणमात्रेण प्रीतो संवृत्तो सर्वं च राजकुलं । तेषां उद्यानपालानां विपुलो दायो दिन्नो ॥ राजा सुबाहु सामात्यपरिजनो देवी च सुधनुस्य माता सर्वं च अन्तःपुरं उद्यानं निर्धावितं कुमारं द्रष्टुं सर्वं च नगरं कुमारस्य सुधनुस्य आगमनशब्दं श्रुत्वा मनोहराये च । अन्तरो जनस्य नास्ति हस्तिनापुरातो राजकुलं उद्यानं निर्धावन्तस्य कुमारं द्रष्टुं मनोहरां च ॥ सुधनु मातापितरं दृष्ट्वा मूर्ध्नेन निपतितो मनोहरा च श्वश्रूश्वशुरं च दृष्ट्वा मूर्ध्नेन निपतिता ॥ कुमारो पितरेण सुबाहुना सार्धं सुवर्णालंकृतं हस्तिनागमभिरुहित्वा हेमजालसंछन्नं महता राजानुभावेन महता राजर्द्धीये महतीये वियूहाये महतीये विभूषाये हस्तिनापुरं प्रवेशितो ॥

एवं समेन्तु गत्वा सर्वेहि प्रियेहि अबोधिमहीषा ।
यथ तस्मिं समयस्मिं समागतः किन्नरिये सुधनु: ॥

भगवानाह ॥ स्यात्खलु पुनर्भिक्षवः युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन सुधनु नाम कुमारो अभूषि । न एतदेवं द्रष्टव्यं ॥ तत्कस्य हेतोः ॥ अहं सो भिक्षवः तेन कालेन तेन समयेन सुधनुर्नाम कुमारो अभूषि । अन्यः स तेन कालेन तेन समयेन सुबाहुर्नाम राजा अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एषो भिक्षवो राजा शुद्धोदनो तेन कालेन तेन समयेन सुबाहुर्नाम राजा अभूषि ॥

3¹. C °ti | kshamam te âha° B °kshemam te âha°. — 3². BC °nsuḥ kshe°. — 3³. C °sudhanakumâro âgato hi ço evaṁ çriṇoti sudhanu âgatehi so e° B °hi so e°. — 4¹. C so evaṁ prî° B °rati tehi°. — 5². B °citaṁ mahâ°. — 5¹. B °râja drishṭhâ vriddhi° C °râja drishṭâ hi vriddhi sudhanakumâ° BC °gato râ°. — 5³. B râja çra ° kulaṁ teshâṁ°.

6. C teshâm udyâ° B °pâlânâṁ vi°. — 7. C °devîya sudhanasya mâ ° ḥpuram udyâ° BC °dhanasya° C °gamanaṁ çabdaṁ° BC °harâṁ ca anta°. — 9. C antaḥpure ja° C °hâstinâpurato râ°. — 10. C sudhanu mâ ° harâ ca çvaçruçvaçuraṁ dri° B °harâ ca svaçrûçvaçuraṁ°.

11. C °ruhi hema° BC °cchannâṁ(C °nnâḥ) nagaraṁ câlaṁkritâ mahatâ râjânu ° ddhîye mahatâ(B °dîye) viyû° B °purapraveçito ‖. — 14. C evaṁ çâmyantu samanvâ sarva° BC °yehi bo ° yâ ya°. — 15. C yathâ ta° B yathâ tasmiṁ kâle tasmiṁ sama° BC °samaye samâgataḥ(C °to) kiṁnariye sudhanuḥ ‖.

16². C °hu bhikshu ° dhanuṁ nâma ku° B °dhanuṁ nâma ku° B °ahi na e°. — 17¹. C naitad e°. — 17². C °kshavas tena kâ ° dhanunâma ku°. — 18. C anyo sa tena kâ°. — 19¹. B °vyaṁ tat ku°. — 19². B eshâ bhi°.

अन्या सा तेन कालेन तेन समयेन सुधनुस्य माता अभूषि । न एतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एषा भि[136a]क्षवो माया देवी तेन कालेन तेन समयेन सुधनुस्य माता अभूषि ॥ स्यात्खलु पुनर्भिक्षवः युष्माकमेवं अस्यादन्यः स तेन कालेन तेन समयेन सुधनुस्य परिचारको वसन्तको नाम अभूषि । न एतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवः छन्दको तेन कालेन तेन समयेन सुधनुस्य परिचारको ॥ अन्यो सो तेन कालेन तेन समयेन उप्पलको नाम लुब्धकपुत्रो अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवो राहुलो उप्पलको नाम लुब्धकपुत्रो अभूषि ॥ अन्यो सो तेन कालेन तेन समयेन मालको नाम लुब्धकपुत्रो अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवो आनन्दस्थविरो तेन कालेन तेन समयेन मालको नाम लुब्धकपुत्रो अभूषि ॥ अन्यो सो तेन कालेन तेन समयेन काश्यपो नाम ऋषि अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवः महाकाश्यपः स्थविरः तेन कालेन तेन समयेन अनुहिमवन्ते काश्यपगोत्रो ऋषि अभूषि ॥ अन्यो स तेन कालेन तेन समयेन अनुहिमवन्ते वानरराजा अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवो कण्ठको अश्वराजा तेन कालेन तेन समयेन अनुहिमवन्ते वानरराजा अभूषि ॥ अन्यो स तेन कालेन तेन समयेन कैलासमूर्ध्नि द्रुमो नाम किन्नरराजा अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एष भिक्षवो महानामो शाक्यो तेन कालेन तेन समयेन द्रुमो किन्नरराजा अभूषि ॥ अन्या सा तेन कालेन तेन समयेन मनोहराये माता अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एषा भिक्षवः यशोधराये माता तेन कालेन तेन समयेन मनोहराये माता अभूषि ॥ अन्या सा तेन कालेन तेन समयेन मनोहरा किन्नरी अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एषा भिक्षवो यशोधरा तेन कालेन तेन समयेन मनोहरा किन्नरी अभूषि । तदापि एषा मया खेदेन लब्धा ॥

1[1]. BC anyo so tena° B °bhûshi na e°. — 1[2]. C naitad e°. — 2[1]. C °heto |. — 2[2]. C eshâṁ bhikshavaḥ mâ °dhanusya°. — 3. C °shmâkaṁ evaṁm anyâ °dhanusya parivârako° B °parivâroko° BC °abhûshi | tat kasya°. — 5[1]. C °hetor eshaḥ bhi°. — 5[2]. C °shaḥ bhikshavo chandakâ tena kâ °dhanasya° BC °parivârako |.

6. C °tena samayena utpalako° B °shi nai°. — 7[1]. C °kshavaḥ râhulo utpalako°. — 8. C anyo sa tena kâ °yena mâlako nâ° B °yena sâlako nâma lubdhako putro abhûshi nai°. — 9[1]. C °hetor esha°. — 9[2]. C °yena mâlako nâ° B °yena sâlako nâ°. — 10. C °çyapagotro ṛshi a°.

11[1]. B °vyaṁ tat ka°. — 11[2]. C °çyapo sthaviras tena°. — 13. B °bhûshi nai°. — 13[2]. C °râjo tena°. — 15. C °sa tena kâ° BC °kailâçamûrddhni dru° B °shi nai°.

17. B evaṁ bhi° C °samayena samayena dru°. — 18[1]. BC anyo so tena kâ° C °harâyena manoharâye mâ° BC °shi nai°. — 19[1]. C °hetor esha°. — 19[2]. BC esho bhi°.

21[1]. BC °vyaṁ tat ka°. — 21[2]. C esho bhi°.

विचित्रगम्भीरकथो बहुश्रुतो
क्लिशघाती परवादिमर्दनो ।
स भिक्षु शोभेत स्वयंभुशासने
नभे व चन्द्रो परिपूर्ण[136b]मण्डलो ॥

इति श्रीकिन्नरीजातकं समाप्तं ॥

भगवान्सम्यक्संबुद्धो यदर्थं समुदागतो तदर्थं अभिसंभावयित्वा श्रावस्त्यां विहरति शास्ता देवानां मनुष्याणां च विस्तरेण निदानं कृत्वा भिक्षूनामन्त्रयति ॥ सुकुमारो हं भिक्षवो परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य पिता शाक्यो त्रयो प्रासादा कारयत् हैमन्तिकं ग्रैष्मिकं वार्षिकं मम येव क्रीडार्थं रत्यर्थं परिचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य भिक्षवः पिता शाक्यो तेहि प्रासादेहि कूटागाराणि कारयेत् उल्लिप्तावलिप्तानि वातास्पर्शार्गडानि पिहितवातायनानि धूपनधूपितानि ओसक्तपट्टदामकलापानि मुक्तपुष्पावकीर्णानि मम एव क्रीडार्थं रत्यर्थं प्रविचारार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो तेहि कूटागारेहि पर्यङ्का कारयेत् सुवर्णमयानि रूप्यमयानि रत्नमयानि षोडशगोणिकास्तृतां पत्तिकास्तरणां चित्रास्तरणां फलिकास्तरणां उभयतो बिम्बोपधानां लोहितकोपधानां अवदातप्रत्यास्तरणां मम एव क्रीडार्थं रत्यर्थं प्रविचारार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य

1. B °kathā bu° C °kathā çruto kileçaghāti paravādimardhano | B °vādana°. — 3. B °kshu sobhesha sva° C °çobhetha sva° B °maṇḍalo || . — 5. C çrīmahāvastuavadāne kinnarījātaka sa°.

6. C °yadartha samu° tadartham abhisaṃbhā° B °bhisaṃbhāvayitvā° C °vānāṃ ca ma° C °bhikshuṇāmantra° B °bhikshūṇāma°. — 8¹. C °kshavaḥ pa° B °kshavo suku° C °mārasa tasya°. — 8². C °kshavo suku° sya paramasukumārasya pi° B °prāsādā kārayat | hamanti° C °prāsāda | kārayet | hamanti° BC °vārshikaṃ samaye ca krīḍā° B °ḍārthaṃ ratyarthaṃ paricāraṇārthaṃ suku°. — 10¹. C °paramasukumārasya me° B °paramasukumāro ta°. — 10². C °kshavo sa° B °paramasukumāro tasya me bhikshavaḥ pi° C °paramasukumārasya pitā° BC °tehi prasā° B °kāyayet | ulli° C °kārāpayet | ulli° BC °ullipta ca liptāni vātāni vātāspa° B °ḍāni pihitā vātāpanetāni dhūpa° C °ḍāni pihitavātāyatanāni dhūpa° C °oçaktapaṭṭa° C °evaṃ krīḍārtha ratya°.

13. C °paramasukumāro haṃ bhikshavaḥ paramasukumāro B °paramasukumāro tasya°. — 15. BC °ryaṅkaṃ kārayeti | suva(C sva)rṇṇa° C °ratnamayāni sho° B °pratyastaraṇāṃ | mama° C °evaṃ krī° tyartha pra°.

18¹. C °kshavo pa° B °māro ta°. — 18². BC °tehi paryaṅkehi° C °ṛmānāni° B °payet | rupura(?)kraṃ upaniyayā ma° C °çuklaṃ upaniyate yā ma.° ṇārtha | .

परमसुकुमारस्य पिता शाक्यो तेहि पर्यंकेहि वितानानि कारापयेत् रजोशुकं उपनियमे मम क्रीडार्थं रत्यर्थं परिचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो विविधमनुलेपनमुपस्थापये सय्यथीदं अगुरुचन्दनं कालानुसारिं तमालपत्रं मम एव क्रीडार्थं रत्यर्थं परिचारणार्थं ॥ सुकुमारो हं भिक्षवो परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो विविधानि वस्त्राणि उपस्थापये । सय्यथीदं काशिकसूक्ष्माणि कम्बलसूक्ष्माणि मम क्रीडार्थं रत्यर्थं परिचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकु[137]मारो । तस्य मे भिक्षवो सुकुमारस्य परमसुकुमारस्य पिता शाक्यो विविधां मालां उपस्थापये । सय्यथीदं अतिमुक्तकचम्पकवार्षिकां वातुष्कारी इन्दीवरं दमनकं देवोपसंहितं मम एव क्रीडार्थं रत्यर्थं परिचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः पिता शाक्यो विविधं भोजनं उपस्थापये । शालिं विचितकालकं अनेकसूपरसव्यंजनं मम एव क्रीडार्थं रत्यर्थं परिचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो समानमन्तरेण मुक्तावित्त चक्रवर्त्तियोग्यां मालामुपनामयेत् मम एव क्रीडार्थं रत्यर्थं परिचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो पंच कामगुणां उपस्थापयेत् । सय्यथीदं नाट्यं गीतं वादितं तूर्यं स्त्रियो च मम एव क्रीडार्थं रत्यर्थं परिचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो विविधानि यानानि उपस्थापयेत् । सय्यथीदं हस्तियानानि अश्वयानानि नावायानानि शिबिकायानानि मम एव क्रीडार्थं रत्यर्थं परिचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकु-

2. B °manikumārasya tasya°. — 3. B °bhikṣava su° C °payet sayya ° nam kārāmpālīm tamā° B °kāloṃsārīm° C °evaṃ kri ° tyartha paricāraṇārtha |. — 5¹. C °kṣavaḥ pa° B °kumārasya tasya°. — 5². C °kṣavo su ° payet |.

6. C °tīdā kaṇçikasūkṣmā° BC °kṣmāni ka° C °laçūkṣmā ° dārtha ra ° ṇārtha |. — 8¹. C °paramasukumārasa tasya° B °māro tasya°. — 8². C °kṣavaḥ su° BC °vividhaṃ mālāṃ (C °lyaṃ) u° C °payet |. — 9. C sadyathā° B °muktikacampa° C °vārṣikavātukkāri i° B °kāṃ vānuṣkā° C °devoprasaṃ° BC °evaṃ kri° C °ṇārtha |.

11¹. BC °māro tasya°. — 11². C °bhojanaṃ upasthāpayet |. — 12. C sadyathīdaṃ çālim vi° kālakaṃ a° vyañjana mama kri° B °evaṃ kri° C °ṇārtha || B °ṇārthaṃ suku°. — 13¹. BC °māro tasya°. — 13². B °çākyo yaṃ[illegible] kāmagu° C °ntarena hin° yogyaṃ mālām upanāmayet | ma ° dārtha ratyartha pa ° ṇārtha |. — 15. C °māro tasya°.

16. B °kyo yaṃ[illegible] kāmaguṇām upa° C °guṇā nūrasthā°. — 17. C sadyathī ° dīdaṃ 18 ° dārtha ratyartha pa ° ṇārtha |. — 18. BC °māro tasya°. — 19. C °kṣavo su°. — 20. B °açvayānī nāvā° C °açvayānāni vāyānāni çi°.

21. BC °māro tasya°.

मारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो विविधा कुथां उपस्थापयेत् सिंहचर्मपरिवाराणां व्याघ्रचर्मपरिवाराणां द्वीपिचर्मपरिवाराणां पाण्डुकम्बलप्रतिच्छन्नाणां सनन्दिघोषाणां वैजयन्तिकानां मम एव क्रीडार्थं रत्यर्थं प्रविचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो निर्यान्तस्य छत्रं धारापयेत् मा कुमारस्य कायं आतपो रजो शुको वा परिदहे मम एव क्रीडार्थं रत्यर्थं प्रविचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य चतुर्दिशमुद्यानानि कारापयेत् मम एव क्रीडार्थं रत्यर्थं प्रविचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो तेहि उ[137ᵇ]द्यानेहि चतुर्दिशं पुष्करिणीं कारापयेत् उत्पलपद्मनलिनीसौगन्धिकप्रच्छन्नां मम एव क्रीडार्थं रत्यर्थं प्रविचारणार्थं ॥ सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य पिता शाक्यो तेहि उद्यानेहि चतुर्दिशं प्रासादां कारापये उच्चां महन्तां प्रगृहीतां मम एव क्रीडार्थं रत्यर्थं प्रविचारणार्थं ॥

सुकुमारो हं भिक्षवः परमसुकुमारो । तस्य मे भिक्षवः सुकुमारस्य परमसुकुमारस्य एतदभूषि ॥ संबाधो पुनरयं गृहवासो अभ्यवकाशं प्रव्रज्या तु । न शक्यं अगारमध्यावसता एकान्तसंलिखितं एकान्तानवद्यं परिशुद्धं पर्यवदातं ब्रह्मचर्यं चरितुं यं नूनाहं अगारस्यानगारियं प्रव्रजेयं ॥ स खल्वहं भिक्षवः अकामकानां मातापितॄणां अश्रुकण्ठानां रुदन्मुखानां अनूहं गृहवासं हस्तोगतं चक्रवर्तिराज्यमपहाय अगारस्यानगारियं प्रव्रजितो पुनस्समानो येन वैशाली नगरी तदवसारि तदनुप्रा-

1. C °vinitesaṁ ku ° payet | sayyathīdaṁ siṁhacarmacarmapa° B °yet | saṁ° C °pāṇḍukambarapra ° ḍārtha pra ° ṇārtha | . — 5¹. C °masukumārasya me bhi° B °māro tasya°. — 5². C °payet | sayyathīdaṁ kumāra° B °yet | mā ku° BC °kāya ā° B °çuko vā pa° BC °paridahe ma° C °ratyartha pra ° ṇārtha | .

6. B °sukumāras tasya°. — 7. C tasya bhikṣavo su° BC °payet | ma° C °evaṁ krīḍārtha ratyartha pra ° ṇārtha | . — 8. B °masukumāras tasya°. — 9. C °kṣavo su° B °kyo hi udyā° C °ṣkaraṇiṁ kārāpayet sayyathīdaṁ utpalapadmanaliniṁsau° B °dumanaliniṁsau ° cchannā ma° C °cchannāḥ ma ° tyartha pra ° ṇārtha | .

11. B °māro tasya°. — 12. C °prāsādaṁ kārāpayet | sayyathīdaṁ uccāṁ mahantiṁ pragṛ° B °mahatāṁ pra° C °tāṁ mamaivaṁ krī°. — 15¹. B °māro tasya° C °māro me ta°. — 15². C me tasya bhi°.

16¹. B saṁbodha° C °vāso rajasaṁkleśo abhya° BC °bhyavakāçā pravrajyā ... na ça°. — 16². C °dhyāvasato | ekānta° BC °khitaṁ ekāntanava(C °saṁ)dyaṁ° B °brahmacaritaṁ° BC °pravrajyeyaṁ | . — 18. C °khānāṁ alūhaṁ° B °gṛhadāmaṁ° BC °hastokaṁ cakra° C °rājyaṁ apahi° BC °s samāna(C °no | ) evaṁ vai° B °vasārita tad anu° BC °prāpta (C °ptaḥ | ) vaiçālyāṁ nagaryāṁ | te°.

ज्ञो ॥ तेन खलु पुनः समयेन वैशाल्यां महानगर्यां आराडो कालामो प्रतिवसति त्रयाणां श्रावकशतानां सत्कृतो गुरुकृतो मानितो पूजितो अर्चितो । सो जिनश्रावकाणां आकिंचन्यसहव्रताये धर्मं देशयति । सो जिनश्रावकाणामेवमाह । प्रजहथ प्रजहथ प्रजहथ प्रजहथ ॥ ते पि तं श्रावका एवमाहंसुः ॥ प्रजहाम: प्रजहाम: प्रजहाम: प्रजहाम: वयं चान्ये च ॥ तस्य मे भिक्षवो एतदभूषि ॥ यं नूनाहं आराडे ब्रह्मचर्यं चरेयं ॥ स खल्वहं भिक्षवः येन आराडो कालामो तेनोपसंक्रमित्वा आराडं कालाममेतदवोचत् ॥ इच्छेयमहं भगवतो आराडस्य ब्रह्मचर्यं चरितुं ॥ एवमुक्ते भिक्षवः आराडो कालामो एतदवोचत् ॥ चर भो गौतम तथारूपो अयं धर्मविनयो यत्र श्राद्धो कुलपुत्रो ब्रह्मचर्यं चरे चरं च पुनः आराधयेत्कुशलं धर्मं ॥ तस्य मे भिक्षवः एतदभूषि ॥ मह्यं पि खलु अस्ति छन्दो अस्ति बलं अस्ति वीर्यं यं नूनाहं एतस्यैव धर्मस्य प्राप्तये साक्षात्क्रियाये । एको प्रमत्तो आतापी प्रहितात्मो व्यपकृष्टो विहरन्तो नचिरस्यैवं धर्मं अधिगमि सा[138a]क्षाकरि ॥ स खल्वहं भिक्षवः येन आराडो कालामो तेनोपसंक्रमित्वा आराडं कालाममेतदवोचत् ॥ एत्तको यं भगवता आराडेन धर्मो अधिगतो साक्षात्कृतः देशितो प्रज्ञप्तो ॥ एवमुक्ते भिक्षवः आराडो कालामो एतदवोचत् ॥ एवमेतं गौतम एत्तको यं मया धर्मो अधिगतो साक्षात्कृतः देशितो प्रज्ञप्तः ॥ एवमुक्ते हं भिक्षवः आराडं कालाममेतदवोचत् ॥ तेन हि भो आराड यथायं धर्मो अधिगतो साक्षात्कृतो ॥ एवमुक्ते मे भिक्षवः आराडो कालामो एतदवोचत् ॥ तेन भो गौतम

1. C °lyāṃ naga° BC °sati | tra° BC °mānito pū °rcito so ji°. — 2. BC °jinaṃ çrāvakāṇāṃ āçañ(C °ña)kitavyaṃ | saha°. — 3. BC °jinaṃçrā° C °kānām eva° B °kāṇāṃ eva°. — $4^{1}$. B °ṇyatha prahajatha prahajatha | C °ṇyatha prahajadhva prahajathaṃ | . — $4^{2}$. C °çrāvakam āhaṃsuḥ | . — $4^{3}$. C pacyāma pacyāmaḥ pra°nye vaṃ | B °nye ca tasya°. — $5^{1}$. BC tasya bhi° C °kṣavaḥ e°. — $5^{2}$. BC °haṃ arādre bra°.

6. C °tvā ārāḍo kālāmo eta°. — 7. C °ārāḍo bra° B °ārādro bra°. — $8^{1}$. C °kṣavo ā°. — $8^{2}$. C vara bho gautamas tathā° B °gautama tathārupo° C °vinaye ya °hmacaryya cared | punaḥ ārāgayet kuça° B °ārāgamet | kuçalāṃ dharmaṃ tasya° C °dharmān tasya°. — $10^{1}$. C °kṣavo e° B °abhi ma°. — $10^{2}$. B °nūnāhaṃ | eta° C °nūnāha | etasyaivaṃ dha° B °rma adhigato sya prā° C °ptayet sākṣā° B °kṣātkriyāyaiḥ eko° C °yāyair eko°.

11. BC °ātāpī prahi° C °hitātmā vya° BC °syaivaṃ na dharme(C °rma) adhi° C °dhigatbhigami sākṣātkari | . — 12. B °tvā ārāḍaṃ kā°. — 14. BC °ta arāḍena° C °dharmādhiga °kṛtā de°. — $15^{1}$. C evaṃm ukte bhikṣavo ārā° B °vaḥ arāḍo°. — $15^{2}$. B evaṃ me gau° C evaṃmetaṃ° BC °gautama etta° B °dharmādhigato° B °dhigamo sā° C °kṛto de °jñapto | .

16. C evaṃm ukte bhikṣa°. — 17. B °bho arā° C °bho arāḍā kālāmā yāppayaṃ dha°. — $18^{1}$. C evaṃm ukte bhi° B °vaḥ arāḍo° C °ārāḍaṃ kālāmam etad a° B °mo me tad avocat | . — $18^{2}$. C tena hi gautama yaṃ ahaṃ dharma jānāmi yaṃ bhagavāṃ gautamaḥ

यं धर्मं जानामि तं भवां गौतमः धर्मं जानाति यं भवां गौतमो धर्मं जानाति तमहं जानामि । तेन हि उभये एवं श्रावकसंघं परिहराव: ॥ इति तस्य मे भिक्षवः सो आराडो कालामो परमया पूजया पूजयेत्परमया च प्रशंसया प्रशंसे । एवं-दर्शनं च समानं समानार्थताये स्थापयेत् ॥ तस्य मे भिक्षवः एतदभूषि । नायं आराडस्य धर्मो निर्यांति तत्करस्य सम्यग्दुःखक्षयाये । यन्नूनाहं उत्तरि पर्यें-षेयं ॥ स खल्वहं भिक्षवो तथादर्शनायेव समानो येन राजगृहं नगरं तदवसारि तदनुप्राप्तः तत्रैव विहरामि राजगृहे नगरे ॥

तेन खलु पुनस्समयेन उद्रको रामपुत्रो राजगृहे प्रतिवसति । महतां श्रावक-शतानां सत्कृतो गुरुकृतो मानितो पूजितो ॥ सो जिनश्रावकाणां नैवसंज्ञानासं-ज्ञायतनसहव्रताये धर्मं देशयति ॥ सो जिनश्रावकाणामेवमाह ॥ पश्यथ पश्यथ प्रजहथ प्रजहथ ॥ ते पि च श्रावका एवमाहंसुः ॥ पश्याम पश्यामः प्रजहाम प्रज-हामः वयं जानीमो च ॥ तस्य मे भिक्षवः एतदभूषि । यं नूनाहं उद्रके रामपुत्रे ब्रह्मचर्यं चरे ॥ स खल्वहं भिक्षवो येन उद्रको रामपुत्रः तेनोपसंक्रमित्वा उद्रकं रामपुत्र-मेतदवोचत् ॥ इच्छेयमहं भो उद्रक भवतो ब्रह्मचर्यं चरेयं । स च मे भवां उ-द्रको अनुजानेया ॥ एवमुक्ते भिक्षवः उद्रको रामपुत्रो एतदवोचत् ॥ तेन हि चर भो गौतम वस भो गौतम तथारूपो अयं धर्मविनयो यत्र श्राद्धो कुलपुत्रो

dharmaṁ jānāmi tam ahaṁ jānāmi ‖ B °bho gauttama yaṁ dha° taṁ bhavāṁ gauttamaḥ dharmaṁ jānāmi yaṁ bhavāṁ gauttamo dharmaṁ jānāti tam ahaṁ jānāmi ‖ . — 2[1]. C °ubhayo evaṁ imaṁ çrā° haremaḥ | . — 2[2]. B iti me tasya bhi° C °kshavo se BC °so arā° jāyāṁ pūja° B °ca praçaṁçayā praçaṁçe ‖ . — 3. BC °ca samānaṁ ca samā-nārtha° yet tasya°. — 4[1]. C °kshavo e° B °shi nā°. — 4[2]. B nāyam arāḍa° C °dharmaṁ ni° B °rmo nishyāti | taka° BC °thatarasya° C °sya samaya°. — 5. C °anūnāñchaṁ utta-rim āparyam āpadyeyaṁ | B °uttarih paryam āshadyeyaṁ ‖ .

6. C °kshavas tathādarçanāya samānā evaṁ rāja° B °nāyai samandeo evaṁ rāja° C °prāpta tatraivaṁ vi° — 8[1]. C °puna samayena uddako nāmapu° B °drako nāmapu° BC °tro prati°. — 8[2]. BC °jito so ji°. — 9. C °kānāṁ nai° B °naivasaṁjñānasajñāya° BC °ya-tena sahavra° B °dharma de°. — 10[1]. B °ha paçya°. — 10[2]. C paçyathaḥ paçyathaḥ pra-jahathaḥ prajahathas te pi°.

11[1]. C °sakaṁ evam āhaṁsuḥ | . — 11[2]. C paçyāmo pa° hāmo pra° BC °nye ca ta-sya°. — 12[1]. C °kshavam etad a° B °shi yaṁ nū°. — 12[2]. C °uddako nāmaputro bra° B °drako nāmaputro bra° C °hmacaryya careyaṁ | B °ryaṁ care sa kha°. — 13. C °kshavaḥ yena udako nāmaputrom ‖ tena hi cara bho° (l. 15) B °ko nāma° kaṁ nāma° (et de même constamment dans les deux manuscrits). — 14[1]. B °drako bhavato°. — 15[1]. B °ko nāma°. — 15[2]. B °cara bho gauttama vasa bho gauttama ta° C °cara bho gauttamas tathā° vinayā yatra° BC °çrāddhā ku° C °hmacaryya careyaṁ | punaç ca ārāgayeyaṁ | kuça° B °ryaṁ caraṁ varaṁ ca punaḥ ārāgaye kuça° BC °dharmān tasya°.

ब्रह्मचर्यं चरे चरं च पुनः आराधये कुशलां धर्मान् ॥ [138b] तस्य मे भिक्षवः एतदभूषि ॥ मह्यं पि खु अस्ति छन्दो अस्ति बलं अस्ति वीर्यं । यं नूनाहं एतस्यैव धर्मस्य प्राप्तये साक्षात्क्रियायै एको अप्रमत्तो आतापी प्रहितात्मा व्यपकृष्टो विहरेयं ॥ स खल्वहं भिक्षवः तस्यैव धर्मस्य प्राप्तये साक्षात्क्रियायै एको प्रमत्तो आतापी प्रहितात्मा व्यपकृष्टो विहरन्तो नचिरस्यैव तं धर्मं अधिगमि साक्षीकरि ॥ स खल्वहं भिक्षवः येन उद्रको रामपुत्र एतदवोचत् ॥ एत्तको यं भो उद्रकेन भवता रामेण धर्मो अधिगतो साक्षात्कृतो देशितो प्रज्ञप्तो यदिदं नैवसंज्ञानासंज्ञायतनं ॥ एवमुक्ते भिक्षवः उद्रको रामपुत्रो एतदवोचत् ॥ एत्तकमिदं भो गौतम भवता रामेण अधिगतो साक्षीकृतो प्रज्ञप्तो यदिदैव संज्ञानासंज्ञायतनं ॥ स खल्वहं भिक्षवः उद्रकं रामपुत्रमेतदवोचत् ॥ तेन हि उद्रक मयापि अयं धर्मो धिगतो साक्षात्कृतो ॥ एवमुक्ते भिक्षवः उद्रको रामपुत्रो एतदवोचत् ॥ तेन हि गौतम यं सो भवां रामो धर्मं जानाति तं भवां गौतमो धर्मं जानाति । तेन हि भवां एव दानि गौतमो श्रावकसंघं परिहरतु ॥ इति स खु मे भिक्षवो उद्रको रामपुत्रो परमया पूजया पूजयति परमया प्रशंसया प्रशंसति तथादर्शनं च समासमाचार्यस्थाने स्थापये ॥ तस्य मे भिक्षव एतदभूषि । न चायं तस्य रामस्य धर्मो निर्याति तत्करस्य सम्यग्दुःखक्षयाय । यन्नूनाहं उत्तरि पर्येष्टिमापद्येहं । स चाहं भिक्षवो तथादर्शनतो एवं व समानो येन गयानगरं तदवसारि । तदनुप्राप्तः तत्रैव विहरामि ॥

1. BC °ahi mahyaṁ°. — 2¹. C °viryya | . — 2². B °haṁ nattasyaiva° C °syairaṁ dha° B °kshânkriyâyai° C °tkriyâyaiḥ eko° BC °tto atâpi° C °prahitâtmâ°. — 4. C °tasyairaṁ dha° tâni prahi° B °pi pratihatâtmâ° C °krishṭâ vi° BC °nacirasyai° C °syairaṁ dha° kshikṛito | B °sâkshi | .

6¹. C °uddako nâmaputro e° B °ko nâmaputram etad a°. — 6². C °ko'yaṁ uddakena° B °udrako tena bha° C °dharmâdhiga° C °nairaṁsaṁjñânâ°. — 8¹. C °kshara uddako nâputro°. — 8². C °gauttamena bhavatâ rânena adhi° B °gautamena bhagavatâ râmo dharmaṁ jânâti | tena hi bhavân° (l. 13) C °haiva sajñânâ°. — 10¹. C °udakaṁ nâmapu°. — 10². C °uddako ma° C °dharmâdhiga°.

11¹. C evaṁm ukto° C °ddako nâma°. — 11². C °hi gauttamo yaṁ so bhavâṁ ârâmo dharmaṁ jânâti | tena hi°. — 12. BC °evaṁ dâ° saṁgho pariharatu iti°. — 13. BC iti | sa khu° C °uddako nâma° B °ko nâma° BC °tro paramayâ pûjayâ(C °ya) ti | paramayâ praśaṁçaye tathâ° C °darçanaṁ ca me sa° BC °samânakâ° sa sthâpaye tasya°. — 15¹. C °kshara e° BC °ahi na câ°. — 15². BC °tasya nâma° B °dharmâ ni° C °ryâti takienarya sa° B °ḥkhayâya | C °kshayâya | .

16¹. B °paryashṭhim âpa° C °paryyashṭim âpa°. — 16². C °bhikava° C °evaṁ sa° C °garyyanagaraṁ° BC °sâri tad a°. — 17. BC °ptaḥ | ta° râmi gayâ°.

भवन्तो श्रमणा वा ब्राह्मणा वा आत्मोपक्रमिकां शरीरोपतापिकां दुःखां तीव्रां खरां कटुकां वेदना वेदयन्ति ॥ अथ खलु अभव्या एवन्ते उत्तरिमनुष्यधर्मस्य ज्ञानाये दर्शनाये संबोधाये । सय्यथापि नाम इह पुरुषो आगच्छेया ज्योत्यर्थी ज्योतिगवेषी ज्योति पर्येषमाणो सो आर्द्रं काष्ठं सस्नेहं आर्द्राये उत्तरारणीये मन्थे पि अभिमन्थन्तो अभव्या तेजस्य अभिनिर्वर्तनाये ज्योतिप्रादुःकर्माये एवमेव ये हि केचि श्रमणा वा ब्राह्मणा वा कामेहि अव्यपकृष्टकाया विहरन्ति अव्यपकृष्टचित्ता ये पि चिमे कामवितर्का कामस्नेहा कामपरिदाघा कामाध्यवसाना ते पि सानं भवन्ति अप्रतिविनीता किंचापि ते भवन्तो श्रमणा वा ब्राह्मणा वा आत्मोपक्रमिकां शरीरोपतापिकां दुःखां तीव्रां खरां कटुकां वेदनां वेदयन्ति ॥ अथ खलु अभव्या एवं उत्तरिमनुष्यधर्मस्य ज्ञानाये दर्शनाये संबोधाये ॥ अयं खलु भिक्षवो गयाशीर्षे पर्वते विहरन्तस्य द्वितीया उपमा प्रतिभाये पूर्वे अश्रुता चैव अश्रुतपूर्वा च अविज्ञाता च अविज्ञातपूर्वा च ॥

तस्य मे भिक्षवः एतदभूषि ॥ ये केचिद्भवन्तो श्रमणा वा ब्राह्मणा वा कामेहि व्यपकृष्टकाया विहरन्ति व्यपकृष्टचित्ता ये पि चिमे कामवितर्का कामस्नेहा कामपरिदाघा कामाध्यवसाना ते पि सानं भवन्ति प्रतिविनीता किं चापि ते भवन्तो श्रमणा वा ब्राह्मणा वा आत्मोपक्रमिकां शरीरोपतापिकां दुः[139b]खां तीव्रां खरां कटुकां वेदनां वेदयन्ति ॥ अथ खलु भव्या एवन्ते उत्तरिमनुष्यधर्मस्य ज्ञानाये दर्शनाये संबोधाये ॥ सय्यथापि नाम इह पुरुषो आगच्छे ज्योत्यर्थिको ज्यो-

2. BC °tu bhavyā° B °saṁmodhāye | . — 3. C °echeya jyotyarthaṁ jyotigaveshi jyotiparyyashamāṇu° B °tyarthā jyotigaveshī jyotiparyaṅkamāno so ādre kāshṭe sa° C °kāshṭe sasneha ārdrā° B °he ardrā° °ttarāyaṇiye° C °pi abhimanthanto abha° °jasyābhinivartta° B °sya abhinivartta° C °nāye pi tivrāṁ duḥkhakarma | evam evaṁ ye hi° B °rmāyaṁ | evam evaṁ hi ke° C °çravaṇā vā brā° BC °tā ye pi ca me kāmavi° C °dhyavasanā te pi sā° BC °bhavaṁti | apra° C °çravaṇā vā brā° °tmoprakra° °rīropatā° °ṭukāṁ vedayanti || .

9. BC °tu bhu° C °evaṁ ana° °rçanāye | . — 10. C °kshavaḥ gayāçirshapa° °yā upā pratibhāye açrutā caivaṁ açruta° BC °çrutapūrvā ca abhijñātā ca abhijñātapūrvā ca || .

13a. BC °ahi ye ke°. — 13b. C °çravaṇā vā brā° °meshu vyapa° B °tā ye pi ca me vitarkā° C °tā ye pi ca me kāmavi° °hā kāmapari° °vasanā pi teshāṁ sānaṁ° BC °nti | pra° C °çravaṇā vā brā° °ṭukāṁ vedanā vedayanti | .

17. B °evan te uttarima° B °saṁbodhāye | . — 18. C °edeya tirthiko jyotigave° B °paryeshamāṇa so çushkakāshṭe vigatasnehe° C °so çushkakāshṭe vigatasnehe çushkakāshṭe vigatasnehe çushkā bhavyā te° B °bhavyānte ja° BC °nivartanāye° BC °evam evaṁ ye ke° C °çravaṇā vā brāhma° B °ahu vyapakṛshṭakā° °kṛshṭāni° BC °citta ye pi te me kāmavi° B °snehā kāmavitarkā kāmapari° C °dhyavasanā te pi° B °vasānāṁ te pi sānaṁ bhavanti | apra° °nitā | kiṁ° C °naṁ bhavanti | apra° BC °te bhavanti çra° C °çravaṇā vā brāhmaṇā vā ātmanopakāyikāṁ duḥkhāṁ tivrāṁ kha° °ṭukāṁ vedanā° B °tmopakāyikāṁ çarīropatāyikāṁ duḥ°.

तिजगवेषी ज्योति पर्येषमाणो सो शुष्ककाष्ठे विगतस्नेहे शुष्काये उत्तरारणीये अर्थे अभिमन्थन्तो भव्या तेजस्य अभिनिर्वर्तनाये ज्योतिस्य प्रादुःकर्माये एवमेव ये केचिद्भवन्तो श्रमणा वा ब्राह्मणा वा कामेषु व्यपकृष्टकाया विहरन्ति व्यपकृष्टचित्ता ये पि ते कामवितर्का कामस्नेहा कामपरिदाघा कामाध्यवसाना ते पि सानं भवन्ति प्रतिविनीता किंचापि ते भवन्तो श्रमणा वा ब्राह्मणा वा आत्मोपक्रमिकां शरीरोपतापिकां दुःखां तीव्रां खरां कटुकां वेदना वेदयन्ति ॥ अथ खलु भव्या च ते उत्तरिमनुष्यधर्मस्य ज्ञानाये दर्शनाये संबोधाये ॥ अयं खलु भिक्षवो गयाशीर्षे पर्वते विहरन्तस्य तृतीया उपमा प्रतिभाये पूर्वे अश्रुता चैव अश्रुतपूर्वा च ॥ इमा खलु भिक्षवः गयाशीर्षे पर्वते विहरंतस्य तिस्रो उपमा प्रतिभायेन्सुः पूर्वे अश्रुता चैव अश्रुतपूर्वा च अविज्ञाता चैव अविज्ञातपूर्वा च ॥

तस्य मे भिक्षवः एतदभूषि ॥ अहं खलु कामेहि व्यपकृष्टकायो विहरेयं व्यपकृष्टचित्तो ये पि चिमे कामवितर्का कामस्नेहा कामपरिदाघा कामाध्यवसाना ते पि मह्यं प्रतिविनीता किंचाप्यहं आत्मोपक्रमिकां शरीरोपतापिकां दुःखां तीव्रां खरां कटुकां वेदनां वेदयामि । अथ खलु भव्या एवमहं उत्तरिमनुष्यधर्मस्य ज्ञानाये दर्शनाये संबोधाये ॥

स खल्वहं भिक्षवः तथादर्शनसमानो येन उरुविल्वा सेनापतिग्रामस्तदवसारि तदनुप्राप्तः ॥ तत्राद्राक्षीत् वृक्षमूलानि प्रासादिकानि दर्शनीयानि प्रान्तानि विविक्तानि विगतव्यसनानि विगतजनपदानि मनोज्ञह्रदसलिलकानि प्रतिसंलयने आरूप्याणि । समन्तेन च गोचरग्रामाणि नातिदूराणि नात्यासन्नानि आगमनगमनसंपन्नानि समं च भूमिभागं नदीं च नैरंजनां समां सेतकां सम्पन्नार्थां शुचिसम्पन्नतोयां स्यन्दमानां दृष्ट्वा च पुनः मे अतीव मनः प्रसादे ॥ अलं पुनः मे अद्याय प्रव्रजितस्य

7. C °caivaṃ açrutapūrvā cābhijñātā ca abhijñātapūrvā ca |. — 8. BC imāṃ kha° C °ha me bhi° C °upamā bhāye° BC °yetaṃ pūrve açrutā caiva(C °vaṃ) açrutapūrvā ca abhijñāta(B °jñātā caiva abhijñāta)pūrvā ca |.

11¹. BC °ahi ahaṃ°. — 11². BC °citto ye pi ca me kāmavitarkāḥ kāmasne° C °snehāḥ kāmaparidāpā kāmādhyavasānā° B °parighādā kāmādhya° BC °byaṃ aprati° C °nītāḥ kiṃ° °tmopakāpikāṃ ça° B °tmopamāyikāṃ ça° BC °ropakāyikāṃ duḥ° °nāṃ vedayanti |. — 14. C atha bhavyā evaṃm ahaṃ° B °dharmajñānā° C °dhāyaṃ |.

16. C °samānā yena u° °sāri tad a° B °sārim anupra° BC °ptaḥ ta°. — 17. C tatra adrākshīd vṛ° B °kshīt | vṛ° C °kāni vigatavyālāni vigataja° BC °dāni | manojñahrada° C °saṃlayana ārupyāni |. — 19. C °atena ca grocaragrā° BC °grāmāṇi tāni dūrāṇi nātyā(B °bhyā)sannāni° B °nnāni | ā° C °āgamanasaṃpa° C °nadī ca nai° BC °nairañjanā samāṃ sitekāṃ sūpanārthī(C °nirthi) çuci° B °mpanno tīyāṃ sya° C °punar me ati°.

21. BC alaṃ° C °me çrayā pravra° °trasya prahāṇārthikasya prahāṇāye | yaṃ nūnā° havaṃ prahāṇaṃ° BC °yaṃ hareyaṃ |.

कुम्भपुरुषस्य [140ᵃ] महागाहे यं नूनाहं इहैव महान्तं महेरेयं ॥ स खल्वहं भिक्षव इदमेव कायं चेतसा एवं चेत अभिनिगृह्णे अभिनिपीडे ॥ तस्य मे भिक्षवः इदमेव कायं चेतसा एवं चेत अभिनिगृह्णतो अभिनिपीडतो कच्छेहि स्वेदा मुक्ता भूम्यां निपतिता ऊष्मायेन्सु वाष्पायेन्सु मुखतो ललाटातो स्वेदा मुक्ता भूम्यां निपतिता ऊष्मायेन्सु वाष्पायेन्सुः ॥ सय्यथापि नाम भिक्षवो बलवां पुरुषो दुर्बलं पुरुषं ग्रीवायां गृहीत्वा अभिनिगृह्णे अभिनिपीडे एवमेव भिक्षव इदमेव कायं चेतसा एवं चेत अभिनिगृह्णतो अभिनिपीडयतो कच्छेहि स्वेदा भूम्यां निपतिता ऊष्मायेन्सुः मुखललाटातो स्वेदा मुक्ता भूम्यां निपतिता ऊष्मायेन्सुः वाष्पायेन्सुः ॥

तस्य मे भिक्षव एतदभूषि । यं नूनाहं आस्फानकं ध्यायेयं ॥ स खल्वहं भिक्षवो मुखतो नासिकाश्रोतेहि च आश्वासप्रश्वासा उपरुन्धि ॥ तस्य मे भिक्षवः मुखतो च नासिकाश्रोतेहि च आश्वासप्रश्वासा उपरुध्वा उभयतो कर्णश्रोत्रविवरान्तरेहि उच्चशब्दो महाशब्दो वीतिसंचरेन्सुः । सय्यथापि कर्मारगर्गरी धम्यमाना उच्चशब्दमहाशब्दा भवति एवमेव भिक्षवः मुखतो च नासिकाश्रोतेहि च आश्वासप्रश्वासेहि उपरुद्धेहि उभयतो कर्णश्रोत्रविवरान्तरेहि उच्चशब्दमहाशब्दा वीतिसंचरेन्सु ॥ तस्य मे भिक्षवः एतदभूषि । यं नूनाहं भूयस्या मात्राया आस्फानकं ध्यायेयं ॥ स खल्वहं भिक्षवः मुखतो च नासिकाश्रोतेहि च उभयतो च कर्णश्रो-

1. C °kshave ihaivaṁ kâyaṁ° B °ns evaṁ kâyaṁ° BC °yaṁ cetasâ | evaṁ yena abhini- (C °nigṛihne abhinipeḍe tasya°. — 2. C °kshavo idam evaṁ kâyaṁ cetasa | evaṁ cetasaḥ abhinigṛihnato abhinipîḍito kacche° B °evame ceta abhinigṛihnato abhinipîḍyato kacchehi svedo mukto bhû° C °hi svedo mukto bhû° patito â° BC °shmâyensû vâ° B °vâshphâyetsu mukha° C °shpâyesu mukhalalâ° BC °ṭâto svedo mukto bhû° C °tâtaḥ ushmâyesu vâshphâyesuḥ | B °shmâyetsu vâshphâyetsuḥ sayya°. — 5. B °durbalaṁ pu° C °durbale pu° BC °gṛihne abhinipîḍe | eva° C °evam evaṁ bhikshavaḥ ida° B °idaṁ evaṁ kâyaṁ cetasa evaṁ ceta âbhigṛihnanto abhinipî° C °yaṁ cetaso eva cetaḥ abhinigṛihne abhinipaḍeto ka° B °cchehi | sve° BC °svedo mukto bhû° tâto ushmâ° B °shmâyetsuḥ mu° C °shmâyetsuḥ vâshpâyetsuḥ mu° tâto svedaḥ muktaḥ bhûmyâṁ patito ushmâye vâ° B °svedo mukto bhû° tâto ushmâyetsuḥ vâ° BC °vâshphâyetsuḥ |.

9ᵃ. BC yaṁ ṇaunûnâ° C °nakadhyânaṁ dhyâyeyaṁ || . — 9ᵇ. B °kshava mu° C °kshavaḥ mu° BC °nâçikâ° B °çrotrehi ca âsvâsapra° C °çrotehi ca âsvâçapraçvâçâ u° B °ndhi tasya°. — 10. C °nâçikâçrote ca âçvâçapraçvâça upa° BC °ruddho ubha° C °karṇṇo çrotavivarântarehi° B °vivarantarehi° C °uccaçabdâ mahâçabdâ vîtihsaṁ° BC °caretsuḥ sayya°.

12. B °rmâraṇâgargari° C °rmâralâdgari dhamânâṁ ucca° çabdo bha° BC °vati | eva° B °nâçikaçro° C °nâçikato çrotehi ca âsvâçapra° rṇṇaçotravivarantehi u° B °vivarantarehi° C °çabdo vîtihsaṁcaretsuḥ B °bdâ vîtisaṁcaretsu tasya°. — 15ᵇ. B °âsphânakaṁ° C °dhyânaṁ dhyâyeyaṁ ||.

16. C °khato ca nâçikâçrotehi ubha° B °nâçikâçrotrehi ubha° B °travivarantehi â° C °âsvâçapraçvâçân u° BC °n uruddhe tasya°.

त्रविवरान्तरेहि आश्वासप्रश्वासानुपरुन्धे । तस्य मे भिक्षवः मुखतो च नासिकाश्रोतेहि च उभयतो च कर्णश्रोत्रविवरान्तरेहि आश्वासप्रश्वासा चोरुद्धा ऊर्ध्वं शीर्षकपालं वाता प्रहरेन्सुः समुत्तरेन्सुः । तद्यथापि नाम भिक्षवः गोघातको वा गोघातकान्तेवासी वा तीक्ष्णेन गोविकर्तनेन गावीये शीर्षकपालं दालेय संप्रदालेय छिन्देय परिकर्तये संपरिकर्तये एवमेव मुखतो च नासिकाश्रोतेहि च उभयतो कर्णश्रोत्रविवरेहि आश्वासप्रश्वासा उपरुद्धा ऊर्ध्वं शीर्षकपालं वाता प्रहरेन्सु समूहेन्सुः ॥ तस्य मे भिक्षवः एतदभूषि ॥ सन्ति इहैव केचि शुद्धिं प्रज्ञपयन्ति ते कोलं पि आहारमाहरंति कोलचूर्णं पि आहारं आहरन्ति कोलोदकं पि पिबन्ति विविधाहि पि कोलविकृतीहि यापेन्ति । यं नूनाहं एकं कोलकमद्वितीयं आहारमाहरेयं ॥ स खल्वहं [140a] भिक्षवः एकं कोलमद्वितीयमाहारं आहरे । तस्य मे अयं कायो अधिमात्रकृशतामनुप्राप्तो अभूषि अधिमात्रकृशतामनुप्राप्तो अभूषि ॥ तद्यथापि नाम कालपर्वाणि वा एवमेव मे अंगानि अभून्सुः तद्यथापि नाम अजपदं वा उष्ट्रपदं वा एवमेव मे पर्शुका अभून्सुः । तद्यथापि नाम उभयतो पार्श्वे विवृतायां वाहनागारशालायां गोपानसीये अन्तराणि विवटानि वीतिलोकेन्सुः वीतिकासेन्सु एवमेव पार्शुलिकानि पार्शुलिकान्तराणि विवटानि वीतिलोकेन्सुः वीतिकायेन्सुः । तद्यथापि नाम वट्टनावेणी उन्नतावनता एवमेव पृष्ठकण्टकानि

1. BC °nāçikā° C °kāçrotehi ca vivarantehi āçvāçapraçvāça o° B °ṇṇaçrotevivarāntarehi āçvā °ruddhā ū° C °ruddho ūrddha çī° BC °çirahaṃ kapā° C °haretsuḥ | B °haretsuḥ samuttaretsuḥ sayya°. — 3. C °ko vā goghātakantevāsī° B °kahṇena govitakartanena° C °kahṇena govitarkena ca gaviye çī° °laṃ dāreya saṃpradāreya cchandeya parivartaya | evaṃm eva° B °pradāleya cchandeya parivartayeya saṃparivartaye | evaṃm eva° BC °nāçikā° B °ṇṇaçrotreṇi° C °ṇṇaçrotavivarehi āçvāçapraçvāça u° B °praçvāsa u° BC °ruddhā ū° C °ūrddha çī° haretsu samuttejetsuḥ B °haretsu samūhetsuḥ tasya°.

7¹. C °kahare e° BC °abhū santi°. — 7². C °haivaṃ kecid viçuddhiṃ prajñāpa° BC °ram āhāreti ko° C °kolaṃ cūrṇṇa pi āhāraṃ° B °hanti kolodakaṃ pi piṣanti vi° C °vividhahi pi° BC °hi pi kolavikṛ° B °kritām paryāyenti | C °kṛitāya yāpenti | . — 9. B °haṃ yaṃ ekaṃ kolakarmā dviti° C °haṃ yaṃ eke kolakarma dviti°. — 10¹. C °reye āhā° BC °hāraṃ tasya°. — 10². BC °ye adhimātrakṛçatā anuprāpta (C °ptaḥ) abhūṣi a° C °dhikamātraṃ kṛ°.

12. C °rvāṇi vā açitaparvāṇi vā | evaṃm ekaṃ me aṃ° B °ṇi vā evamevakaṃ me aṃ° °japadaṃ vā arūpadaṃ vā e° BC °evam evā (B °m evaṃ me) anuçīdana abhūnsuḥ | . — 13. C yayya° °çve vivṛiddhāyāṃ vā° B °çve vibaddhāyāṃ vā °pānaçīde anta° C °ṇde anta° B °vaṭāni | vitilokatsuḥ vitikā gati e° C °ni vithilokyetsuḥ vithiko gati evaṃ e pāçulikā'ntarāṇi° B °va pāṃçu° °ni pāçuṇḍakāntarāṇi° C °ṇi vibarddhāni vithilokyetsuḥ vithikāmetsuḥ B °ketsuḥ vi° °yetsuḥ sayya°.

16. B °ma vahyānādi unna° C °ma vahyānodi unnatā | evam eva pṛ° °ṣṭakaṇṭhāni abhū°.

अभूषि उन्नतावनतानि । तद्यथापि नाम ग्रीष्माणां पश्चिमे मासे उदुपाने उदकतारका दूरगता गम्भीरगता कृच्छ्रदर्शनाय प्रकाशेन्ति एवमेव मे अक्षिषु अक्षितारका अभून्सुः दूरगता गम्भीरगता कृच्छ्रदर्शनाय प्रकाशेन्सुः । तद्यथापि नाम शारदिकतिक्तालाबु हरितच्छिन्नं आमिलातं भवति संमिलातं संपुटजातं एवमेव शीर्षकपालं अभूषि आमिलातं संमिलातं संपुटजातं ॥ स खल्वहं भिक्षवः पुरिमं कायं परिगृह्णीष्यामीति पृष्ठिमकं अभिनिगृह्णे उत्क्लेषन्ति तत्रैव अपकुब्जको प्रपतामि ॥ स खल्वहं भिक्षवः साधु च सुष्टु च अभिसंस्कारेण उत्थिहित्वा पांसुकृतानि गात्राणि पाणिना परिमार्जेहं ॥ तस्य मे भिक्षवः पांसुकृतानि गात्राणि पाणिना प्रमार्जतो पूतिमूलानि रोमाणि काये शीर्येन्सुः ॥ अपि हि जितं जनपद्ग्रामेहि स्त्रीयो पुरुषा च एवमाहन्सुः ॥ कालको दानि श्रमणो गौतमो श्यामको दानि श्रमणो गौतमो मद्गुरच्छवि दानि श्रमणो गौतमो ॥ यापि चैषा शुभतनुवर्णनिभा सापि मे अन्तर्हिता एतिना एवं रूक्षप्रहाणेन ॥

तस्य मे भिक्षवः एतदभूषि । सन्ति एके भवन्तो श्रमणब्राह्मणाः तण्डुलाहारताये शुद्धिं प्रज्ञपेन्ति ते तण्डुलं पि आहारं आहरन्ति तण्डुलचूर्णं पि तण्डुलोदकं पिबन्ति विविधाहि पि तण्डुलविकृतीहि यापेन्ति । यं नूनाहं एकं तण्डुलमद्वितीयमाहारमाहरेयं ॥ स खल्वहं भिक्षवः एकं तण्डुलमद्वितीयं आहारं आहरन्तो अयं मे कायो अधिमात्रं कृशतामनुप्राप्तः अभूषि ॥ [141*] तद्यथापि नाम कालपर्वाणि वा असीतकपर्वाणि एवंरूपाणि मे अंगप्रत्यंगानि अभून्सुः । तद्यथापि

1. B °akṣiṇā papci° BC °kṛicchra da° C °çanāya saṃpra° BC °nti | eva(C °vaṃ)m evaṃ me akṣiṣu akṣito abhū° B °kṛicchadarça ° kāṇtaṃh | C °çetaṃh | . — 3. C °sādikan tikkālāmbu hari° B °kāliktā hari° BC °ti ammilātaṃ saṃpu(C °saṃpo)ṭajā° C °jātaṃ | evaṃm evaṃ çī° B °ṣi | amilātaṃ saṃmilātaṃ saṃpuṭājātaṃ | C °ṣi amilātaṃ saṃpuṭajātaṃ | . — 5. C °bhikṣhaḥ pūrimaṃ kāmaṃ parigṛihṇiṣyā° BC °pṛiṣṭimakaṃ a° gṛihne u(B | u)ṭclaṣhya° C °traivaṃ avaku° B °prayāmi | .

7. B °ṣādhū ca su° C °tvā pāṃḍukṛi ° ṇi pāṇinā parimajjehaṃ | B °rjehaṃ tasya°. — 8. C °kṣhava pāṃḍukṛitāni gātrāṇi taṃ pā° B °pramokṣhato pā° C °rjjate pūtimū° BC °romāni kāye çīrye(C °rahe)ṃsuḥ api°. — 9. C °jitaṃ ja° B °ahi ca | evaṃm ā° C °evaṃm āhaṃsuḥ | . — 10. BC kālako dāni çravaṇo gauttamo vikāni çravaṇo gauttamo° B kālako dāni çramaṇagauttamo° B °madgulacchavi dāni çramaṇagautamo yāpi°.

11. C yāṃ pi eṣhā° BC °tanuvarṇanibhā° BC °ti etino evaṃ lū(C °va lu)kṣa° C °prabhāṇena | B °prahāṇena | . — 12. C °kṣhava eta°. — 13. BC °eko bhava° C °çravaṇa brāhmaṇo taṇḍulāhāratāya° B °ṇāḥ taṇḍulāhāratāye° B °ranti | taṇḍulacūlaṃ pi taṇḍulo° C °vividhehi pi taṇḍulavikṛitehi pi yāyenti | . — 15. C °ṇḍulaṃ me dvi° BC °tiyaṃm ā°.

16. B °kṣhavaḥ | ekaṃ° C °kṣhava ekataṇḍulam advitīyam āhāraṃ° BC °kṛiçaṃ anu° C °prāptaṃ a°. — 17. C °nitaparvāni vā evaṃ° BC °aṃgāpra° nsuḥ sarya°. — 18. BC °rṇa vivaṭṭayāṃ vā° C °gopāṇasia° B °gopānaçia° C °ṇi vivalāni vithilokenti vithikāçe° B

नाम उभयतो पार्श्वे विवटायां वाहनागारशालायां गोपानसी अन्तराणि विवटानि वीतिलोकेन्ति वीतिकाशेन्ति एवमेव च पांशुलिकानि पांशुलिकान्तराणि विवटानि वीतिलोकेन्सुः वीतिकाशेन्सुः । सय्यथापि नाम अजपदं वा उष्ट्रपदं वा एवमेव कक्षवा अभून्सुः सर्वासामनुत्तरं कार्कश्यं । सय्यथापि नाम वट्टनवेणी उन्नतावनता एवमेव मे पृष्ठिकण्टकास्थिकानि अभून्सुः । सय्यथापि नाम ग्रीष्माणां पश्चिमे मासे उदुपाने उदकतारका दूरगता गम्भीरगता कृच्छ्रदर्शनाये संप्रकाशेन्ति एवमेव अक्षिषु अक्षितारका अभून्सुः दूरगता गम्भीरगता कृच्छ्रदर्शनाये संप्रकाशेन्सुः । सय्यथापि नाम तिक्तालाबु शारदिकं हरितच्छिन्नं आमिलातं भवति संमिलातं संपुटकजातं एवमेव शीर्षकपालं अभूषि आमिलातं संमिलातं संपुटकजातं ॥ स खल्वहं भिक्षवः पूरिमं कायं निगृह्णीष्यामीति पृष्ठिकण्टकमेव परिगृह्णामि उच्छ्रेष्यामि तत्रैव अवकुब्जको प्रपतामि ॥ स खल्वहं भिक्षवः साधु च सुष्ठु च अभिसंस्कारेण उच्छ्रहित्वा पांशुकृतानि गात्राणि पाणिना परिमार्जेयं । तस्य मे भिक्षवः पांशुकृतानि गात्राणि परिमार्जतो पूतिमूलानि काये रोमाणि शीर्येन्सुः ॥ अपि हि जितं सामन्तेहि गोचरग्रामेहि स्त्रियो च पुरुषा च एवमाहन्सुः । कालको दानि श्रमणो गौतमो श्यामको दानि श्रमणो गौतमो मद्गुरच्छवि दानि श्रमणो गौतमो । यापि मे सा शुभवर्णनिभा सापि अन्तर्हिता एतिना एवं लूहप्रहाणेन ॥

तस्य मे भिक्षव एतदभूषि ॥ सन्ति हि इहैके भवन्तः श्रमणब्राह्मणा तिलाहार-

°lokyanti vitikāçanti e° ca pāṁçuli° C °ca pāṇḍulikāntarāṇi vivaṭāni vithilokenti vithikāmetenḥ | B °kāni pāṇḍalikāntarā ° lokyensuḥ vitikāsetsuḥ | .

3. B °ma janapadaṁ vā ushṭapathaṁ vā e° C °ushṭraṁpadaṁ vā evaṁm e kakshavakalā a° B °m eva kharakalā a ° rvāṇām anuttara sakarttavyaṁ | C °eṁ karttavyaṁ | . — 4. B C °nāma vadūnāmālī e.° m evaṁ me pṛ° C °pṛishṭhakaṇṭhasthitāni abhūnsuḥ | . — 5. BC °kaṭārako dū ° to ga ° to kṛ° B °prekāsanti | e° BC °m evaṁ akshi° C °tārako abhū ° çetsuḥ | .

8. BC °kālāṁbu çā° B °çāridikaṁ° BC °nnaṁ ami ° 6 samilātaṁ saṁpu° C °puṭajātaṁ e° BC °shi amilātaṁ samilātaṁ saṁpūṭa(B °pūṭakajjātaṁ | . — 9. BC °prishṭikaṇṭha° C °m evaṁ pa° B °rigṛihnāmi ucchesbyanti | tatrai° C °gṛihnāmi uccharecchyati tatraivaṁ eva°.

11. C °sushṭhu ca a° C °tvā pāṇḍukṛ°. — 12. B tasya taṁ me bhi° C tasya taṁ bhikshavaḥ pāṁçukṛitāni gotrā ° mārjaṁto pūtiromāni kāye romā çirshatsu | B °pūtilomāni eromāni çīryensuḥ api°. — 13. C abhi jitaṁ sā° B °sāmantehi | go° C °mehi striyo° °raako ca | e° C °hatsuḥ | B °nsuḥ kā°. — 14. C kāraka dāni çravaṇo gauttamo syāmako madgulacchaviṁ | dāni çravaṇo gauttamo yāpi° B kālako dāni çramaṇo gauttaguna ° dgulacchaviṁ dā ° me yo pi me°.

16. B yo pi me° C yāpi te sā çu° BC °varṇṇanibhā sāpi santa° C °vaṁ lupraṇena | B °lūhaprāṇena | . — 17. C °vanto çravaṇo brāhmaṇo tilāhāvatāye çuciṁ pra° B °tilāhāra°.

तायै शुद्धिं प्रज्ञपयन्ति । ते तिलं पि आहारं आहरन्ति तिलचूर्णं पि तिलोदकं पि पिबन्ति विविधाहि पि तिलविकृतीहि यापेन्ति । यं नूनाहं एकं तिलमद्वितीयमाहारमाहरेयं ॥ स खल्वहं भिक्षवः एकं तिलमद्वितीयमाहारमाहरेयं ॥ तस्य मे भिक्षवः एकं तिलमद्वितीयमाहारमाहरतो अयं कायो अधिमात्रं कृशतामाप्तो अभू[ ]षि । सय्यथापि नाम कालपर्वाणि असीतकपर्वाणि एवंरूपाणि मे अङ्गप्रत्यङ्गानि अभून्सुः । सय्यथापि नाम अजपदं वा उष्ट्रपदं वा एवमेव मे हनुका अभूषि । सय्यथापि नाम उभयतो पार्श्वे विवटाये वा वाहनागारशालाया गोपानसीअन्तराणि विवटानि वीतिलोकेन्ति वीतिकाशेन्ति एवमेव मे पार्शुलिकानि पार्शुलिकान्तराणि विवटानि वीतिलोकेन्सुः । सय्यथापि नाम वट्टनवेणी उन्नतावनता एवमेव मे पृष्ठिकण्ठकानि अभून्सुः । सय्यथापि नाम ग्रीष्माणां पश्चिमे मासे उदुपाने उदकतारा दूरगता गम्भीरगता कृच्छ्रदर्शनाये संप्रकाशेन्ति एवमेव मे अक्षिषु अक्षितारका अभून्सुः दूरगता गम्भीरगता कृच्छ्रदर्शनाये संप्रकाशेन्सुः । सय्यथापि शारदिकं तिक्तालाबु हरितच्छिन्नं आमिलातं भवति संमिलातं संपुटजातं एवमेव मे शीर्षकपालं अभूषि आमिलातं संमिलातं संपुटजातं ॥ स खल्वहं भिक्षवः पुरिमं कायं परिगृह्णीष्यामीति पृष्ठिकण्ठकमेव परिगृह्णामि उत्क्षेप्स्यन्ति तत्रैव अवकुब्जको प्रपतामि ॥ स खल्वहं भिक्षवः साधु च सुष्ठु च अभिसंस्कारेण उच्चिहित्वा पांशुकृतानि गात्राणि पाणिना परिमार्जेयं । तस्य मे भिक्षवः पांशुकृतानि गात्राणि पाणिना परिमार्जतो पूतिमूलानि काये रोमाणि शीर्येन्सुः । अपि हि

1. C te hi tilāpi āhā° BC °rali | tilacū° C °kaṁ pi pivaṁnti vividhehi pi ti° hi jāyanti | . — 2. B °ekatila° BC °yam āhara°. — 3[a]. B °reyaṁ yasya°. — 3[b]. C yasya° BC °ekatila° C °hāra aharanto ayaṁ° B °haranto | ayaṁ° BC °kṛçaprā°. — 5. C °kālaparvāni evaṁ° B °apiaka° C °bhūtaṁ | .

6. C °thā nāma° BC °evam evaṁ me ha°. — 7. B °çve vivaṭāye° C °çve vivartāye vā vāhanāçālāçālāyāṁ go° B °gopanasiantarāçi vivaṭāni vītilokyanti vītikāçanti | eva° C °vītilokyanti vītikāçanti evam eva me pāṇḍulikāhi pāṇḍukānta° B °me pāṁçulikāhi pāṁçukānta° C °tāni loke vītilokyetsuḥ | B °vītilokyensuḥ sayya°. — 9. BC °vaṭṭanaveṇī u° C °evaṁ eva me priṣṭhikaṁṭha° B °evam evaṁ me priṣṭikaṇṭha° C °bhūtaṁ. — 10. BC °çanti | eva° C °m evaṁ me bhikshavo akshishu° BC °nsuḥ | dū° B °mākrāmetsuḥ | C °mākrāmensuḥ || .

13. C tadyathā tālātikaṁ tiktā° BC °ktālāmbū hari° naaṁ ami° B °ti saṁmilātaṁ saṁpūṭajātaṁ || sa kha° C °ti samilātaṁ saṁpuṭajātaṁ | evam evaṁ me çī° ṣāṁ | ami° puṭajātaṁ || . — 14. BC °yaṁ parigṛhniṣhyāmīti | pṛi° B °eva parigṛhṇā u° C °eva parigṛhne ucchroshyati tatrai° B °shyati || tatrai°.

16. C °sādhū ca su° ṇa ucchipitvā pāṁçukṛi° ucchrihi° B °rjeyaṁ tasya°. — 17. C °vaḥ pāṁçukṛi° BC °rimārjento pā° C °pūtimulāni kā° BC °çīrshetsuḥ api°. — 18. C api jānaṁ aham° C °grāmehistriye°.

जितं सामन्तेहि गोचरग्रामेहि स्त्रियो च पुरुषा च एवमाहंसुः । कालको दानि श्रमणो गौतमो श्यामको दानि श्रमणो गौतमो मद्गुरच्छवि दानि श्रमणो गौतमो । यापि मे सा शुभवर्णनिभा सापि अन्तर्हिता एतेन एवंरूपप्रहाणेन ॥

तस्य मे भिक्षवः एतदभूषि ॥ सन्ति खलु इहैके भवन्तः श्रमणब्राह्मणाः सर्वंशो अनाहारतायै शुद्धिं प्रज्ञपयन्ति । यं नूनाहं सर्वंशो अनाहारताये प्रतिपद्येयं ॥ तस्य मे भिक्षवः सर्वंशो अनाहारताये प्रतिपन्नस्य अयं काय अधिमात्रं कृशतामापन्नः अभूषि । सय्यथापि नाम कालपर्वाणि वा असीतपर्वाणि वा एवमस्याणि मे अंगप्रत्यंगानि अभूंसु । सय्यथापि नाम अजपदं वा उष्ट्रपदं वा एवमेव मे हनुका अभूंसुः । सय्यथापि नाम उभयतो पार्श्वे विवटाये शाहनागारशालाये गोपानसीये अन्तराणि विवटानि वीतिलोकेन्ति वीतिकाशेन्ति एवमेव मे पार्शु[152a]लिकानि पार्शुलिकान्तराणि विवटानि वीतिलोकेन्सुः वीतिकाशेन्सुः । सय्यथापि नाम वट्टनावेणी उन्नतावनता एवमेव मे पृष्ठकण्टका अभूंसुः । सय्यथापि नाम ग्रीष्माणां पश्चिमे मासे उदुपाने उदकतारका दूरगता गम्भीरगता कृच्छ्रदर्शनाये संप्रकाशेन्ति एवमेव मे अक्षिषु अक्षितारका अभूंसुः दूरगता गम्भीरगता कृच्छ्रदर्शनाये संप्रकाशेन्सुः । सय्यथापि नाम शारदिकं तिक्तालाबु हरितच्छिन्नं आमिलातं भवति संमिलातं संपुटजातं एवमेव मे शीर्षकपालमभूषि आमिलातं संमिलातं संपुटकजातं ॥ स खल्वहं भिक्षवः पुरिमं कायं परिगृह्णीष्यामीति पृष्ठिकण्टकमेव परि-

1. C kālako dāni çravaṇo gauttamo adgulacchaviṁ dāni çravaṇo gauttamo yāpi° B kālako dāni çramaṇo gautamo çyā ° ṇo gauttamo ma ° ṇo gauttamo yāpi°. — 3. BC yāpi se sā (C °rā) çubha ° pi sa antarhi° C °eli evaṁluhaprahāṇeno | . — 4¹. C °kaluvo e° BC °shi santi°. — 4². C °bhavato sarvaço anāhāratayai çu° B °tāyai pratipadyeyaṁ | sa khalv ahaṁ° (6). — 5. C °tipadyanti | iyaṁ°.

6. C iyaṁ sa khalvahaṁ bhikshavo sa° B sa khalvahaṁ bhi° C °ratāye prati ° yaṁ kāye adhi° B °kāyaṁ adhimā° BC °kṛçaprā° C °prāpto abhūshi | . — 7. C °asitaparvāṇi vā evaṁrū° B °muḥ sayya°. — 8. C sadyathā°. — 9. C (a une interversion et intercale ici la phrase de la l. 15) sadya° B °rçve trivargayeyā vālanā° C °rçve trivaliye vā vāhanāgāhaçā-lāyāṁ gopāṇasī ° vartāni vithilokyenti vitikāçenti || evaṁ me pāṇḍukāhi pāṇḍulikārāṇtāni vivaṭāni vithilokenti | B °lokyanti vi ° m eva me pāṁçukāhi pāṁçupakāntarāṇi vi ° lo-kyensu vitikāmetsuḥ | .

11. C sadyathā ° ma yattamāṁ nama° B °ṭṭanāvallāṁ unna° C °m evaṁ me° BC °kaṇṭha-kaṁ a°. — 12. C sadya° B °paçyime ° ati | evam e° C °nti | etam evaṁ me° B °kāsetsuḥ | C °kāçetsuḥ | . — 15. C sadya° B °çāladikaṁ° BC °tiktalāṁbū hari ° nnaṁ amilā ° ti samilātaṁ saṁpuṭojātaṁ° C °m evaṁ me çi ° shi amilā° B °shi | amilā° BC °taṁ sa-milātaṁ saṁpuṭa(B °ṭaka)jātaṁ | .

17. BC °yaṁ parigṛhṇishyā° B °pṛshṭika° C °shṭhikaṁṭhakaṁ evaṁ parigṛhṇāti ucchreshaṁ ucchrishyanti | ta° B °gṛhṇāmi ucchashyaṁ ucchreshyanti | ta° BC °traiva ca kubja ° tāpi | .

शुष्कासि उत्क्रोशन्ति तत्रैव अवकुब्जको प्रपतामि ॥ न खल्वहं भिक्षवः साधु च सुष्ठु च अभिसंस्कारेण उच्छ्रिहित्वा पांशुकृतानि गात्राणि पाणिना परिमार्जयं । तस्य मे भिक्षवः पांशुकृतानि गात्राणि परिमार्जतो पूतिमूलानि रोमाणि शीर्येन्सुः । अपि हि जितं सामन्तेहि गोचरग्रामेहि स्त्रीयो च पुरुषा च एवमाहन्सुः । कालको दानि श्रमणो गौतमो श्यामको दानि श्रमणो गौतमो मद्गुरच्छविको दानि श्रमणो गौतमो । यापि मे सा शुभवर्णनिभा सापि मे अन्तर्हिता एतेना एवंरूपप्रहाणेन ॥

तस्य मे भिक्षवः एतदभूषि ॥ ये केचिद्भवन्तः श्रमणा वा ब्राह्मणा वा आत्मोपक्रमिकां शरीरोपतापिकां दुःखां तीव्रां खरां कटुकां वेदना वेदयन्ति एत्तावत्पारमिते इमं पि न केनापि संभुणन्ति ॥ अतीतं भिक्षवः अध्वानं एतरहिं पि भिक्षवः प्रत्युत्पन्ने ये केचिद्भवन्तो श्रमणा वा ब्राह्मणा वा आत्मोपक्रमिकां शरीरोपतापिकां दुःखां तीव्रां खरां कटुकां वेदना वेदयन्ति एत्तावत्पारमिते इमं पि न केनापि संभुणन्ति । न खो पुनरहं अभिजानामि इमाये दुष्करचारिकाये कंचिदुत्तरिमनुष्यधर्मं अलमार्यं ज्ञानदर्शनं विशेषाधिगमं साक्षात्कर्तुं नायं मार्गो बोधाय ॥ अभिजानामि खलु पुनरहं पूर्वं प्रव्रज्याये अप्रव्रजितो पितुः शाक्यस्य उद्यानभूमीये शीतलायां जम्बुच्छायायां पर्यंकेन निषण्णो विविक्तं कामैः विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसंपद्य विहरामि ॥ स्या[१४३ b]त्खलु पुनः सो मार्गो बोधाय ॥ तस्य मे भिक्षवो वसतो तदनुसारि विज्ञानमुदपासि । स एव मार्गो बोधाये । न खलु पुन सो मार्गो लब्धो कृशेन वा दुर्बलेन बालानवाद्येन वा सर्वशो वा अनाहारताये प्रतिपन्नेन । यं नूनाहं

1. C °ucchrihitvâ pâṇḍukṛ° trâni pâ° mârjayaṁ. — 3. C °vaḥ pâṇḍukṛ° B °româṇi çîyeyuḥ | C °romaṇi yeshu api°. — $4^{1}$. C °ushi striyo° BC °purusho ca e° B °suuḥ kâla°. — $4^{2}$. C kâlako dâni çravaṇo gautamo adgulaccha° B °dgulaccha° C °çravaṇo° B °tamo yo pi°.

6. B yo pi se sâ çubhâ varṇṇa° C yâṁ pi so çubhatanuvarṇṇa° BC °rhitâ | eti° B °eva lâhâṇena ‖ C °evaṁ lukano | . — $7^{1}$. C °kshavo e° B °ahi ye ke°. — $7^{2}$. C °çravaṇo vâ brâ° kramikâṁ duḥ° ṭukâṁ vedanâṁ vedaya° BC °nti | tat tâvat pâ° C °mito imaṁ pi kecit nâpi santuvaṁti ‖ B °imaṁ pi kecit nâtisaṁbhuṇanti ‖ . — 9. C °taṁ bhikshavo adhvâ° hiṁ bhi° tpannehi ye ke° B °nne ye hi keci° C °vanto brâhmaṇo vâ çravaṇo vâ âtmoprakra° B °maṇo vâ brâhmaṇo vâ â° C °çariro duḥ° BC °yanti | etâ(C °takâ) ca pâramite(C °tâ) imaṁ° C °saṁsavanti | .

12. C na khalvahaṁ punar bhikshavaḥ abhi° d uttarimanu°. — 14. BC sa tasya abhijânâ° B °mi ‖ khalu° C °pûrvapravra° BC °jyâyair pravraji° B °nisharṇṇo viviktaṁ° C °nisharṇṇo | vivikta kâmair vivikta pâpa° BC °çîlaṁ vive° dya viharanti ‖ .

$17^{1}$. C °bodhâye B °dhâya tasya°. — $17^{2}$. C °kshavo santo tadanusâri° BC °udapâsi (C °si | ) sa e°. — $18^{1}$. B °dhâye na kha°. — $18^{2}$. C °ṇṇo sabdhyo(sa tyo) va kṛiçena vâ du° B °lakhyo kṛiçena vâ du° C °ço vâ anyo ârasyatâye pra°. — 19. BC °andârika(C

औदारिकमाहारमाहरेयं . . . . . . . . . . . . . . . मम प्रतिचारे (?) तेन मूहप्रहाणेन . . . . . . . . . . सचेतनो यापयिष्यसि । वयन्ते रोमकूपविवरान्तरेषु दिव्यामोजामध्योहरिष्यामः ॥ तस्य मे भिक्षव एतदभूषि ॥ अहं खलु सर्वशो अनाहारं प्रतिजानामि सामन्तकेहि पि मे गोचरग्रामेहि स्त्रियो च पुरुषा च एवं संजानन्ति अनाहारो श्रमणो गौतमो इमा च देवता मूहाधिमुक्ता मूहाभिप्रसन्ना रोमकूपविवरेहि दिव्यामोजामध्योकिरेन्सुः सो मम स्यात्संप्रजानमृषावादो ॥ स खल्वहं भिक्षवः संप्रजानमृषावादभयभीतो संप्रजानमृषावादं परिवर्जये जुगुप्समानो अलं भोति तां देवतां प्रतिक्षिपित्वा अनुसुखमौदारिकमाहारमाहरेयं ॥ स खल्वहं भिक्षवो मुद्गयूषपिकृतं भुञ्जिहं कुलत्थयूषं पि हरेणुकायूषं पि ॥

स खल्वहं भिक्षवः अनुपूर्वेण कायबलस्थामं जनयित्वा सुजाताये ग्रामिकाये मधुपायसं गृहीत्वा नागनन्दीकालसमये येन नदी नैरंजना तेनुपसंक्रमित्वा नदीं नैरंजनायां गात्राणि शीतलीकृत्वा येन स्वस्तिको यावसिकः तेनोपसंक्रमित्वा स्वस्तिकं यावसिकं तृणमुष्टिं याचित्वा येन बोधियष्टि तेनुपसंक्रमित्वा बोधियष्टिये पुरतो अन्यतरायतृणसंस्तरं प्रज्ञपयित्वा बोधियष्टिं त्रिष्कृत्वो प्रदक्षिणीकृत्वा निषीदि पर्यंकमाभुजित्वा ऋजु प्राचीनाभिमुखो पुरिमं कायं प्रणिधाय प्रतिमुखां स्मृतिमुपस्थापयित्वा स खल्वहं भिक्षवः विविक्तमेव कामैर्विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमध्यानमुपसंपद्य विहरामि ॥ सवितर्कविचाराणां व्युपशमाद्ध्यात्मसंप्रसादाच्चेतसो एकोतिभावा अवितर्कं अवि-

°kā)m āhā ° reyaṁ ma(C °ta)ma praticā(C °vā)re tena lū(C °hu)haprahāṇena(C °hāreṇa) saceta° B °cetanā yā° C °cetanā nāyāparīshyasi |.

2. B vayanto ro° BC °kūpe viva° C °jām adhyohari°. — 3[1]. BC °shi a°. — 3[2]. C °rvaço anāhāratāye pratipannena | yaṁ nūnāhaṁ sarvaço a ° mi | sāmantakā° BC °purusha ca e° C °çravaṇo gautamo imāṁ ca me de° B °imāṁ ca devakatā° C °tā luhā ° kā luhābhi ° m adhyaki° BC °kiretanḥ so° C °so yama syāṁ saṁ° B °mṛikhādādo ||.

6. C °khava saṁyadāna mṛishāvādabha° B °vaḥ saṁprajānā mṛishavādabha ° jānā mṛishādaṁ° C °parivarjje ju° B °alaṁmeti° C °devatā pra ° kham odāri° B °kham audāri°. — 8. BC °kvayaṁ bhi° C °mudgapūshavikṛi° B °mudgayūshaṁ pi kṛitaṁ° C °cchapūshaṁ pi ha° B °cchayūsha pi haraṇakā° C °reṇḍupūsha pi |. — 10. C °ṇa kāye varaṭhā° B °kāyavaraṭhāmaṁ yāṁayitvā su° BC °geāmitāye madhupāye saṁgṛihī(B °hi)tvā nāga-(C °gama)nadīkāla° B °mayena nadī° C °maye yana nadī nairaṁjanāo tenopa° B °ikṛitā yena° BC °ko yāvaṇikaḥ teno° C °stiko yāvaçikaṁ tṛi° B °stikaṁ yāvaṇikaṁ tṛiṇamushṭhikaṁ yāci° C °yācitvā yena bodhiyashṭiye pu° B °tenanupa° C °anyatarāgraṁ tṛi° B °tṛiṇasaṁstaraṁ° C °trishkṛitya pra ° di paryyaṁkam ā ° ju prācīnā ° rimāṁ kāye praṇi° B °kāye praṇi° BC °ṇidhāya prati° C °m evaṁ kāmai° BC °kāmai viviktaṁ pā° C °tarka savicā°.

18. B sa vitarka° C °tarkkasavicāraṁ vyu° B °dāc caitaso° C °ekotībhāvā° C °jaṁ pratiṁ° B °rāṇā sa pī°.

चारं समाधिजं प्रीतिसुखं द्वितीयं ध्यानमुपसंपद्य विहरामि ॥ स प्रीतेर्विरागादुपेक्षको च विहरामि स्मृतश्च संप्रजानं सुखं च कायेन प्रतिसंविद्या[143a]मि यत्त आर्या आचिक्षन्ति उपेक्षकः स्मृतिमां सुखविहारी तृतीयं ध्यानमुपसंपद्य विहरामि ॥ स सुखस्य च प्रहाणा दुःखस्य च प्रहाणात्पूर्वे च सौमनस्यदौर्मनस्ययोरस्तंगमाद-दुःखासुखमुपेक्षास्मृतिपरिशुद्धं चतुर्थं ध्यानमुपसंपद्य विहरामि ॥ स खल्वहं भिक्षवः तथा समाहितेन चित्तेन . . . . . . . . अभिनिर्णामयामि । स दिव्येन चक्षुषा विशुद्धेनातिक्रान्तमानुष्यकेन सत्वां पश्यामि च्यवन्तां उपपद्यन्तां सुवर्णां दुर्वर्णां सुगतां दुर्गतां हीनां प्रणीतां यथाकर्मोपगां ॥ सत्वां प्रजानामि इमे भवन्तः सत्वाः कायदुश्चरितेन समन्वागता आर्याणामपवादकाः मिथ्यादृष्टिकाः ते मिथ्यादृष्टिकर्मसमादानहेतोः तद्धेतोः तत्प्रत्ययात्कायस्य भेदात्परं मरणादपायदुर्गतिविनिपातं नरकेषूपपन्ना ॥ इमे पुनर्भवन्तः सत्वा कायसुचरितेन समन्वागताः मनःसुचरितेन समन्वागता आर्याणामनपवादकाः सम्यग्दृष्टिका ते सम्यग्दृष्टिकर्मसमादानहेतोः तद्धेतोः तत्प्रत्ययात्कायस्य भेदात्परं मरणात्सुगतिं स्वर्गं कायं देवेषूपपन्नाः ॥ स खल्वहं भिक्षवः तथा समाहितेन चित्तेन परिशुद्धेन पर्यवदातेन अनङ्गणेन विगतक्लेशेन मृदुना कर्मण्येन स्थितेनानिञ्ज्यप्राप्तेन रात्र्या मध्यमे यामे पूर्वनिवासानुस्मृतिज्ञानदर्शनप्रतिवेधाये चित्तमभिनिर्हरामि अभिनिर्णामयामि अनेकविधं पूर्वनिवासं समनुस्मरामि । सय्यथीदं एकां पि जातिं द्वे पि जाती त्रयो पि जाती चत्वारो पि जाती पंचापि जाती दशापि जाती विंशति जाती त्रिंशति जाती

1. B °prīto virā° C °prīte virāgād uvakṣeṇa° BC °smṛtiścaṃ ca° jāna su° C °āryya acikhanti u° B °upakshakaḥ°. — 4. C sa sukhasya prahāṇāt pūrvaṃ ca sau° B °saumanasyayor a° C °staṃgamād duḥkhā° ddhaṃ cartha diyā°. — 5. C °kshavas tathā° BC °cittena abhi° C °ṇāmayomi | B °ṇāmayena sa di°.

6. C °krāntāmānu° B °shyantena sa° C °satvā pa° B °paçyati cya° BC °cyavantāṃ upapadyantāṃ(C °ntā) suvarṇṇāṃ duvarṇṇāṃ suga° B °rga hīnāṃ° C °hīṇāṃ praṇī° BC °gāṃ sa°. — 8. C °bhavanto satvā kāyo duçca° B °kāyo duçca ° na samatvāgatā° C °āryyenām apa° B °ṇāṃ avāda° C °dakā mithyādṛishṭikāto saṃmyagdṛishṭikarma ° heto taddhetoḥ taupratya° durgatiṃ vini° C °shūpapannāḥ | B °nnā ime°.

11. BC °r bhagavantaḥ° B °kāyo sura° C °āryyāṇāṃm ana° BC °kāḥ saṃmyagdṛishṭikā te sa(C °saṃ)myagdṛishṭikarma °ddhetoḥ taupratya° C °devaṃshūpapannaḥ || . — 13. C °kshavas tathā° C °anaṅgaṇena vigatopakleçena mṛ° B °anaṃgatena vigatena kle ° dukarma° C °karmaṇīyena sthitenāṇijyaprā ° nekavidhi pūrvaṃ nivā°.

17. B °ekaṃ pi jātiṃ duve pi jātiṃ tra° C °ekam api jātiṃ drayam api jātiṃ tra° BC °yo pi jātiṃ catvā° C °ro pi jātiṃ pacam api jātiṃ daçam api jātiṃ viṃçam api jātiṃ triṃçam api jātiṃ catvāriṃçad vā jāti paṃcāçaṃ vā jātiṃ jātiṃçataṃ° B °paṃcāçaṃ vā jātiḥ jātiçataṃ° C °taṃ vā jātiṃsahasraṃ vā jātiṃ anekā pi saṃvartakalpā vā saṃvartavivartakalpā vā anekā pi saṃvartakalpā anekāpi vivartakalpā anutrāham āsi | evaṃnā° B °ayutrāham āsi | evaṃnā° C °ro evaṃmāyuḥ° B °saṃvedai ca ta°.

चत्वारिंशद्वा जातीः पंचाशं वा जातीः जातीशतं वा जातीसहस्रं वा अनेका पि संवर्तकल्पा वा अनेका पि संवर्ता अनेका पि विवर्ता अनेका पि संवर्तविवर्तकल्पा अमुत्राहमासी एवंनामा एवंगोत्रो एवंजात्यो एवमाहारो एवमायुःपर्यन्तो एवंसुखदुःखप्रतिसंवेदी । सो ततो च्युतो अमुत्र उपपद्ये ततो च्युतः इहत्वमागच्छामि इति साकारं सोद्देशं अनेकविधं पूर्वनिवासमनुस्मरामि ॥ स खल्वहं भिक्षवः तथ समाहितेन चित्तेन परिशुद्धे[43b]न पर्यवदातेन अनंगणेन विगतोपक्लेशेन मृदुना कर्मण्येन स्थितेनानिञ्ज्यप्राप्तेन रात्र्याः पश्चिमे यामे अरुणोद्घाटनकालसमये नन्दीमुखायां रजन्यां यत्किंचित्पुरुषनागेन पुरुषसिंहेन पुरुषर्षभेण पुरुषधौरेयेण पुरुषाजानेयेन पुरुषपद्मेन पुरुषपुण्डरीकेन सत्पुरुषेण महापुरुषेण अनुत्तरेण पुरुषदम्यसारथिना गतिमेन स्मृतिमेन मतिमेन धृतिमेन द्युतिमेन सर्वशो सर्वत्रताये ज्ञातव्यं प्राप्तव्यं अभिसंबोद्धव्यं सर्वं तं एकचित्तक्षणसमायुक्तया प्रज्ञया अनुत्तरां सम्यक्संबोधिमभिसंबुद्धो ॥ इदमवोचद्भगवानात्तमना ते भिक्षवो भगवतो भाषितमभ्यनन्देंसुः ॥

अथ शुद्धोदनः स्वप्नं पश्यति ॥

पश्यामि पुत्र सुपिने रतनावनद्धं
अभ्युत्थितं गजवरं मणिजालछन्नं ।
मध्ये पुरस्य अष्टनावस्थितो च रात्रौ
निर्धावते पुरवरा अभिनिष्क्रममानः ॥
तं दृष्ट मह्य सुपिने विपुलं च हास्यं
अभ्युत्थितं रुदितमेव च अप्रमेयं ।
कम्पे च मे संपरितप्तं शरीरमन्त-

4. C so tataḥ cyuto u°padyate | tato° B °dye | tato cyutaḥ iochatvam â° B °iti sakâraṁ° C °iti sâkâlaṁ so deçaṁ°. — 5. C °kshavas tathâ° B °çuddhe paryavadâtena cittena pariçuddhena° C °anañganena vi° dunâ karmaṇena sthi° niñjyena prâpto° B °me aruṇodghâtakâle sama° C °ruṇoghâṭakâ° B °rajanyâṁ ya° C °jñena purushapa° C °dhṛitimena dyûtimena sarvaço sarvatratâye jñâtavyaṁ prâptavyaṁ boddhavyaṁ sarvan taṁ e° B °ekacittaṁ ksha° ttarâyâṁ samyaksaṁbodhi° C °ttarâ samyaksaṁ°.

12. C °ttamanâ tecra bhi° shitam abhyanandetsuḥ çuddho° B °detsuḥ || . — 14. C °dana sva° BC °ti paçyâ°. — 15. B °tra çupine° BC °ratnâva° C °gajavaro maṇijâlaṁ cchannaṁ°.

17. C °purusha adhva° BC °sthitâ râ° B °râtre nirddhâvito | puravarâ° C °râtrer nirddhâvito | punaḥ varâ abhishekaṁ pramânaḥ yaṁ dṛi°. — 19. BC taṁ(C yaṁ) dṛishṭvâ mahya° C °ruditaṁ ruditaṁ evaṁ ca a° B °meyaṁ kampe°.

21. C °me sapari °rîraṁ antaḥkhaṁ° B °haṁ | samuddhatâni kiṁ tu bhari° C °ddhatâni kin tu bha°.

दृष्टं समुद्गमति किं नु भविष्यते या ॥
अथ लोकपाल अवचू मनुजप्रधानं
मा भाय भूमिपति संजनयाहि हर्षं ।
हन्त शृणोहि फलं यं सुपिनस्य तत्वं
समुत्थितं बहुजनस्य विबोधनार्थं ॥
एषो महागुणधरो विजहित्व राज्यं
द्वितियामथैव चतुरा स्वजनं च स्फीतं ।
निःसंशयं वरवर्न अनपेक्षमाणो
निर्यास्यते पुरवरा विदितं स भोतु ॥
एतस्मिं निर्गते अनेकविधं ति दुःखं
आयिष्यते सुपिनि यं हसितं ति सत्वं ।
यं रोदसि सुपिनि द्वानि सुखं अनन्तं
श्रुत्वा भविष्यति खिनं जितशुसंघं ॥

मातुःस्वसापि सुपिनं पश्यति ॥

मातुःस्वसा अवच कांचनराशिवर्णं
पश्यामि पुत्र सुपिने ऋषभं सुजातं ।
श्वेतं सुचारुककुदं अतिरिक्तशृंगं
शृङ्गारसंस्थितगतिं प्रतिपूर्णदेहं ॥
सो गर्जति सुमधुरं कपिलाह्वयातो
निर्धावते हृदयदृष्टिपथं हरन्तः ।
न च कश्चि तं प्रसहते अभिगर्जमानं
प्रतिगर्जितुं कुमुदराशिनिभं सुजातं ॥

2. C °avocat | manu° B °avaca anuja° BC °dhânam abhâya bhû° B °rsham hanta°. — 4. C hamta° BC °phalayam supi° C °nârtha | .

6. B °jyam dvitîyâ tathai° C °jyam dvitîyam ca tathai° BC °caturo sva° B °sphîtam nih°. — 8. B °çayam abdam anape° C °çayam avaram anape° BC °puravarâh vi° B °viditam bhotu ‖ C °bhonta ‖ . — 10. C etasmiñçca ni° °pini mam hasitam ti satvam | .

12. B °supinam dâni sukham anantaram çru° C °supinim ma yâni sukham anantam çru° B °shyati | jinam° C °trusaṅghân | . — 14. C °svaçâ avaca°. — 15. B °çyâmi ‖ pu° C °rishabha su° B °jâtam çve°.

17. C °kudam atiriktam çriṅgam çriṅgârasaṁsthitagatipûrṇṇa° B °ktaçriṅgam °sthitam gatipratipûrṇṇa°. — 19. BC °ti madhu° °to niddhâ° C °vate drishtipatho haranto ‖ B °ntah na ca ka°.

21. C na kaçcit prasa°.

तं देवराज अवचू करुणं वदन्तं
मा रोद शाक्यकुलनन्दनजातराग ।
वक्ष्यामि ते अवितथावचनं विजानं
आनन्दयामि उपजानय त्वं सुखानि ॥
अलक्त[144a]शुद्धचरणं कुशलोपपेतं
एषो नरर्षभ गतीमतिनां विधिज्ञः ।
हित्वा जनं पुरुषसिंहवरो पुरे च
निर्गम्य ते अभिलषे पुरुषर्षभत्वं ॥
सो पि अमृतं अचलमच्युतमप्रकम्प्यं
निर्वाणमप्रतिसमं प्रतिबुद्धचक्षुः ।
निर्दिश्य तं पुरुषसिंहशतं महर्षिः
यं श्रुत्व तीर्थिकगणा दिशतां व्रजन्ति ॥

यशोधरापि सुपिनं पश्यति ॥

अथ राहुलस्य जननी इदमब्रवीत्यि
मैत्रोत्तरेण मदनेन निबद्धचित्ता ।
देव शृणोहि यथ अद्य मयापि दृष्टं
सुपिनं मनोरमं फलं च मे तद्भवेयात् ॥
शुद्धोदनस्य किल राजकुलं नरेन्द्र
मेघो समन्तं घनेन समाददन्तो ।
लोकत्रयं प्रवरतोयधरो सुघोषो
विद्युत्प्रदीप विप्रद्योतयंतो बहूनि ॥

1. C taṁ de° BC °avaca ka° C °rudanto årodanâ° B °ntaṁ årodanâ° BC °kulânanda° C °rágaṁ | B °róga va°. — 3. C vakshâmi te° B °mi taṁ avi° BC °tatharacanaṁ vijâla (C °vijono) ânanda° C °pajâni ea taṁ sukhâ° B °pajânaya sukhâni alya°. — 5. C °lopayotaṁ | e °rshabha bhagavatînâṁ vidhijña hi° B °gatînâṁ vidhijñâḥ hi°.

7. B °trâ jânaṁ° C °trâ jâlaṁ ca puru° B °vara | pu° (ou °varâ pu°) B °nirgamya | te a° BC °abhilashaṁ purushadabhatvaṁ so°. — 9. B so pyataṁ acala° C so py etam acala °prakampya nirvâ° B °prakampyaṁ | nirvâṇaprati° kshaḥ ni°.

11. BC °çrutvâ ti°. — 13. C °çyati sâprataṁ | . — 14. B °râhurasya ja° bravît || mai° nena maṇiba° C °citto | .

16. BC °supinaṁ pi mano° C °bhaveyâ | . — 18. B °kulâ nare° C °kulo nare° C °meghaḥ sama° BC °manta kshaṇe° C °na ca samâ° B °nto loka°. — 20. C °pravaratoya° BC °dharâ sugho° C °dyutpradîpa vilolayato ba° B °dîpa vimalodayato bahûnâṁ | ° C °hûtâṁ | .

सो शीतलं विमलमप्रतिमं प्रसन्नं
वारि प्रवृष्य मधुरं अभिगर्जमानो ।
वर्षेति सागरधरो शयने निदाघं
एषो पि अनाःसुखितो न सहांपतीको ॥
ब्रह्मा अथ उपगमित्व इदं अवोच
तां राजहंस्य जननीं शृणु मा विषीद ।
इदं फलं तव अयं सुपिनो महार्थो
संपूर्यते अचलमेव जनेहि प्रीतिं ॥
शुद्धोदनस्य अयमात्मजो चात्रनेत्रो
लोकत्रयं जलधरो इव वर्षमाणो ।
प्रह्लादयिष्यति महापरितापतप्तान्
धर्मं ध्रुवं कथयमप्रतिमं जनेत्वा ॥

बोधिसत्त्वो पि पंच महासुपिनां पश्यति । परमसंबोधिप्राप्तो श्रावस्त्यां भिक्षूणां व्याकरोति ॥ तथागतो भिक्षवो पूर्वे संबोधिमनभिसंबुद्धो पंच महासुपिनानि अद्राक्षीत् ॥ तथागतस्य कतमानि पंच ॥

तथागतस्य भिक्षवः पूर्वे सम्बोधिमनभिसंबुद्धस्य इयं महापृथिवी उच्चशयनमहाशयनमभूषि । सुमेरु पर्वतराजा बिम्बोपधानमभूषि । पुरस्तिमे महासमुद्रे वामा बाहा ओहिता अभूषि पश्चिमे च महासमुद्रे दक्षिणा बाहा ओहिता अभूषि । दक्षिणे पि महासमुद्रे उभौ पादतलानि ओहितानि अभून्सुः । तथागतो भिक्षवः पूर्वे संबोधिमनभिसंबुद्धो इमं प्रथमं महासुपिनमद्राक्षीत् ॥

1. BC sâ çîta° B °vimasu aprati° C °vimalaṁ pratimaprasannaṁ° B °prasaññnaṁ vâripravishto madhu° C °pravishṭamadhu° garjjamânaṁ | B °mânâ varshe°. — 3. B varsheti sâ° C varshati dhârâdharasâgaraçayanaṁdâghaṁ esho° B °dâghaṁ dharmaṁ esho pi tanta sukhito na sukhâpatiko bra° C °esho pi to antasukhito na sukhâyati | ko bra°. — 5. B brahmâ | atha upâgami° C ko brahmâtha upâgamitvam idaṁ avocat | tâṁ râ° B °janani çri° C °janani çriṇu mâṁ nishâde | B °shâda i°.

7. C itthaṁ phalaṁ° BC °supine ma° B °rtho saṁpûrya° C °pûrvate° BC °ca phalaṁ°. — 9. B çuddhodanya a° BC °mâṇo pra°.

11. C °shyati mamahâ° B °taptâu | dha° pratimaṁjanetuṁ ha° C °pratimajjanetuṁ | . — 13³. C °supinaṁ ca pa°. — 14. C °kshavaḥ pûrvaṁ saṁbodhi° B °pûrvasaṁbodhâ° saṁbodhi pañca° C °supinâ adrâ° B °drâkshit | .

16. BC °pûrvasaṁbo° C °uccaçayanam abhû°. — 17¹. C °bimbopamaṁ abhûshi | . — 17². BC °mâ vâho ohitâ abhûshi || paçci° C °kshiṇa vâhâ o° B °ṇâ vâhâ ohitâ a°. — 19¹. BC dakshiṇâni mahâ° B °pâdatalâni o° bhûtaḥ || . — 19². C °gatebhi bhikshavo pû° BC °pûrvasaṁbodhi°.

तथागतस्य भिक्षवः पूर्वं संबोधिमनभिसंबुद्धस्य चीरिका नाम तृणजाति नाभिमण्डलादभ्युद्गम्य यावन्नभमासद्य अस्थासि ॥ तथागतो भिक्षवः पूर्वं संबोधिमनभिसं[144b]बुद्धो इमं द्वितीयं महासुपिनमद्राक्षीत् ॥

तथागतस्य भिक्षवो पूर्वं संबोधिमनभिसंबुद्धस्य लोहितका प्राणका कालशीर्षका पादतलेहि यावज्जानुमण्डलानि छादयित्वा अस्थान्सु । तथागतो भिक्षवः पूर्वं सम्बोधिमनभिसंबुद्धो इमं तृतीयं महास्वप्नमद्राक्षीत् ॥

तथागतस्य भिक्षवः पूर्वं संबोधिमनभिसंबुद्धस्य चत्वारि शकुना नानावर्णा अनेकवर्णा च चतुर्हि दिशाहि वैहायसं गत्वा तथागतस्य पादतलानि उपनिक्षिपित्वा सर्वश्वेता अपविद्धिन्सु । तथागतो भिक्षवः पूर्वं संबोधिमनभिसंबुद्धो इमं चतुर्थं महासुपिनमद्राक्षीत् ॥

तथागतो भिक्षवः पूर्वं संबोधिमनभिसंबुद्धो महतो मीढपर्वतस्य उपरिमनुपलिप्यमानो चंक्रमं चंक्रमे । तथागतो भिक्षवः पूर्वं संबोधिमनभिसंबुद्धो इमं पंचमं महासुपिनमद्राक्षीत् ॥

तथागतस्य भिक्षवो पूर्वं संबोधिमनभिसंबुद्धस्य इयं महापृथिवी उत्तमशयनमहाशयनमभूषि । सुमेरुश्च पर्वतराजा बिम्बोपधानमभूषि । पुरस्तिमे महासमुद्रे वामा बाहा ओहिता अभूषि पश्चिमे महासमुद्रे दक्षिणा बाहा ओहिता अभूषि दक्षिणे महासमुद्रे उभौ पादतलानि ओहितानि अभूषि । यं पि भिक्षवः तथागतो अनुत्तरां सम्यक्संबोधिमभिसंबुद्धो अयं तस्य महास्वप्नस्य विपाको ॥ यं भिक्षवः तथागतस्य पूर्वं संबोधिमनभिसंबुद्धस्य चीरिका नाम तृणजाति नाभिमण्डलाद्भ्युद्गम्य यावन्नभमासद्य अस्थासि । यं भिक्षवः तथागतेन इमं च लोकमभिज्ञाय

1. C °kshavo pû° BC °pûrvasaṃbo° B °sya sîhinikâ nâma tṛi° C °bhyuigamya° B °bhyugamya yâvannâbha°. — 2. B °pûrvasaṃbo° C °rva bodhi ° sahimsaṃ adrâ°. — 4. C °kshavah pû° BC °pûrvasaṃbo° C °prâṇakakâla° BC °rshako pâ° C °sthâtsuḥ | . — 5. C °gatehi bhi° C °pûrvabodhi° B °pûrvasaṃbo°.

7. C °kshavo pûrvasaṃbo° B °nânâvarṇṇo ane° tuhi diçâ° C °çâhi caibhyasam âgatvâ ta° C °pâdotatalâni° B °upakshipitvâ sa° C °upajighitvâ sarveçvetâ apa° BC °apariddhyetsuḥ | . — 9. C °to hi bhi ° rva bodhi° C °catur mahâ°.

11. BC °pûrvasaṃbo° C °buddhasya mahânto mî° B °mâno cakramaṃ cakrame | C °maṃ cakrame | . — 12. C °imaṃ pañca mahâ ° drâkshit || . — 14. C °kshavaḥ pûrvasaṃbo°. — 15[1]. C °bimbopanam a°. — 15[2]. B °vânâ sâbo ohitâ abhûshi || pa ° kshiṇa vâhâ ohi° C °kshiṇe vâhâṃ ohi° B °bhûshi | dakshi°.

17. C yaṃ pi me bhi° BC °gatena anu° C °ttarâ saṃmyaksaṃbodhim anabhi° B °ddho | ayaṃ° C °mahâsvasvapnasya°. — 18. B °thâgataḥ pûrva saṃ° C °thâgato pû° B °sya sîhinikâ nâma° BC °nâbhimaṇḍa° B °d abhudga° C °dgasya yâ° B °yâvannâbha° BC °bhanâsâdya° C °asthâsi | . — 20. C °kshavo ta° C °paraṃ ca lokaṃ sadevakaṃ lokaṃ samâra°

परं च लोकमभिज्ञाय सदेवकं लोकं समारकं सब्रह्मकं सश्रमणब्राह्मणीं प्रजां सदेवमनुष्यां वाराणस्यां ऋषिपतने मृगदावे अनुत्तरं धर्मचक्रं प्रवर्तितं त्रिपरिवर्तं द्वादशारमप्रवर्तितं श्रमणेन वा ब्राह्मणेन वा देवेन वा मारेण वा केनचिद्वा पुनः लोके सह धर्मेण यमिदं चत्वार्यार्यसत्यानि । यथेदं दुःखं आर्यसत्यं दुःखसमुदयमार्यसत्यं दुःखनिरोधं आर्यसत्यं दुःखनिरोधगामिनी प्रतिपदार्यसत्यं । इमां च पुनर्भिक्षवः तथागतस्य एवंरूपां धर्मदेशनां श्रु|145ᵃ|त्वा भूम्या देवा घोषमुदीरयेन्सुः एष मारिष भगवता वाराणस्यां ऋषिपतने मृगदावे अनुत्तरं धर्मचक्रं प्रवर्तितं त्रिपरिवर्तं द्वादशारं अप्रवर्तितं केनचि श्रमणेन वा ब्राह्मणेन वा देवेन वा ब्रह्मेण वा मारेण वा केनचिद्वा पुनर्लोके सह धर्मेण इदं दुःखमिति अयं दुःखसमुदयो अयं दुःखनिरोधो अयं दुःखनिरोधगामिनी प्रतिपदिति तं भविष्यति बहुजनहिताय बहुजनसुखाय लोकानुकम्पाय महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च । भूम्यानां देवानां घोषं श्रुत्वा अन्तरीक्षचरा देवा चातुर्महाराजिका त्रायस्त्रिंशा यामा तुषिता निर्माणरतिपरनिर्मितवशवर्तिन इतो तत्क्षणं तन्मुहूर्तं यावद्ब्रह्मलोकं घोषमभ्युद्गम्य एष मारिष भगवता वाराणस्यां ऋषिपतने मृगदावे त्रिपरिवर्तं द्वादशारं अनुत्तरं धर्मचक्रं प्रवर्तितं अप्रवर्तितं केनचित् श्रमणेन वा ब्राह्मणेन वा देवेन वा मारेण वा केनचिद्वा पुनर्लोके सह धर्मेण इदं दुःखं इति अयं दुःखसमुदयो अयं दुःखनिरोधः अयं दुःखनिरोधगामिनी प्रतिपदिति । अयं तस्य महासुपिनस्य विपाको ॥ यं भिक्षवः तथागतस्य पूर्वं संबोधिमनभिसंबुद्धस्य लोहितकप्राणका कालशीर्षा पादतलेहि यावज्जानुमण्डलानि छादयित्वा

BC °prajām sadevamānushā(C °shyāṇā)yām vārā° C °ṛishipatane° B °pravartitam | tri° C °pravartitam tripari° çakāra apra° B °çakāram apra° C °çravaṇena vā brā° B °çramaṇena brā° B °tyāni ‖ sayya°.

4. BC °tyam duḥkhamsamuda° C °nirodham āryasatyam duḥkham āryyasatyam duḥkhasamudayam āryasatyam duḥkhanirodha āryasatyam duḥkhanirodhagāmili prati° BC °pratipadam A° tyam I°. — 5. BC imam ca pu° C °evarūpām dha° nām kṛitvā bhūmyām de° B °yetsuḥ a° C °yetsuḥ | eshā mā° kram pravartitam tripariva° BC °dvādaçākāram apravartikam kenaci çrama(C °ciççrava)ṇena° B °brāhmaṇena vā devena vā brāhmaṇena vā māreṇa° C °devena vā māreṇa° B °sī pratipaditi ‖ tam bha° BC °lokānukampāya(C °ye) ma° C °janakasyā° BC °ṇām ca bhū°.

12. C bhūmyām devānām gho° rikshavarā devāç cātu° B °kshecarām devā° C °rmitavasava° BC °vartita ito° C °tmuhurtta yāvadbrahma° gaccho bāraṇa° BC °dvādaçākāram a° C °kram pravartitam kenacit çravaṇena° C °reṇa vā kenacid vā puna loke saha dharmeṇa idam° C °rodho ayam du° B °pratipraditi ‖.

18ᵃ. BC °pāko yam°. — 18ᵇ. BC °kshavaḥ te tathā° C °pūrva sambo° çīrshakā pāda° B °çīrsha pāda° sthāneḥ bahu etāhi bhi° C °neḥ | bahu etām bhi° tā yāvan tathā° BC °angulim sangakshyam de°.

अभ्यात्सुः यच्च एतर्हि भिक्षवः जनता या तथागते अधिकारकर्माणि कृत्वा कायस्य भेदात्परं मरणात्सुगतौ स्वर्गकाये देवेषूपपद्यन्ति । अयं तस्य स्वप्नस्य विपाको ॥ यं भिक्षवः तथागतस्य पूर्वे संबोधिमनभिसंबुद्धस्य चत्वारि शकुना नानावर्णा चतुर्हि दिशाहि वैहायसं समागत्वा तथागतस्य पादतलानि उपजिघित्वा सर्वश्वेताः अप-विक्रिंसुः चत्वारिमे भिक्षवः वर्णाः कतमे चत्वारः क्षत्रिया ब्राह्मणा वैश्या शूद्राः ते तथागते ब्रह्मचर्यं चरित्वा अकोप्या चेतोविमुक्तिं प्रज्ञाविमुक्तिं साक्षात्कुर्वन्ति । अयं तस्य महास्वप्नस्य विपाको ॥ यं भिक्षवः तथागतो पूर्वे संबोधिमनभिसंबुद्धो महतो मीढपर्वतस्य उपरिमनुपलिप्यमानो चंक्रमे चंक्रमे पुरस्तिमायां पि च भिक्षवः दिशायां तथागतो विहरति तत्रापि च सत्कृतो गुरुकृतो [145b] मानितो पूजितो अपचायितो लाभी चीवरपिण्डपात्रशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां अ-नध्यवसितो अनधिमूर्छितो अनुपलिप्तचित्तो । दक्षिणायां पि च भिक्षवो दिशायां तथागतो विहरति तत्रापि च सत्कृतो गुरुकृतो मानितो पूजितो अपचायितो लाभी चीवरपिण्डपात्रशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां अनध्यवसितो अनधिमूर्छितः अनुपलिप्तचित्तः । पश्चिमायां पि च भिक्षवो दिशायां तथागतो विहरति तत्रापि च सत्कृतो गुरुकृतो मानितो पूजितो अपचितो लाभी चीवरपि-ण्डपात्रशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां अनध्यवसितो अनधिमूर्छितः अनुपलिप्तचित्तः । उत्तरस्यां पि भिक्षवः दिशायां तथागतो विहरति तत्रापि च सत्कृतो गुरुकृतो मानितो पूजितो अपचितो लाभी चीवरपिण्डपात्रशयनासन-ग्लानप्रत्ययभैषज्यपरिष्काराणां अनध्यवसितो अनधिमूर्छितः अनुपलिप्तचित्तो । अयं तस्य महास्वप्नस्य विपाको यं तथागतो भिक्षवः पूर्वे संबोधिमनभिसंबुद्धो इमां पंच महास्वप्नां अद्राक्षीत् ॥ इदमवोचद्भगवानात्तमनास्ते च भगवतो भाषित-मभ्यनन्दे ॥

2. BC °pâko yaṁ°. — 3. C °kshava ta ° sya pûrvasaṁbo ° ṛṇâ anekavarṇṇâ catu° C °samâtutvâ tathâ ° tâḥ uparijhiñnaḥ | catvâri° B °uparijhinaḥ° C °kshavaḥ katame catvâro kshetriyâ° B °raḥ kshetri brâ ° drâḥ ye tathâte bra° C °drâḥ ye tathâ ° hmacaryya cari° sâkshân kurvanti | .

7ᵃ. BC °pâko yaṁ°. — 7ᵇ. C °gate pûrvasaṁbo ° rvata upari° B °mâno cakramaṁ ca-krame pu° BC °rati | tatrâ° C °pi ca bhikshavaḥ satkṛto mâni° B °mâṇito pû ° çayanâçana-glâ° B °pratyabhai° BC °shkârânâṁ° B °mûrchiḥ anu ° tto dakshi°.

11. C dakshiṇayâṁ pi ca bhikshavaḥ di° C °mâṇito pû° B °ṇâṁ anavadhyasito anadhi° C °mûrchitaḥ° B °anupaliptacittoḥ paçci° C °citto | . — 14. C °kshavaḥ di° C °apacâyito lâ pûjitaḥ apacâyito lâbhi ci ° sitaḥ anadhimûrchito anupaliptacitto.

17. C uttarâyâṁ pi ca bhikshavo di° BC °rati | tatrâ° C °apacâyito lâbhi cîvarapaṇa° B °bhi cîvarapâ° C °sitaḥ anadhi° B °nulipta° C °tto | . — 20. C °pûrvasaṁbo° BC °ma-pnâṁ adrâ°.

21. B °ad bhagavân | .

इति श्रीमहावस्तुअवदाने शुद्धोदनस्य पंच महास्वप्ना समाप्ता ॥

बोधिसत्वस्य दानि एतदभूषि । दुष्करमिदं अगारमध्ये वसन्तेन एकान्तसंलिखितं एकान्तमनवद्यं एकान्तपरिशुद्धं पर्यवदातं ब्रह्मचर्यं चरितुं । यं नूनाहं अगारस्मानगारियं प्रव्रजेयं ॥ बोधिसत्वो राजानमामन्त्रयति प्रव्रजिष्यामि ॥ राजा आह ॥

मा दानि मा कमललोचन चारुरूप
शोकं लभे सुविपुलं त्वय विप्रहीणो ।
माता च ते असुलभं मरणं निगच्छेत्
ततः कीदृशं सुखमेतं तथा विशिष्टं ।
यस्य कृतेन मम च स्वजनं स्वराष्ट्रं
त्यजिष्यसि बहुदुःखो हि स विप्रयोगो ॥
पर्याकुला मि दिशता प्रतिभान्ति सर्वे
शीतोष्णदंशमशकावृतभूमिभागा ।
वसो वनेषु मृगवारणघातिकेषु
भैरवभैरवरुतेषु महाभयेषु ॥
निष्कान्तरेण मनसा कृतमोक्षबुद्धिः
मार्गं च ताव मम पुत्र वर प्रसीद
जीवामि यावदहं याव च सा इहेव ।
किंकारणं तव विनिर्गमनं निशाम्य
न[146ᵃ]त्वं विनाशमुपयास्यति मे शरीरं ॥

1. B iti çrîçuddhodanasya° C °svapnaṁ samâptaṁ ‖ B °svapnân samâptaṁ ‖ . — 2¹. B °shi dushka°. — 2². C °madhyâvasanto ° hmacaryya cari°. — 3. B ya nûnâ° C °riyaṁ vrajeyaṁ | B °jeyaṁ bo°. — 4¹. C °jishyati ‖ . — 4². C °âhaṁ ‖ .

6. B mâṁ dâ° BC °nê mâṁ ka° C °rûpaṁ ço° B °labhetuḥ vipulaṁ trayâ hi vipra°. — 8. BC mâ mâtaraṁ ca ahaṁ ca trayâ vihîno | C °ṇo | asurabhi mara° BC °kîdṛçam duḥkhaṁ sukhaṁ ita(C °to) yad viçi°. — 10. BC °mama ca bandhu sva(C °sva)janaṁ° C °saṁ sarâshṭra çeyyasiyasi ahahu° B °shṭraṁ çrajyâsiyasi ‖ bahu° BC °duḥkhâ(C °ḥkha) viya viprayogo paryâ°.

12. C °kulâni diçatâṁ pratibhonti° BC °rve | çî° C °shṇadaçama° B °bhâgâ tra° C °bhâgâ trâ°. — 14. B trasau vane° C trâsau vane° BC °raṇaghatiikeshu° B °keshu | bhairavabhîrava° C °keshu bhairavabhîruvaru° B °ravabhîra° BC °yeshu ni°.

16. B °buddhiḥ | âryaṁ(?) ca tâvat mama pu° C °buddhiḥ âryyaṁ ca tâvat mama putravara prasîdaḥ | jî° BC °yâvacca ahaṁ tâvaca(C °va ca) sâ i° C °haivaṁ B °haiva kiṁ°. — 19. B °ṇaṁ | tava° C °ṇaṁ | tavaṁ vi°.

राज्ञा दानि पंचानां राजान शतानां प्रेषितं । आगच्छथ कुमारो अभिनिष्क्रमितुकामो ॥ ते दानि आगता कुमारं बहुप्रकारं याचन्ति । मा अभिनिष्क्रमाहि त्ति ॥ बोधिसत्वो दानि राजानं च ते च राजानो एतदवोचत् ॥ सचेत् मम महाराजा चतुर्हि पदेहि प्रतिभूको भवति प्रतिजानामि ते राज न निष्क्रमिष्यं पुरवरातो ॥ राजा आह ॥ भवामि ते प्रतिभूको पदेषु चतुर्षु शीघ्रं पुत्र उदीरेहि पुरा प्राणा जहन्ति ॥ कुमारो आह ॥

यौवने वर्तमानस्मिं जरा मे मा खु आगमे ।
आरोग्ये वर्तमानस्मिं व्याधि मे मा खु आगमे ॥
जीविते वर्तमानस्मिं मरणं मा खु आगमे ।
संपत्तीषु रम्यासु विपत्ति मा खु आगमे ॥
तदा हिक्कारहक्कारा देवसंघा प्रमुंचिषु ।
साधु साधु महासत्व साधु अप्रतिपुद्गल ॥
सुभाषितान्ते एतस्मिं सर्वा परिषा इयं ।
हृष्टा आत्तमना सर्वे प्रीतिसुखसमर्पिता ॥
ततो शुद्धोदनो राजा दुःखशोकसमर्पितः ।
अश्रुपूर्णेहि नेत्रेहि बोधिसत्वमिदमब्रवीत् ॥
स्थानं हि पुत्र जानाहि यस्य एतं न विद्यति ।
जरा व्याधि मरणं च विपत्तीषु न मे गतिः ॥

कुमारो आह ॥

हन्त त्रिषु महाराज पदेषु प्रतिभूर्भव ।
ततो मया विनाभावो न ते जातु भविष्यति ॥

1[1]. B °preshitham âga° C °shitam âga°. — 1[2]. C °kâmah | B °kâmo te dâ°. — 2[1]. B °nti mâm a° C °nti mâm a°. — 2[2]. B mâm abhi° C mâm abhi° C °mâhîti | B °mâhinti bo°. — 3[1]. B °tvo | dâ°. — 3[2]. BC °dehi prâti antako bhavati(C °ti | ) mama pratijâ(C °jo)nâmi te râjânam nishkra(C °shka)mi°. — 5[2]. C °te prâtibhu ° turshu çî° B °putro udî°.
6. B kumâra â°. — 7. C °mânesmim° BC °me mam su âgame | . — 8. BC ârogya va° C °mânesmim vyâdhim me° BC °me matsu â°. — 9. C °mânesmim° BC °nam me khu âgamam | . — 10. BC °ramyâsu vi° C °vipattimam su âgamam | B °tti mam su â°.
11. B yathâ hikvâraukvârakilikilâ karetsu ca | C yathâ hi kâlakilikilâ karetsu devasam°. — 12. B mahâsâdhu satvasâdhu ca çîghrame apratipudgala yeshu || C °mahâsatva sâdhu çîghram apratipudgalah. — 13. B °shitan te eta° C °shitam te eta° BC °parishad iyam | . — 14. BC citto âttama° C °rpitâh | . — 15. C °rpito | .
16. C °rnehi na netre°. — 17. B °sya etena vi° C °sya etat na vi°. — 18. C °vipattim vâ°. — 20. BC hantas trishu° B °pratirbhâ bhava | .

राजा आह ॥

ददामि तेषु पुत्र पदेषु प्रतिभूतामहं तव ।
ततो निवर्तये चित्तं मूने उदाहरतो भव ॥

कुमारो आह ॥

दिव्या मे भोन्तु कामगुणा ते च भोन्तु सर्वदा सुखा ।
ते च नित्या शुभा भोन्तु अत्र मे प्रतिभूर्भव ॥
अप्सरा मधुरं गगने परिगायेन्तुः वरबुद्धिवरं प्रवरं ।
मधुरं सखिलं सुखिनं सहितं वरनूपुरमण्डनआभरणा ॥
न खु रज्यति सत्पुरुषस्य मनो मदनेषु यादृशमुदाहरति ।
विवहिष्यति काञ्चनबिम्बनिभां वसुधामनेकलब्धार्थचितां ॥
एवं च दुःखितो राजा कुमारमेतदब्रवीत् ।
प्रसीद पुत्र कस्य सुखा कामगुणा तथा शुभाः ॥

कुमारो आह ॥

हन्त अन्यानि वक्ष्यामि द्वे पदानि महीपते ।
यदिच्छसि एवं समानं तेषु मे प्रतिभूर्भव ॥

राजा आह ॥

इदमभ्युपगच्छामि प्रतिभूत्वं अहं तव ।
द्वेहि पदेहि [146b] आख्याहि मा च विप्रवहाहि मे ॥
अहंकारं ममकारं मा संजाये कदाचि भो ।
महन्तो त्वो वा महीपाल अत्र मे प्रतिभूर्भव ॥

2. BC na vāmiṣu pu° B °tibhūtām a° C °tibhūtam ahaṃ tataḥ | . — 3. C °rtaye cittaṃ mamam udāharato bhavat | B °cittaṃ me mūle sudāharato bhava ‖ . — 5. BC divyaṃ me bho° C °ca bhontu sadā sukhā | .

6. B °bhontū a° C °pratirbhūr bhavaḥ | . — 7. C apsarāṃ ma° B °dhura gaga° C °gagane pa° BC °parimāyetaṃ° C °ddhipravaraṃ | B °ddhipravaraṃ varaṃ | . — 8. C madhuraṃ sakhinaṃ sahitaṃ sahi° BC °varānu(C °nū)pūramaṇḍanābharaṇā ‖ . — 9. BC na khu rājyāyaṃni(? C °rājyāni) sapu(B °tpu)ru° C °ni udāhati B °ti si°. — 10. BC vivahi° B °shyati | kā ° nibho vasu° C °nibhan vasundharāṃ ano ° labdhārthā tāṃ | B °labdhārthaṃ nicitāṃ ‖ .

11. B °ḥkhitāṃ rāja māram abravīt | C °rājā māraṃ ca eta°. — 12. C °sukhakāmaninda tathā° B °khākāmaninda tathā° C °çubhā | . — 14. C hantu a° B °kshyāsi dve°. — 15. C yadicchasi me samānā ° r bhavaḥ ‖ .

18. C dvihi pa ° hi mā ca vi°. — 19. C °mamākāraṃ ātmajāye° B °mā sam jāye°. — 20. C °hanto vā ma° BC °pāla ahaṃ me pra° B °tirbhū bha° C °r bhavaḥ | .

ततो महेश्वरा वाचा व्याहरेन्सु नभे स्थिताः ।
त्वं खु मेध्यसि संबुद्धो सर्वबन्धनसूदनो ॥
किंकारणं न तेषां हि वचनानां सदेवके ।
लोके ऽस्ति उदाहर्ता यानि भाषसि चक्षुमां ॥
ततो शुद्धोदनो राजा दुःखशल्यसमर्पितः ।
अश्रुपूर्णेहि नेत्रेहि बोधिसत्त्वमिदमब्रवीत् ॥
नामाप्यहं न जानामि एतेषां पुरुषोत्तम ।
पदानि यानि कीर्तेसि नाथ प्रतिभुवो ऽहं ॥

कुमारो आह ॥

अलं चिरेण एकस्मिं पदे प्रतिभुवो भव ।
ततो इहैव निवसिष्यं रम्ये कपिलसाह्वये ॥
भवे दानि अहं पुत्र एकस्मिं पदे तव भवे ।
प्रतिभुवो शीघ्रं ब्रूहि उपगतं मया अह ॥

कुमारो आह ॥

इहैव वसतो मह्यं प्रासादवरलोकके ।
सर्वनीवारणापगतं चित्तं मे वर्ततां वशात् ॥
ततो देवा च यक्षा च गन्धर्वा च सदानवा ।
नागराक्षससंघाश्च अहो धर्मं उदीरयन् ॥
अहो परमवादिस्य परमार्थाभिकाङ्क्षिणो ।
अत्रं परमवाक्यानि प्रभवन्ति मुहुर्मुहुः ॥
ततो दीनमनो राजा कुमारमेतदब्रवीत् ।
नात्रावासो मह्यं पुत्र अशुचेवं प्रमुचति ॥
ततो देवमनुष्याणां प्रामोद्यजननीं गिरां ।

1. B °çvaro vā° BG °retau nabho sthitaḥ ||. — 2. C °ndhanasudanaḥ |. — 3. C °ṇa ca teshāṁ vaca° B °shāṁ ca vaca°. — 5. C °rpitāḥ |.
7. C °ttamaṁ | B °ttamaḥ |. — 8. BC pādāni yā° C °si nāti prati°. — 10. C °de prātibhu°.
11. C °hvayaṁ |. — 12. BC °putro eka° C °de tadbhavet | bhave prā° B °bhave (? os bhavo) |. — 13. C prātibhu° BC °ghraṁ kruhi u° C °mayā ||. — 15. C ihaivaṁ va° °varalambake |.
16. C °varaṇopaga°. — 17. C °devavā ca ya°. — 18. BC °rayaṁ ||.
21. B °m etat abra° C °m etam abravīt |. — 22. BC nātravaso°. — 23. B °shyāṇāṁ prā° °ni girā |.

बोधिसत्वो उदीरेन्तो पितरं समभ्यभाषति ॥
अहमजरमारोग्यममृतं पार्थिवोत्तम ।
विपत्तिभयनिर्मुक्तं अभिसंस्थे अनंस्कृतं ॥
राज यन्नित्यं यत्सुखं यच्छुभं तत् मया स्वयं ।
प्राप्तव्यमिति न सन्देहः परित्यज्य धृतिं लभ ॥

अथ खलु राजा शुद्धोदनो यं कुमारो जम्बुच्छायायां ध्यायति तं दृष्ट्वा चिन्तासागरं प्रविष्टो ॥ यदि कुमारस्य शान्तेहि ध्यानेहि चित्तमभिरमति मा हैव तावदसितस्य ऋषिस्य सत्यं व्याकरणं भविष्यति । यन्नूनाहं कुमारस्य विस्तीर्णमन्तःपुरमुपस्थापयेयं विविधानि उद्यानानि कुर्यात् यत्र कुमारो क्रीडित्वा रमित्वा प्रविचारेत्वा न च अभिनिष्क्रमणे चित्तं करेय्या ॥

अथ खलु शुद्धोदनेन कुमारस्य विस्तीर्णो अन्तःपुरो उपस्थापितो बहूनि स्त्रीसहस्राणि विविधानि च नानाप्रका[147ᵃ]राणि अशोकमण्डपकानि कारापितानि अवसक्तपट्टदामकलापानि मुक्तपुष्पावकीर्णानि यत्र कुमारो क्रीडिष्यति प्रविचारयिष्यति न च नं अभिनिष्क्रमणे चित्तं करिष्यति ॥ राजा दानि शुद्धोदनो अन्तःपुरे सन्दिशति ॥ सुष्टु कुमारमभिरमापेथ नाट्यगीतवादितेन यथा कुमारो अभिनिष्क्रमणे चित्तं न करेय्या ॥ कुमारो पि दानि कामेषु आदीनवदर्शी अनर्थको सर्वकामभोगेहि । एदृशेषु च उद्यानेषु देवभवनसदृशेषु अन्तःपुरेषु अप्सरसदृशेषु रतिं न विन्दति । अभिनिष्क्रमणे चित्तं अभिरमति न च बोधिसत्वो केनचिच्छोदयितव्यो दुःखो यं संसार इति । सर्वधर्मेषु वशवर्ती स्वयमेव सामतो विरक्तो भवति उद्विपमानसो स्वयं चित्तमुद्वेजयति । अहो संसारो प्रकृतिदुःखमपरिमितमुपद्रवशतानि दर्शयति ॥

1. B °udâreto pi° C °udîrato pi° mabhâshati | . — 2. C aham âtmakumârogyam amṛ° B aham ajâram â° vottamam̃ | C °vottam̃ | . — 3. C °bhayam̃ nirmuktam̃ adhigamya saṁkṛ° B °spe asaṁskṛitam̃ | . — 4. C râjâ maya nityam̃° B râjan maya nityam̃° C °tat mayâ prâ°. — 5. C °tyajati dhṛiti labhâ ‖ B °dhṛitir labhâ ‖.

6. C °kumâra jam̃° BC °sâgaram apravishṭo yadi°. — 7. BC °mati | mâ hai° d aṣitasya° C °tasya satyavyâka°. — 8. C °stîrṇṇa amantaḥ° C °ramyâ pravicâreyâ na ca a° C °abhramaṇam̃ cittam̃° B °maṇa cittam̃°.

11. C °khalu râjñâ ṣu° rṇṇo ntaḥpura u° C °bahuni strî° kârâṇi ca aço° B °çokapaṇḍa° C °ṇḍapatâkâni kâ° BC °avaçakta° B °pravicarishyati° C °rayishyati | na cainam̃ abhi°. — 14. BC °re sam̃diçati sushṭu°. — 15. BC °petha | nâṭya° dyetha ya° B °kareyyâ ku°.

16. C °âdînavam̃ darçâvî anarthikâ sam̃ravakâma° B °anarthikâ sarvakâ sarvakâma°. — 17. B °parasadṛiçe ratim̃°. — 18. C °abhkramaṇe evam̃ cittam̃° B °kenaciccheda(ou °echâda)° C °cicchâdayi° B °iti sarva°. — 19. B °vaçavartti svayam eva syâmato° C °rtti svayam evam̃ syâmato°. — 20. BC °sam̃sâra pra° BC °duḥkha upa° C °mita upadra°.

संबाध्यति वा संक्रमति वा परस्परं । इमं तात धनक्षयं पश्यामि ॥ अस्ति परचक्रभयं दृश्यति धर्मसंस्कारदोषभयं हस्तच्छेदा कर्णच्छेदा शीर्षच्छेदा विविधा नानाप्रकारा अनेकपर्यायेण अस्मिं काये दुःखानि संक्रमन्ति । इमं तात परचक्रभयं पश्यामि ॥ राजा शुद्धोदनो आह ॥ अलं पुत्र मा एतं चिन्तयाहि । सम्प्रति तरुणो प्रथमयौवनगतो सि राज्यसुखमनुभवाहि विस्तीर्णस्मिं अन्तःपुरे यौवनसम्पन्नो ताहि सार्धं क्रीडाहि रमाहि प्रविचारेहि मा प्रव्रज्याये चित्तं करोहि ॥ कुमारो आह ॥ यदि मे तात अष्ट वरां अनुप्रयच्छसि ततो अहं न भूयो एतमर्थं चिन्तयिष्ये ॥ राजा आह ॥ आख्याहि मे पुत्र शीघ्रं कीदृशानि अष्ट वराणि यानीच्छसि यदि शक्तिर्वा बलं वा अस्ति ततो ते प्रदास्यामि । किं पुत्र मम राज्यं परिहायिष्यति यदहं तव पुत्र वरं न प्रदास्यामि ॥

कुमार आह ॥ इमानि मे तात अष्ट वराणि अनुप्रयच्छाहि । यदि मे यौवनं जरा नाक्रमेया । यदि आरोग्यं व्याधिर्नाक्रमेया । यदि मे जीवितं मरणं न हरेया । यदि मे त्वया सार्धं विप्रयोगो न भवे । एदृशमन्तःपुरस्फारसाहस्रं विस्तीर्णो च ज्ञातिवर्गो न विप्रवेशेया राज्यातो च ऐश्वर्यातो च न विपरिणामान्यथीभावो भवेया । ये पि सत्वा मम जातमात्रेण अमृतसुखेन अभिनिमन्त्रिता तेषां पि [148a] सर्वेषां क्लेशप्रशमो भवेया । ममापि जातिजरामरणस्य अन्तो भवेया ॥ राजा शुद्धोदनो आह ॥ पुत्र कुतो मम एदृशं व शक्तिर्वा बलं वा अस्ति यदहं इमां एदृशां अष्ट वरा प्रयच्छेयं । ये पि ते पुत्र पूर्वा राजानो दीर्घायुष्का यथा महासम्मतो राजा महातेजो दृढधनुः शतधनु निशान्तायु युगन्धरप्रभृतयः

1[b]. BC °hastacchedāṃ ka° C °ṛṇṇacchedāṃ nāḍacchadāṃ çī° B °ṛṇṇacchadāṃ çī° BC °rshacchedāṃ vivi° C °prakāraṇā ane ° ryāyena | asmiṃ kā ° kramati B °kramati | . — 4[b]. B °tra māṃ etaṃ ci° C alaṃ māṃ etaṃ ci° BC °yāhi saṃ°. — 5[b]. BC °stīrṇṇāi te a° C °yauvanesaṃpanno° BC °nno tahi sā° C °ārddha krīḍehi ramehi pra° B °krīḍahi ramahi pravi° C °cārehi pravrajyāya cittaṃ karoti || B °rohi kumā°.

7[b]. BC °shṭa varāṃ anu ° si | tato° BC °ahaṃ ca bhū° C °m artha ci°. — 8[b]. C °putra kīdṛ° B °shṭa varāṇi prayacchasi° C °ṇi yad icchasi | ya ° sti tato pra° BC °syāmi kiṃ°. — 9. BC °rājya pari° B °shyati tad ahaṃ° C °shyati | tad ahaṃ tavaṃ putra va°.

11[1]. C kumāro ā°. — 11[2]. B °varāṇi a° C °cchāmi prathamayauva°. — 11[2]. B yadi me jauva°. — 12[1]. C yaṃ ārogyaṃ vyādhi nā°. — 13[1]. C °yogo na°. — 13[2]. B edṛçaṃ antaḥpurarapa° C °puraṃ sa edṛ° B °jñātirvarga na vi° C °vargaṃ na vi° B °veçayā rā ° çva-ryāyāto° BC °ṇāmānyathībhā°. — 15. B °ntrito te° C °ntrito | teshāṃ pi sarvakleçapra° BC °praçamā bha°.

17[2]. BC °çaṃ vā ça °haṃ imām edṛçām ashṭa° B °shṭa va pra° C °pravecchayaṃ | . — 18. B °tra yauvrāṇāṃ rājā° C °pūrvāṇāṃ rājā° BC °thā mahāsamato rājā° C °çintāyu-gandhanapra° B °yugandhanapra° C °sthāpito B °pitāh kuto°.

कुत्र राजवंशा ते पि च पुत्र सर्वे अनित्यतावशेन पर्यन्तोपनीता नाममात्रा च शेषाः स्थापिताः । कुतो पुत्र मे बलं शक्तिर्वा अस्ति तव इमे ईदृशानष्ट वराननुप्रयच्छितुं ॥ कुमारो आह ॥ यदि तात न उत्सहसि त्वं मम इमानष्ट वराननुप्रयच्छितुं अहं च ते निमन्त्रेमि जरामरणस्य अन्तो भवेया ॥ राजा आह ॥ जीर्णो वृद्धो गतयौवनश्च ततो मम मृतस्य पश्चात्प्रव्रज्याहि ॥ कुमार आह ॥ उद्यं अनुभवाहि तात जीवन्तो पुनर्द्रक्ष्यसि मम इह सर्वगतिविमुक्तं सर्वतृष्णाच्छिन्नं सर्वदुःखविगतं सर्वज्ञानाक्लेशापरीतस्य सर्वबोध्यङ्गरत्ना भावयन्तस्य ॥

अथ नृपति तस्य प्रमदागणानुपदर्शयति । इमन्ते पुत्र उदारं वरविमलकमलनयनमणिवरचिरपीनपयोधरा शुकनिभासगात्रा विचित्राभरणा कठिनशुभवासितकरचरणा सुकुमारप्रवरभ्रमरांजनकेशा रक्तांशुकप्रावरणवलयमणिमुक्तिकहारावनद्धा तुलाकोटिवलयनूपुरपंचाङ्गिकतूर्यनिनादं कुर्वन्ति । एताहि पुत्र अभिरमाहि मा प्रव्रज्यामभिकांक्षाहि ॥ कुमार आह ॥ पश्य तात स्त्रीसंज्ञी भवेय यो अत्र रज्येया कङ्क्षेया प्रमदेया ॥ राजा आह ॥ तव कीदृशी संज्ञा भवति ॥ कुमारो आह ॥ ममात्र विपरीतसंज्ञा भवति ॥ राजा आह ॥ कीदृशी ते पुत्र विपरीतसंज्ञा भवति ॥ कुमारो आह ॥ एदृशी मे तात विपरीतसंज्ञा भवति । यथायं कायो यत्र युक्तो आगच्छति गच्छति यत्र स्थाति निषीदति यत्र भावयति तूष्णीं भवति यत्र वाहितं शून्यं निरीहकं बलं दुर्बलं माया च विसंवादकं सर्वमेव धर्मकायं प्रवदन्ति ॥ राजा शुद्धोदनो आह ॥ यदि पुत्र रूपेण न रज्यसि [148b] किमिदं निष्पुरुषेण रज्यसि कं त्वं दर्शनमुपनयसि ॥ कुमारो आह ॥ यदिदं

2. C °putro me° BC °asti na ca ime idṛçā°. — 3². B °utsaha tvaṁ° C °imāṁ ashṭa°. — 4². C °jarāmaraṇasya tataḥ mama mṛtakasya° BC °paçcāt pravra°. — 5¹ C °māro ā°. — 5². C udagrā ann° r drakshasi° B °kshyasi | ma° C °jñānakleçā °bhāvayamānasya ‖.

8¹. B °gaṇā rūpada°. — 8². C imaṁ me putraṁ udā° kamalanayanā maṇi° jodharāṁ çukra° B °dharāṁ çukra° BC °gātrāṁ vicā° ramāṁ kathinaçubhavāçi(B °vāsi)takaracaṇamka° keçā rajañçuka(C °krajaṁ° B °ktikaphāravaraddhā tilakāpilakānupalapañcā° C °hāravaraddhā tilakāpiṅkanoparaṁ pañcā°.

11. BC etāhi pu° kāṁkshayāhi ‖. — 12². C paçya tāta° BC °saṁjñā bhaveyā so a° B °tra rājye° C °dyeka ‖. — 13². C °saṁjñā ‖. — 14². B °sati | yathā°. — 15² C °tāta mama vipa°.

16. B °yo yantrayukto ā° C °yukta āga° yatra sthāsi nishī° B °āgacchati | yatra sthāsi nishī° C °çūnya nirīhakaṁ balaṁ abalaṁ māyā ca visaṁvādikaṁ sarvakāyadha° B °visaṁvādakaṁ savam evaṁ dha° BC °dharmakāyā pravadanti ‖. — 18². C °rūpeṇa na rakshasi | ki° B °jyasi | ki° C °m idaṁ purusha na nishpurushena kena darça° B °sheṇa na rakshasi na kena darça° BC °rçanaṁ nopala(C °rakshayāmi ‖. — 19¹. C °māra ā°. — 19². C °m uparantayā ‖ ya° BC °yantraṁ vijñā°.

तात संसारनाटकमुपदर्शयामि यत्तवविज्ञानमटवेदनविकारं जनयति । त्रैधातुकं रंगं स्थानं सत्वानां कृतविकृतिषड्गतिषु रंगं प्रविशति तृष्णास्नेहवरं च क्लेशशतानां गाम्भीरता । एवं पुरिमा कोटि न प्रज्ञायति परस्परं नाटकं सत्वानां वंचनवह-लविपाटकं ॥ नास्ति सो सत्वो वा सत्वकायो वा यो संस्कारेषु न सन्नीकृतो न वंचितो यथापरं युक्तनेषु । ततो उदग्रमनुभवाहि तात संसारनाटकं विनिव-र्तयित्वा समर्थनिर्वाणपुरमनुप्रवेक्ष्यामि यत्र जरामरणं नाक्रामन्ति पूर्वमेव यद् परिमार्गयिष्ये यन्नं पुरिमकेहि तथागतेहि अर्हन्तेहि सम्यक्संबुद्धेहि परिमार्गितं ॥

राजा आह ॥ इदं ते पुत्र विमानं देवभवनसदृशं समृद्धं तव चान्तःपुरं त्वं पि पुत्र अभिरूपयां वरलक्षणपुण्यसहस्रचितो किमिदं पुत्र रतिं न विन्दसि अपि तु निष्क्रमणमेव अभिकांक्षसि विहाय नगरपुरं ॥ कुमारो आह ॥

गतिषु सत्वसमानसो गुणोहि
मम तात मे येन न अस्ति रति ।
जराव्याधि रिपुर्मरणं तृतीयं
अभिमर्दति तेन मे नास्ति रतिः ॥
यदि नित्यसुखं आतुमनो भवे
यदि वात्मनो दुःखवरं न भवे ।
यदि संस्कृतमव्ययमिदं न भवे
अथ किंच ममातु रतिर्न भवे ॥
उपलभ्यति कायो करण्डसमो
उपलभ्यति काये च सर्पसमा ।

1. C °kaṁ raṅgasthānaṁ sa° vikṛitashaḍgati paraṅgaṁ pra° B °vikṛitishaḍgatāṁ paraṁ-gaṁ pra° B °kleçaçatātaṁ gāhhiratā evaṁ° C °hhinatā | . — 3. C °tvānāṁ vacana° pāka-taṁ | B °pātamaṁ | . — 4. C °tvo satvo vā satvakāyo vā yo tā yena saṁ° B °vā yo na saṁ° C °sku narkhali° BC °neshu tato°. — 5. B tato ugram anu° B °maṁsānāta° tvā sa-marthu ni° C °pravekshāmi | ya° BC °daṁ parimāgayishye(C °gayeshyāṁ | ) yo te pa° C °makehi arha° B °makehi gathāgathehi a° C °nteki saṁmya° māgataṁ | .

8. C °vimānāṁnāṁ devaparasadṛi° BC °ddhaṁ tena cā° C °cāntahpu° bhirupavāṁ° B °rūpaṁ varalakshaṇapuṁnya° C °hasracitaṁ | ki° B °sracitaṁ ki° C °shkramanam evaṁ abhi° BC °nagaraṁpuraṁ | .

11. BC °ta yena me nāsti ratir jarā°. — 13. B °dhi riyur ma° C °ripu mara° BC °tena mama nāsti ratir ya°. — 15. B °khaṁ ātma bhave | yadi° vā ātma° C °khaṁ ātmabha-vejaṁ yadi vātma° bhkhavaraṁ na bhavet | .

17. B yadi saṁkṛi° C °daṁ na bhaved atha kasya ma° B °athaṁ kasya ma° r na bhave upa° C °r na bhavet | . — 19. BC upalabhyati kāye kara° C °ṇḍasamā upalabhyati vāma ca sarpa° B °samo upalabhyati | samitra°.

उपलभ्यति स्कन्ध अमित्रसमा
अथ किस्य ममातु रतिर्न भवे ॥
यदि कायो करण्डसमो न भवेत्
यदि वा तव सर्पसमा न भवे ।
यदि स्कन्ध अमित्रसमा न भवे
अथ किस्य ममातु रतिर्न भवेत् ॥
यदि . . . . . . . . . . . .
. . . . . दुःखक्रिया न भवेत् ।
यदि जातिजरामरणं न भवेत्
अथ किस्य संसाररतिर्न भवेत् ॥
यदि शून्यग्रामनिलयो न भवे
यदि तं विरागवधको न भवेत् ।
संस्कारधातु समयो न भवेत्
अथ किस्य ममातु रतिर्न भवेत् ॥
यदि शिष्यप्रतोदमिदं न भवेत्
यदि राजकुलस्य भयं न भवेत् ।
यदि सर्वभयं त्रिभवे न भवेत्
अभिनिष्क्रमणो ममतो न रतिः ॥

अथ राजा शुद्धोदनो यदा सर्वोपायेन न शक्नोति कुमारस्य चित्तं विनिवर्त- [149ᵇ]यितुं तदा राज्ञो एवं भवति ॥ यदि न केनचिदुपायेन शक्नोमि कुमारस्य चित्तं विनिवर्तयितुं यं नूनाहं यत्तिका कपिलवस्तुनगरे कन्या तां सर्वां कुमारस्य उपदर्शयामि न कचिज्जनतायाः कन्यायाः कुमारस्य चित्तं अभिरमेत् ॥

1. B °amitraskandhasamā atha° C upalabhyati amitraskandhasamā | atha° B °ratir na bhave yadi vā° C °ratir na bhave | . — 3. C yadi kāryakaraṇḍasamā na bhavet | yadi vā° BC °vā tava sarpa° C °bhavet | . — 5. C °mā na bhavet | a° B °mā na bhavet | a°.
7. BC yadi saṁ(C °sa)vasannānaduḥ° B °bhaved yadi°. — 9. C °ṇaṁ bhavet | a° B °ṇaṁ na bhavet | a°.
11. B °yo na bhaveyaṁ | yadi taṁ° C °yo na bhavet | ya°. — 13. BC yadi saṁskā° C °skāravadhatta sabhayo° BC °yo na bhavet | a° C °mamātra ra°. — 15. BC °pracodam idaṁ na bhavet | yadi rā° B °kulabhayaṁ° C °kulaṁ bhayaṁ°.
17. B °tribhave na bhaved abhi° BC °nishkra(B °shkrama)ṇa evaṁ mama tāta amṛtaṁ ‖ . — 19. C atha khalu rā°. — 20. BC yadi na ke° yena na çakno° yituṁ | yaṁ nū° yānī na kāciñ ja° C °j janakāyāḥ kanyā° bhiramate | .

बोधिसत्त्वो पितरमभिमन्त्रयति उद्यानभूमिं निर्यास्यामीति ॥ राज्ञा शुद्धोदनेन अमात्या आज्ञप्ता ॥ यावद्राजकुलं यावच्च उद्यानभूमिं अत्रान्तरे प्रतिजागरथ सिक्तसंमृष्टं विततवितानं चित्रदूष्यपरिक्षिप्तं अवसक्तपट्टदामकलापं धूपितधूपनं मुक्तपुष्पावकीर्णं देशेदेशेषु धूपयन्त्राणि माल्ययन्त्राणि नटनर्तकल्लमल्लपाणिस्वर्याकुम्भतूर्या मानापिकानि रूपशब्दगन्धानि उपस्थापेथ अमानापिकानि उद्वर्तापेथ । यथा कुमारो उद्यानभूमीमभिनिष्क्रान्तो न किंचिदमनापं पश्येय ॥ एवं राज्ञो वचनमात्रेण अमात्येहि यावच्च राजकुलं यावच्च तां कुमारस्य उद्यानभूमिं यथाज्ञप्तं मार्गं प्रतिजागरितं देशेदेशेषु च पुरुषा स्थापिता यथा कुमारस्य पुरतो न किंचिज्जीर्णो वृद्धो व्याधितो वा काणो वा खञ्जो वा दर्दुरो वा कण्डूलो वा कच्छुलो वा विचर्चिको वा अन्धो वा किंचिदमनापं कुमारस्य उद्यानमभिनिष्क्रमन्तस्य पुरतो तिष्ठेया ॥ एवं कुमारो महार्हेण महारत्नचित्रेण यानेन महता राजानुभावेन महता राजऋद्धीये महतीये विभूषाये उद्यानभूमिं निर्यातस्य राजपुरुषा वामदक्षिणेन उत्सारणां करोन्ता गच्छन्ति यथा कुमारो न किंचिदमनापं पश्येया ॥ एवं कुमारो मानापिकानि रूपाणि पश्यन्तो मानापिकानि शब्दानि शृण्वन्तो मानापिकानि गन्धानि घ्रायन्तो उभयतो वामदक्षिणेन अञ्जलीशतसहस्राणि प्रतीच्छन्तो विविधानि च चूर्णवर्षाणि प्रतीच्छन्तो कपिलवस्तुतो उद्यानभूमिं निर्धावन्तस्य घटिकारेण कुम्भकारेण शुद्धावासदेवपुत्रभूतेन तदन्येहि च शुद्धावासकायिकेहि देवपुत्रेहि जीर्णो पुरुषो पुरतो अभिनिर्मितो जीर्णो वृद्धो महल्लको अध्वगतं वयमनुप्राप्तो श्वेतशिरो तिलकाहतगात्रो भग्नो गोपानसीवङ्को पुरतोप्राग्भा[149b]रो दण्डमव-

1b. B rājño ça° BC °ṇattā yā°. — 2. C °atrāntaraṃ pratijāgṛthā si ° ptaṃ opakta° B °osaktapatradā° C °lāpaṃ dhupi° B °ṛṇṇaṃ deçadeçeṣu° C °kirṇṇaṃ deçedeçeshyasu dhūpayantrāṇi naṭa° B °mālyayantrāṇi naḥ narttakapi° C °svayāṃ kuṃbhatūni mānā° B °çabdagandhā ° sthāpetha amanamāyikāni udvarttāyetha | C °amanāpikāni upasthāpetha | .

6a. C °d amanāṃpaṃ pa° BC °çyeyā evaṃ°. — 6b. C °rājñā va° C °laṃ yāvaccaṃ tāṃ° B °bhūmi yathājñaptaṃ mā ° jāgratāṃ° C °sthāpitāḥ ya ° dhito vā kāṇo vā khā° B °ḍo vā durduro vā kaṇḍūlo kacchulo° C °abhikramatasya°.

11. BC °mahārhaṃ ca mptu° C °purusho vā ° tsāraṇaṃ karo° B °ṇāṃ karentā gacchanti | ya°. — 13. C °ro nāmāpikāni paçyanto nāmāyikāni ça° B °ro mānāyikāṃ nirūpāṇi paçyanto mānāyikāni ça ° ṇvanto mānāyikāni ga° C °ṇvanto | nāmāyikāni ga° C °añjalīṃçata° B °rāṇi praticchanto vi ° rshāṇi saṃpratisanno kapi° C °rshāṇi sapratichanno kapi° B °bhūmi nirdhā° C °ṭikāreṇa ca kumbhakāreṇa çuddhāvāsadevaputrahi jīrṇṇo puru ° nirmitto jīrṇṇa vṛddhaṃ mahallakaṃ adhvagatavaya° B °rmito jīrṇṇaṃ vṛddhaṃ mahallakaṃ adhva° BC °nuprāptaṃ çve° B °bhagnagopā° BC °kro puratoprā ° shṭavyamānai° C °nai gātrai° B °trai gaccha° BC °cchantaṃ | .

ष्टम्भमानैर्गात्रैरुच्छ्वसन्तो ॥ बोधिसत्वो तं दृष्ट्वा सारथिं पृच्छति । किमिमो पुरुषो एवं प्रतिकूलो जीर्णो वृद्धो महल्लको अध्वगतवयमनुप्राप्तः श्वेतशिरो तिलकाहतगात्रो भग्नो गोपानसीवक्रो पुरतःप्राग्भारो दण्डमवष्टभ्य प्रस्खलमानैर्गात्रैः गच्छति ॥ सारथि आह ॥ कुमारो किं ते एतेन पृच्छितेन एष पुरुषो जीर्णो नाम वयपरिणतशरीरो । गच्छाम उद्यानभूमिं तहिं देवकुमार पंचहि कामगुणेहि क्रीडाहि रमाहि प्रविचारेहि ॥ कुमारो आह ॥ भो भणे सारथि वयमपि जराधर्मा जराधर्मतायामनतीताः । यत्र नाम जातस्य जरा प्रज्ञायति अत्र पण्डितस्य का रति ॥ कुमारो आह ॥ सारथि निवर्तेहि रथं अलं उद्यानगमनाये ॥

कुमारो पुनर्निवर्तित्वा गृहं प्रविष्टो ॥ राजा शुद्धोदनो अमात्यां पृच्छति ॥ भो भणे किं कुमारो पुनर्निवृत्तो उद्यानभूमिं न निर्गतो ॥ अमात्या आहन्सुः ॥ महाराज कुमारो जीर्णं पुरुषं दृष्ट्वा निर्यान्तो न भूयो उद्यानभूमिं निर्गतो ॥ राज्ञो भवति । मा हैव यथा असितेन ऋषिणा कुमारो व्याकृतो तथा भविष्यति ॥ राज्ञा कुमारस्य अन्तःपुरं संदिष्टं । सुष्ठु कुमारं क्रीडापेथ रमापेथ प्रविचारापेथ नाट्येहि गीतेहि वादितेहि यथा कुमारो गृहे अभिरमेया ॥ यथा देवलोके एवं कुमारस्य एवंरूपा अन्तःपुरे संगीति वर्तन्ति । न च कुमारस्य संगीतिषु मनं गच्छति । तमेव जीर्णं पुरुषं स्मरति ॥

अपरकालेन कुमारो आह ॥ उद्यानभूमिं निर्यास्यामीति ॥ राजा आह ॥ मानापिकानि रूपशब्दानि उपस्थापेथ यथा कुमारो उद्यानभूमिं अभिनिष्क्रमन्तो न किंचिदमनापं पश्येय ॥ एवं राज्ञो वचनमात्रेण अमात्येहि याव च राजकुल

1¹. B °satvaṃ taṃ° BC °dṛṣṭvā kiṃ i°. — 1². C °evaṃ pra° BC °kalo pṛcchati(C °ti | ) ji° C °śila tila° śvakāro puratoprā° BC °gbhārā daṇḍa° ṣṭavyaḥ prakha° B °nai gātraiḥ° C °traiḥ ‖. — 4². B kumāra kiṃ ca° C kumāra kin te etena pṛ° na esho pu° BC °riro ga°. — 5. C °mim tarhi de° BC °kumāro paṃ°.

6². B °m api janadharma jarādharmatā° C °m api jarādharmatāyā° BC °tītāḥ ya°. — 7. C °ratiḥ | . — 8². C sārathiṃ niva° BC °nāye kumā°. — 9¹. C °punaḥ nivarti° BC °viṣṭho ‖. — 9². B °amātyaṃ pṛ° C °amātyāṃ pṛ°. — 10¹. C bho bhāṇe° B °r nivṛtto u° C °r nivṛtte u°. — 10². B amātya ā°.

11¹. C °dṛṣṭvā niyanto° B °dṛṣṭvā niyanto° C °rājñām | . — 11². BC °vati mā°. — 12. C °haivaṃ ya° BC °thā asitena ṛṣiṇā ku° °ṣyati rā°. — 13¹. C °ḥpure saṃdṛṣṭitaṃ B °ḥpure dṛṣṭitaṃ su°. — 13². C °ḍāyetha rāmayetha pra° BC °cārayetha | nā° moyā (C °yā | ) evaṃ kumārasya yathā°. — 14. B yathā loke | (C °ke) evaṃ ku° C °ti vartiṃti | .

16. BC tam evaṃ jī° C °jīrṇa pu° BC °rati apa°. — 17¹. B aparaṃ kāreṇa ku°. — 17². C °bhūmi nirddhāriṣyāmi ‖ . — 18. B mānāyikāni rū° °petha | yathā° BC °bhūmi abhi° C °ṣkramaṃtasya purato(p. mir. l. 6)° B °cid anāpaṃ°. — 19. B °pratijāgrataṃ° B °rathā sthānabhūmi niryā° °ṇo vā khoḍo va draḍolo vā kaḍulo vā kacchu° °paṃ | ku°.

यावच्च तां कुमारस्य उद्यानभूमिं यथागत्तं मार्गं प्रतिजागयितं देशेदेशेषु च पुरुषा स्थापिता यथा उद्यानभूमिं निर्यान्तस्य पुरतो न कश्चिज्जीर्णो वा वृद्धो वा व्याधितो वा काणो वा खञ्जो वा दर्दुरो वा कंडूलो वा कच्छुलो वा विचर्चिको वा अन्यो वा किंचिद्मनापं कुमारस्य उद्यानभूमिमभिनिष्क्रमन्तस्य पुरतो न तिष्ठेया ॥ एवं कुमारो महा[150a]र्हेण सप्तरत्नविचित्रेण यानेन महता राजानुभावेन महता राजर्द्धीये महतीये विभूषाये उद्यानभूमिं निर्यान्तस्य राजपुरुषा वामदक्षिणेन उत्सारणां कारयन्ता गच्छन्ति यथा कुमारो न केनचिद्मनापं पश्येया ॥ एवं कुमारो मानापिकानि रूपाणि पश्यन्तो मानापिकानि शब्दानि शृण्वन्तो मानापिकानि गन्धानि घ्रायन्तो उभयतो वामदक्षिणेन अंजलिशतसहस्राणि प्रतीच्छन्तो विविधानि च पुष्पवर्षाणि संप्रतीच्छन्तो कपिलवस्तुतो उद्यानभूमिं निर्धावन्तस्य घटिकारेण च कुम्भकारेण शुद्धावासदेवपुत्रभूतेन तथा अन्येहि च शुद्धावासकायिकेहि देवपुत्रेहि व्याधितो पुरुषो पुरतो अभिनिर्मितो शूनहस्तपादो शूनेन मुखेन पीतपाण्डुवर्णो दकोदरिको नाभीये दकधाराये प्रवहन्तीये मक्षिकासहस्रेहि खाद्यमाना अश्रुप्रवर्षीयो सविगकारको ॥ बोधिसत्वो तं दृष्ट्वा सारथिं पृच्छति । भो भणे सारथि किमिमो पुरुषो एवं प्रतिकूलो पीतपाण्डुकवर्णो शूनहस्तपादो भिन्नमुखवर्णो नाभीये दकधाराये स्रवन्तीये मक्षिकासहस्रेहि खाद्यति ॥ सारथि आह ॥ कुमार किन्ते एतेन पृच्छितेन एषो पुरुषो व्याधिना परिगतशरीरो गच्छाम उद्यानभूमिन्ताहि देव क्रीडाहि रमाहि प्रविचारेहि ॥ कुमारो आह ॥ भो भणे सारथि वयमपि व्याधिधर्मा व्याधिधर्मतायामनतीता । यत्र नाम जातस्य जरा प्रज्ञायति व्याधि च प्रज्ञायति अत्र पण्डितस्य का रतिः । रूपस्य

5. BC °ro mahāraho (B °hona) sapta° C °ddhīye mahatāye vi° kalnṇe utsāharaṇā kāra° B °tsāraṇā kāra° BC °nti ‖ ya°.

7. C °ro mānayikāni rū° B °ro mānāyikāni rū° BC °çyanto mānāyikāni ça° B °çvanto mānāyikāni ga° C °ghrāyanti ubhayaṃ vāma° B °ubhayo vāma° C °jalīṃçata° echantaḥ vividhāni puṣpavarṣāṇi cūrṇṇavarṣāṇi saṃ° BC °reṇa ca çuddhāvāsade° kehi ca deva° C °rusho purusho purato abhinirmmito çūnyahasto pādau çunyena mu° B °stapādau çūne° rṇṇo dakodaliko lābhīye dakavarāye pra° C °rṇṇo dakodalāṃ lābhīye dakavālāye prahārantī ‖ ya ma° dyamāno asrakhāni ahodaçave° B °dyamāno adrākhāṇiahodaçave° BC °rako bo°.

14². B °cchati bho° C °cchati kiṃ ima puru°. — 15². BC °pīto pāṇḍukavṛṇe çū° C °mukho varṇṇo nābhīyo da° BC °dakavārāye° C °khāvati ‖.

17. C kumāraṃ kiṃ te etena pṛ° C °gacchā udyānabhūmiṃ tahi devahi krī°. — 18. C kumāro ha ‖. — 19¹. B °pi vyādhidharma vyādhidharmatā° C °pi vyādhidharmmatāyā vyādhidharmmam ana° B °tītā ya°. — 19². B °nāma yātasya° C °nāma lāyātasya vā prajñāyati vyādhiṃ ca prajñāyati atra° B °dhi ca prajñāyati ‖ atra ca paṇḍi° BC °ratiḥ rū°. — 20. C °bahasya prathamaṃ sarvendriyaṃ vadhaḥ° B °ndriyāṃ vadhaḥ° C °syopaçramo ci° B °çrayāṇāṃ ni° bhaçritānāṃ gri° C °bhaçritānāṃ gṛi° te vapuṣya gra° BC °vyādhisya kā rodvijet ‖.

व्यसनं बलस्य मदनं सर्वेन्द्रियाणां वधः शोकानां प्रभवो रतिव्युपशमो चित्ताश्रयाणां निधि धर्मस्योपशमः गात्राश्रितानां मृद्दं यो लोकं पिबते वपुश्च ग्रसति व्याधिस्य को नोद्विजेत् ॥ कुमारो आह ॥ सारथि निवर्तेहि रथं अलं मे उद्यानगमनाये ॥ कुमारो पुनः निवर्तित्वा गृहं प्रविष्टः ॥ राजा शुद्धोदनो अमात्यां पृच्छति ॥ भो भणे किं कुमारो निवृत्तो उद्यानभूमिं न निर्गतो ॥ अमात्या आहन्सुः ॥ महाराज कुमारो व्याधितं पुरुषं दृष्ट्वा निवृत्तो न भूयो उद्यानभूमिं निर्गतो ॥ राज्ञो भवति । मा हैवं यथा असितेन ऋषिणा कुमारो व्याकृतो तथा भविष्यति ॥ राज्ञा [150b] कुमारस्य अन्तःपुरं संदिष्टं ॥ सुष्ठु कुमारं क्रीडापेथ रमापेथ नाट्येहि गीतेहि वादितेहि यथा कुमारो गृहे अभिरमेया ॥ एवं कुमारस्य यथा देवलोके एवंरूपा अन्तःपुरे संगीति वर्तन्ति । न च कुमारस्य संगीतिषु मनं गच्छति तमेव जीर्णं च व्याधितं च पुरुषं समनुस्मरति ॥

अपरकालेन कुमारो भूयो पितरमापृच्छति । तात उद्यानभूमिं निर्यास्यामि दर्शनाये ॥ राज्ञा अमात्यानामाज्ञप्ति दिन्ना । कुमारो उद्यानभूमिं निर्यास्यति उद्यानभूमिमलंकारापेथ मार्गं प्रतिजागरेथ नगरं च अलंकारापेथ यावच्च राजकुलं यावच्च राजकुमारस्य उद्यानभूमिं सिक्तसंमृष्टं विततवितानं चित्रदुष्यपरिक्षिप्तं ओसक्तपट्टदामकलापं धूपितधूपनं मुक्तपुष्पावकीर्णं देशेदेशेषु च पुष्पयन्त्राणि नटनर्तकऋल्लमल्लपाणिस्वर्याकुम्भतूणिका मानापिकानि च रूपाणि शब्दानि गन्धानि उपस्थापेथ यथा कुमारो उद्यानभूमिं निर्यान्तो न किंचिद्मनापं पश्येया जीर्णं व्याधितं वा काणं वा खोडं वा दद्रुरं वा कण्डूलं वा कच्छुलं वा अन्धं वा गिलानं वा । यथा कुमारो न किंचिद्मनापं पश्येया तथा करोथ ॥ वचनमात्रेण च राज्ञो

3². C sârathiṁ ni° BC °dyânaṁ gamanâye kumâ°. — 4¹. C °nivartiayitvâ grihaṁ praviṣṭo ‖ B °praviṣṭhaḥ | . — 5¹. BC °ṇe hi kumâ° B °nirvṛitto° BC °miṁ nirgato ‖ . — 5². B amâtya â°.

6. B °dṛṣṭvâ nirvṛitto° C °dṛṣṭvâ nirvṛito na° B °miṁ nirgato râ°. — 7¹. C mâ haivaṁ ya° B mâ hava ya° BC °thâ açitena° C °ṛṣiṇâ vyâ° B °dryanti | . — 8¹. BC râjño ku° °ḥpure saṁdṛiṣṭaṁ su°. — 8². C °nâṭyehi gîtehi vâdyehi ya° B °vâditehi | ya° meyâ evaṁ°. — 9. B °nti na ca°. — 10. C °gîtiṣu° B °mana gaccha° C °cchati | tam evaṁ jîrṇṇaṁ ca vyâdhiṁ ca taṁ ca pu°.

12¹. BC tato u° BC °râjâ amâ° °nnâ kumâ°. — 13². B °nagaraṁ ca a° °tha yâvac ca râjakumârasya udyânabhûmi si° BC °puṣpayantrâni na° B °svayâkumbhatûṇikâ mânâyikâni ca rû° C °rûpâṇi çabdâni | yathâ° B °gandhâni yathâ ku° bhûmi niyânto na kaṁcid a° C °niryyântasya na kaṁci° BC °jîrṇṇo vyâ° C °vyâdhiṁ taṁ° C °khoḍâṁ vâ draduiaṁ vâ kaṇḍulaṁ vâ kaccha° B °dadrulaṁ vâ kaṇḍulaṁ vâ kaccha° C °girânaṁ vâ° B °gilânas vâ yathâ°.

20¹. B °cid anâpaṁ paçyati yâ tathâ° BC °thâ karotha vaca°. — 20². C °treṇa râjño° BC °nattâṁ pra° C °jâgṛitaṁ° B °jâgratuṁ° C °dakṣiṇetâ ca pu° B °ussâraṇâṁ karonti | ya° C °niryyâto na kiṁ° B °cid anâpaṁ paçyeyâ evaṁ°.

अमात्येहि यथावृत्तं प्रतिजागरियितं वामदक्षिणतो च पुरुषाः स्थापिता ये जनस्य उत्सारणां करोन्ति यथा कुमारो उद्यानभूमिं निर्यान्तो न किंचिदमनापं पश्येया ॥ एवं कुमारो सप्तरत्नविचित्रेण यानेन विततवितानेन ओसक्तपट्टदामकलापेन हेमजालसंछन्नेन सर्वेत्रयनेन सनन्दीघोषेण मधुरप्रवादेन उच्छ्रितध्वजपताकेन सामात्यपरिजनो महता राजानुभावेन महता राजऋद्धीये महतीये विभूषाये महता समुदयेन उभयतो वामदक्षिणेन अंजलिशतसहस्राणि संप्रतीच्छन्तो कपिलवस्तुतो उद्यानभूमिं निर्याति । घटिकारेण च कुम्भकारेण शुद्धावासदेवपुत्रभूतेन अन्येहि च शुद्धावासकायिकेहि देवपुत्रेहि मृतको पुरुषो कुमारस्य पुरतो निर्मितो मञ्चके समारोपितो पुरुषेहि नीयते ज्ञातीहि अश्रुकण्ठेहि रुदन्मुखेहि परिकीर्णकेशेहि उरं पीडेन्तेहि करुणं प्रलपन्तेहि ॥ कुमारो तं दृष्ट्वा सारथिं पृच्छति ॥ भो भणे [151a] सारथि किमिदं पुरुषो मञ्चकमारोपितो विनीयते ज्ञातीहि अश्रुकण्ठेहि रुदन्मुखेहि प्रकीर्णकेशेहि उरं पीडेन्तेहि ॥ सारथि आह ॥ कुमार एषो पुरुषो मृतो ज्ञातीहि मञ्चकमारोप्य अश्रुकण्ठेहि रुदन्मुखेहि प्रकीर्णकेशेहि उरं पीडेन्तेहि श्मशानं नीयति ॥ कुमारो आह ॥ भो भणे एष सारथि मृतो पुरुषो पितरं वा मातरं वा भ्रातरं वा भगिनीं वा ज्ञातिमित्रसालोहितं वा चिरं वा जंबुद्वीपं पश्यति ॥ सारथि आह ॥ नाम कुमार न एष भूयो पुरुषो मातरं वा द्रक्ष्यति पितरं वा भ्रातरं वा भगिनीं वा मित्रज्ञातिसालोहितं वा चिरं वा जम्बुद्वीपं ॥ कुमारो आह ॥

मरणं तव मम च तुल्यं नैव प्रभुः न बन्धु
ऋतु यत्र परिवर्तते दुर्जयं दुर्विनीतं ।

3. B °vitatavitānaṁ vihārena osa° C °opakta ° saṁcchena savaijaṁtihi sanandigho° B °yantehi sanaṁdigho° C °jano mahato rājaparivārena mahatā rājānubhāvena mahato rājariddhiye ° mahato samu° B °riddhiye vibhū ° aṁjaliṁ çata° C °aṁjaliṁ çata ° cchanto vividhāni ca pushpavarshāṇi saṁpraticchanto | kapi°.

7. C °mbhakāreṇa çuddhovāsadevaputra ° ddhāvāsakehi° B °rasya purusho nirmi° shehi nīyato jñā° C °nicanto jñā° BC °paripūrṇṇa° C °uraṁ pīḍyanto | sārathi° B °uraṁ pīḍaṁtehi karuṇaṁ pralaṁpatehi kumā°. — 10b. B °m āropiya avinīya jñā ° raṁ piṇḍantehi || C °pīḍanta°.

12b. BC kumāro e° C °ñcakam anāropya açrukaṇṭhehi rudanmu° B °uraṁ piṇḍantehi smaçānaṁ nirīyati || C °pīḍyantehi°. — 14b. B °ne evaṁ sā° C °rasho mātaraṁ va pitaraṁ vā bhrā° giniṁ vā miyajñātisārohi° B °ginī vā jñā ° sārohitaṁ° C °traṁ vā jambudvī° B °jaṁbudīpaṁ° C °çyanti | .

16. C āma ku° BC °kumāreṇa e° C °sho bhū° B °kshyati | pitaraṁ vā bhrā° C °mitrajñāti° B °sārohitam vā° C °hitaṁ vā mitraṁ vā jambo° B °traṁ vā jaṁbudvīyam || . — 18. BC maraṇaṁ khalu tava ca mama° C °narvaṁ ça° BC °trah na baṁdhu ritu pa(C °sha)ta pari ° nitaṁ na ça°.

न गणयति कुलीनं न नीचं न नाथवन्तं
दिनकर इव निर्मीतो ऽत्र मार्गेण याति ॥

सारथि आह ॥

कामां संपत्ति राज्यलक्ष्मी रतिं श्रीं
एतां पृच्छाहि सर्वलोकप्रधानां ।
किं तुभ्यं रौद्रं रोगसंतापमूलं
मृत्युं तं दृष्ट्वा यो विनाशो नराणां ॥

बोधिसत्वो आह ॥

जीर्णातुरं मृतं दृष्ट्वा यो नोद्विजति संसारे ।
शोचितव्यः स दुर्मेधा अन्धो ध्वनि यथा नष्टः ॥

कुमारो आह ॥ भो भणे सारथि वयमपि मरणधर्मा मरणधर्मतायै अनतीता । यत्र नाम जातस्य व्याधि प्रज्ञायति जरा प्रज्ञायति मरणं प्रज्ञायति अत्र पण्डितस्य का रतिः । निवर्तेहि रथं अलं मे उद्यानभूमिगमनाये ॥ कुमारो ततो एवं प्रतिनिवर्तित्वा पुनः गृहं गतो ॥ राजा शुद्धोदनो अमात्यानां पृच्छति । किं कुमारो भूयो प्रतिनिवर्तितः न उद्यानभूमिं निर्यातो ॥ अमात्या आहन्सुः ॥ देव कुमारेण मृतको पुरुषो मंचके समारोपितो ज्ञातीहि अश्रुकण्ठेहि रुदन्मुखेहि प्रकीर्णकेशेहि उरं पीडेन्तेहि आर्तस्वरं रवन्तेहि श्मशानं नीयन्तो दृष्टो । तस्य तं दृष्ट्वा संवेगो जातं । ततः एव प्रतिनिवृत्तो ॥ राज्ञो शुद्धोदनस्य एतदभूषि ॥ मा हैवं निमित्तकानां ब्राह्मणानां सत्यवचनं भविष्यति ये ते एवमाहन्सुः । प्रव्रजिष्यति [151b] कुमारो ॥ राज्ञा दानि कुमारस्य अन्तःपुरं दूतो प्रेषितो । वर्षवरा कंचुकीया च सुष्टु कुमारं

1. B °gaṇacati ku° BC °linaṃ nīcaṃ nātha° B °rbhitha atra° C °rbhitaḥ atra°. — 4. C kāmā saṃpatti rā° C °rati çrīḥ etaṃ pṛi° B °tiṃ çrīḥ etaṃ pṛi° C °lokepradhā°.
6. B kin te raudra ro° C kiṃ te raudra rogaṃsatāpa° BC °mrityuṃ dṛi°. — 9. BC jiryṇo āturaṃ° C °shṭvā yā no udvi° BC °re ço°. — 10. C çocitaṃvyo | sa durme° B °çocitavyaḥ | sa du° C °nashṭo ||.
11¹. B °rmatāyaiḥ anatītā ya° C °rmatāyair anati yatra°. — 12. C °vyādhiṃ pra° jariṃ pra° maraṇaṃ pra° BC °ratiḥ ni°. — 13¹. BC °thaṃ | alaṃ° BC °bhūmiṃ gamanāye kumā°. — 14¹. C rā çu°. — 14². C °rtito na u°. — 15¹. B amātya āhansuḥ de° C °āhaṃsuḥ ||. — 15². C °cake çasamāro jñā° B °ropitā jñā° °raṃ piṇḍantehi ā° C °pīḍyante ārtta° B °ravantehi smaçānaṃ nīriyante dṛishṭo tasya° C °çmaçānaṃ nīriyanto dṛishṭvā tashṭvā saṃve°.
17. B °vego taṃ ta°. — 18¹. C tato evaṃ pra°. — 18². BC rājā çu°. — 18³. B mā haiva ni° shyati || ye° C °hataṃḥ | . — 19. B °shyati || kumāro rā°. — 20¹. BC °shile va°. — 20². BC °kīyā ca | su° B °petha | nṛi° C °petha saṃpetha nṛi°.

क्रीडापेथ नृत्यगीतवादितेन यथा कुमारो अभिरमेया ॥ ते दानि अन्तःपुरिका कुमारं सुष्ठु अभिरमेन्ति नृत्येहि गीतेहि वादितेहि न च कुमारस्य अत्र चित्तं वा मनो वा नान्यत्र तां एव जीर्णानातुराभूतां स्मरति ॥

कुमारो भूयः अपरकालेन पितरमापृच्छति । तात उद्यानभूम्यां निर्यास्यामि दर्शनाये ॥ राजा आह ॥ यस्य कुमार कालं मन्यसि ॥ राज्ञा अमात्यानामाज्ञत्तं । उद्यानस्य भूमिमलंकारापेथ नंदनवनमिव देवराजस्य नगरं च अलंकारापेथ यावच्च राजकुलं यावच्च राजकुमारस्य उद्यानभूमिं सिक्तसन्मृष्टं कारापेथ विततवितानं चित्रदूष्यपरिक्षिप्तं ओसक्तपट्टदामकलापं धूपितधूपनं मुक्तपुष्पावकीर्णं देशेदेशेषु च पुष्पयन्त्राणि धूपयन्त्राणि नटनर्तकल्लमल्लपाणिस्वर्यांकुम्भतूणिकं प्रतिजागरापेथ मानापिका पि च रूपशब्दगन्धां यथा कुमारो कपिलवस्तुतो उद्यानभूमिं निर्यान्तो न किंचिदमनापं पश्येया जीर्णं वा व्याधितं वा मृतं वा अन्धं वा काणं वा खोडं वा दद्रुं वा कण्डूलं वा कच्छुलं वा विचर्चिकं वा तथा करोथ ॥ अमात्येहि आज्ञत्तमात्रेहि यथा राज्ञो संदिष्टो तथा सर्वं प्रतिजागरितं देशेदेशेषु च पुरुषा स्थापिताः यथा कुमारो कपिलवस्तुतो उद्यानभूमिं निर्यान्तो न किंचिदमनापं पश्येया ॥ कुमारो पि दानि सप्तरत्नचित्रेण यानेन हेमजालप्रतिच्छन्नेन स्वलंकृतेन सुविभूषितेन सवैजयन्तीकेन सनन्दिघोषेण समुरप्रवालेन उच्छ्रितध्वजपताकेन सामात्यो सपरिजनो महता राजानुभावेन महता राजऋद्धीये महता वियूहाये महता संवृद्धिये महता विभूषाये कपिलवस्तुतो उद्यानभूमिं निर्यातो ॥ निर्यान्तस्य घटिकारेण कुम्भकारेण शुद्धावासकायदेवपुत्रभूतेन अन्येहि च शुद्धावासकायिकेहि देवपुत्रेहि कुमारस्य

1. C tâ dâni a ° ramâpenti | mi ° ttam vâ manam vâ nânyatra tânaivam jirṇṇenâturâm smṛtâ smaranti | B °tâm evam jirṇṇenâtu°. — 5¹. C tâ udyâ°. — 5². C °kumârasya kâ° BC °nyasi râ°. — 5³. B °nâm âṇaṇatiam udyâ°.

6. C udyânabhûmim alamkârâpetha nandana° B °mim alamkâlâpetha | namda° C °vanam i devarâ ° kulam yâvac ca râjakulodyânam bhû ° ktasamṛṣ° BC °oṣakta° C °ṇṇam deçedeshu ca pushpayantrâṇi dhupayamtrâṇi naṭa° B °dhûpayamtrâṇi naṭa° C °tûṇikâ pra° B °tûṇikam | pratijâgarâpetha | mânâyikâ pi ca° BC °bhûmi niryânto° C °nto na kim ° dam vâ rdulam vâ kaṇḍulam vâ kacchulam vicitram vâ tathâ° B °dadrulam vâ kaṇḍulam vâ kacchulam vâ cidram vâ tathâ°.

12. B °ttamâtrehi ya ° jâgratam° C °jâgṛitam° BC °pitâḥ | yathâ ku° C °bhûmi niryyâ°. — 16. C °vaijayantikena sanandighoṣena makho° BC °rapravâreṇa u° C °bhâvena mahatâ jaṛi ° vṛiddhiye mahatâ vibhû° BC °bhûmim niryâ(C °ryyâ)ntasya°.

18. C °ghaṭikâreṇa ca kumbhakâreṇa çuddhâvâsadevaputrabhû° B °mbhakâreṇa çuddhâvâsakodevaputrabhû ° vâsayikehi ca devaputre ku° C °vâsakehi ca devaputrena kumâ ° vrajito kâshâyâmbarâ pragâutendri iryyâpathe sampanna yuga ° harehi kapi° B °kapile râja°.

पुरतो प्रव्रजितो निर्मितो काषायाम्बरधरो प्रशान्तेन्द्रियो ईर्यापथसंपन्नो युगमात्रंप्रेक्षमाणो जनसहस्रे कपिलराजमार्गे ॥ सो दानि प्रव्रजि[१५७']तो कुमारेण दृष्टो दृष्ट्वा च पुनरस्य मनो प्रसीदि । अहो प्रव्रजितस्य प्रज्ञानं ॥ कुमारो तं प्रव्रजितं दृष्ट्वा पृच्छति ॥ आर्यं किमर्थं सो प्रव्रजितो ॥ प्रव्रजितो आह ॥ कुमार आत्मदमशमथपरिनिर्वाणार्थं प्रव्रजितो ॥ कुमारो तं प्रव्रजितस्य वचनं श्रुत्वा प्रीतो संवृत्तो ॥ कुमारो आह ॥ प्रव्रजितो खलु नाम

कषायपटावलम्बितप्रकर्षी वितीर्णे जनविकीर्णे ऐन्द्रमार्गे ।
भूरिकमलरजावकीर्णगात्रो शरवने यथ एकचक्रवाकः ॥

मृगी शाक्यकन्या आनन्दस्य माता । सा कुमारं तादृशीये लक्ष्मीये तादृशाये विभूषाये कपिलवस्तुतो निर्यान्तं दृष्ट्वा गाथाहि कुमारं अभिस्तवति ॥

निर्वृता खलु ते माता पिता पुनः ते निर्वृतो ।
निर्वृता पुनः सा नारी यस्य भर्ता भविष्यसि ॥

बोधिसत्वस्य निर्वाणशब्दं श्रुत्वा निर्वाणस्मिं एव मनं प्रसीदि तिष्ठे संप्रस्कन्दे ।

निर्वाणघोषं श्रुत्वान निर्वाणे श्रोतमाददे ।
निर्वाणमनुत्तरं दृष्ट्वा ध्यायते अकुतोभयं ॥

कुमारेण तं निर्वाणं ध्यायन्तेन मृगी शाक्यकन्या नावलोकिता नाभाष्टा ॥ तस्या दानि मृगीशाक्यकन्याये दौर्मनस्यं संजातं । एतस्य जनकायस्य मध्यतो मया कुमारो अभिस्तुतो न चानेन अहमवलोकितापि ॥

शुद्धोदनेन शाक्यकुमारस्य षट्टालको नाम द्वारो कारापितो पंचपुरुषशतेहि

2. C *reṇa dṛishṭvâ sa punaḥ mana pra* B *sya mana prasîde aho*. — 3b. BC *sya prajñanaṁ ku*. — 4b. C âryyaṁ ki * vrajitaḥ ‖ B *jito pravra*. — 4c. C kumâro âtma*.
6b. B *nâma kâshâya* C *nâma kâṣâya pa* BC *rṣhî vistîrṇṇe janakapilena(C *kaviteṇa) aindramârgeyaḥ | (C *yaḥ bhû*). — 8. C bhûlaka* B bhûrṇkama* BC *larâjâvakî * çaravare gata e * vâkaḥ mṛi*. — 9a. C *kyakaṁnyâ* BC *mâtâ sâ ku*. — 9b. C *kalasnye tâdṛiçâya tâdṛiçâye vibhû* B *shṇâ | gâthâ* C *thâbhir abhista* BC *vati nirvṛi*.
11. BC nirvṛitâ(C *tâḥ ‖ ) punas te mâtâ pitâ nirvṛi*. — 12. BC nirvṛitâ(C *tâḥ) punaḥ sâ nâri nirvṛitâ(C *tâ) yasya*. — 13. BC *sya nirvâṇaça* C *bdaṁ çrutvâ nivâṇasmiṁ evaṁ ma* B *sideti tishṭhe* BC *nde nirvâ*. — 14. BC *tvâna ni(B vi)rvâṇaçrotam âdade ni*.
16a. C *kyakaṁnyâ* B *lokito nâbhâshṭho tasyo*. — 16b. B tasyo dâni* C *mṛigîye çâkyakaṁnyâye daurmanasya maṁjâtaṁ | . — 19. B *kâropito paṁ*.

अपावुरीयति ॥ तस्य अपावुरीयमाणस्य समन्तायोजनं शब्दो गच्छति ॥ पंच राजान शतानि नगरं परिवारेत्वा स्थिता ॥ राजा अभिषेकं भाण्डा कारापेति । पुष्यनक्षत्रे कुमारमभिषिंचिष्यं ॥ बोधिसत्वस्यापि एवं भवति । पुष्यनक्षत्रे अभिनिष्क्रमिष्यन्ति ॥ शुद्धावासा देवा बोधिसत्वमाहन्सुः ॥ कालो सि महापुरुष तुषितकायाच्च्युतो कालो सि मातुः कुक्षिं ओक्रान्तो कालो सि जातो कालो च ते अभिनिष्क्रमितुं कालनिर्नामसम्पन्नो चासि महापुरुष । बहू त्वां जनता अभिकांक्षन्ति वर्षका विय उदकपरीत्तया महामेघां ॥ ईश्वरो देवपुत्रो गाथां भाषति ॥

सम्यग्वितर्कंय बोधिसत्व एवं वितर्कयंति विद्वांसः ।
उत्पन्न ते कुशलस्य मूला यथा वितर्कयसि सम्यक ॥

महेश्वरो गाथां [159ᵃ] भाषति ॥

अभिनिष्क्रम महावीर अभिनिष्क्रम महामुने ।
सर्वलोकस्य अर्थाये बुध्याहि अमृतं पदं ॥

महाब्रह्मा आह ॥ सचे च महापुरुष नाभिनिष्क्रमिष्यसि सप्तमे दिवसे सप्तरत्नानि प्रादुर्भविष्यन्ति राजा त्वं भविष्यसि चक्रवर्ती चातुर्द्वीपो विजितावी धार्मिको धर्मराजा सप्तरत्नसमन्वागतो । तस्य ते इमानि सप्त रत्नमयानि प्रादुर्भवन्ति सय्यथीदं चक्ररत्नं हस्तिरत्नं अश्वरत्नं मणिरत्नं स्त्रीरत्नं गृहपतिरत्नं परिणायकरत्नं एवं सप्तमं । पूर्णं च ते भविष्यति सहस्रं पुत्राणां शूराणां वीराणां वराङ्गरूपिणां परसैन्यप्रमर्दकानां वराणां ॥ सो इमां चत्वारि महाद्वीपां सय्यथीदं जम्बुद्वीपं पूर्वविदेहं अप-

1². C °rājānaṁ ça° BC °catānāṁ na° BC °sthitā rā°. — 2. BC °shekaṁ bhā°. — 3¹. C pushyanakshetre° B °kumāra abhi° C °shiñcishyat | . — 3². C pushyanakshetre° B °kshatrena abhi° C °shyati | . — 4². C °okranto° B °jāto kālā ca te° BC °tuṁ | kālaṁ si° B °nupanno ca se ma° C °rnāmasampannaṁ ca so ma° BC °rusha bahu°.

6. BC bahu tvaṁ ja° C °kāṁkshati | ka° BC °rshakā ciya udakaparīkshayā° C °meghaṁ iva° B °meghāṁ iva°. — 8. BC samyag vi(C °k vi)tarkayasi bo° C °tvasyaivaṁ vi° BC °rkayanti | vidvāṁsaḥ(C °dvānsaṁ) utpa°. — 9. BC °nakuçalamūlā(B °la) yathā vi ° jānahe°.

11. C °shkramya ma ° shkramya ma°. — 12. BC °buddhyāhi°. — 13². BC °mishyasi | saptame° C °rbhavishyati | rā ° kravartti caturdvī° B °rtti caturdvīpo vijito vijitāvī° BC °gato ne°. — 15. BC °nadyato | imāni sa° C °prādurbha° BC °rbhavanti ‖ sayya(C °dya)thī° C °cakraratnaṁ eva° B °ptamaṁ pūrṇaṁ°.

17. C pūrṇaṁ ca° B °shyati | saha° C °hasra putrā° B °çūlāṇāṁ vī° C °rūpiṇāṁ pa° BC °rddakānāṁ balānāṁ vijitāvi | . — 18. B °dvīpāṁ | sa° C °pāṁ | sadyathi ° ttaraṁ ku ° girimpa° BC °khilamaṇḍalakām adaṇḍe° C °ṇḍena sara° BC °dharmeṇa abhi°.

रगोदानिकं उत्तरकुरुं सागरगिरिपर्यन्तां पृथिवीं अकण्टकां अदण्डेन अशस्त्रेण अनुत्पीडेन धर्मेण अभिविजिनित्वा अध्यावसिष्यसि ॥

राज्ञो तुषितभवनाच्च्यवित्वा मातुः कुक्षिमोक्रमे अर्धरात्रे समये ॥ बोधिसत्त्वो प्रतिबुद्धो पश्यति अन्तःपुरमोसुप्तं काचिद्वीणामुपगुह्य काचिद्वेणु काचिन्नकुलं काचित्सुघोषं काचित्तुणवं काचिच्चन्द्रीसकं(?) काचित्सम्भारिकां काचित् महती काचिद्विपञ्चिकां काचिद् ढक्कपटहं काचिद्वल्लकिं काचित् मृदंगं काचित् मुकुन्दं काचित्पणवं काचिद् दर्दरकं काचिदालिंगं काचित्परिवादिनीं काचिद्गले हस्तं कृत्वा काचित् मृदंगं शीर्षे कृत्वा काचित्परस्परस्य उत्सङ्गे शीर्षं कृत्वा काचित्परस्परस्य अंसे बाहां कृत्वा काचित्परस्परस्य उपगूह्य काचिद्दामद्विषातो विक्षिप्तगात्रा कासांचित् मुखातो लाला स्रवति ॥ बोधिसत्त्वस्य एवं धरणीगतमन्तःपुरं प्रतिकष्टं दृष्टा अन्तःपुरे श्मशानसंज्ञा उत्पन्ना ॥ बोधिसत्त्वेन पर्यङ्कातो उत्थिहित्वा काशिकसूक्ष्माणि प्रावृतानि करण्डकातो गृह्य छन्दको च नं उपस्थापको उपस्थापितो । उपनामेहि मे छन्दक अश्वं कण्ठकं ॥ छन्दक आह । कुमार अर्धरात्रे समयो किं इमस्मिं देशकाले अश्वकार्यं ॥ वैश्रवणभवनसदृशो वेश्मो अभिरम किं ते अश्वकार्यं इमं देशकालं । अमर[153ª]भवनसन्निभं अन्तःपुरं अभिरम किन्ते अश्वकार्यं ॥ एवमिदानीं बहुप्रकारं छन्दको आलपति । कुमार नायमश्वकालो

3ª. B °nāc cavitvā° C °mātur kukṣi °rātre samaye | . — 3ᵇ. C °çyanti antaḥpuraṃ osu° m upagṛhya kācid veṇuṃ kācit nakulaṃ° C °t tūṇakaṃ kāciç çabdisakaṃ kācit saṃbhārikāṃ kācit mahatī kācid vendakaṃ kācit kuṇṭakaṃ kācid vallakaṃ kācit mṛdaṅga kācit mukundaṃ° B °tiṃ kācid vendikaṃ kācid dhaṃkamaṭakaṃ kācid vallikiṃ kācit mṛdaṃgaṃ kācit mukundaṃ° B °vaṃ kācid dardduvakaṃ kācid āliṅgaṃ kācit pari° C °vaṃ kācid dardulakaṃ kācid aliṃdgaṃ(?) kācit pari° B °d galle hastaṃ | kṛtvā kācit mṛ° C °t mṛdaṃdgaṃ çirase kṛtvā kācit parasparasya aṃçe bāhaṃ kṛtvā kācit parasparasya upa° B °rasya aṅge kṛtvā kācit parasparasyaṃ upagṛ° °trā kāsāñcit sukhāto° C °trā kāsāñcit mukhāto°.

10. B °satva evaṃ° BC °evaṃ bhavati gantuṃ antaḥ° B °raṃ pratiṣṭhā prakṛtvā ante° C °ṣṭhaṃ kṛtvā antaḥpure° BC °utpannā(C °tpanno) bo°.

11. C °paryyaṃkāto utthahitvā kaçikaçūkṣmāṇi° B °çikaçūkṣmāṇi prā° ṇḍakāto chanda° BC °ndako vanaṃ upasthāpa° pito upanā°. — 13ᵇ. B kumāro a° C °samaye ima°. — 14. B vaiçravaṇe bha° C vaiçravaṇasadṛ° B °dṛçe veço abhiramaṃ ki te açva° C °abhiramanti te açvakāryaṃ | imaṃ° BC °kālaṃ apsa°. — 15. B °ḥpure abhiramu kin te açvakāryaṃ imaṃ deçakālaṃ apsaragaṇasaṃnibhaṃ antaḥpuraṃ abhiramaṃ ki te açvakāryaṃ na da idā° C °ḥpure abhiraman ti te açva°.

16ª. B na da idānīṃ° C na ca idānīṃ ba °ndaka ālapayati | B °ālapayati ka°. — 16ᵇ. BC kumāra ayaṃ açva° C °çvakāle rā° B °kiṃ | idā°.

राजारहेहि कुमार शयनेहि इमं शयनकालं किं इदानीमश्वकार्यं ॥ कुमारो आह ॥ छन्दक इदानीं मे अश्वकार्यं उपनामेहि मे कण्ठकं ॥ छन्दकस्य भवति । यथा कुमारो इमस्मिं देशकाले कण्ठकं याचति सुप्तप्रसुप्तस्य जनस्य नूनं कुमारो अभिनिष्क्रमितुकामो ॥ तेन दानि कण्ठकं पल्लानयन्तेन उच्चेन स्वरेण आरावं मुक्तं यथा राजा बुध्येय जनो च सर्वो कपिलवस्तुस्मिं । छन्दकस्वरेण न दानि ततः कोचिद्विबुध्यति । देवेहि सर्वस्य जनस्य आभ्यन्तरस्य बाहिरस्य ओसोपनं कृतं । कण्ठकेनापि बोधिसत्वस्य उपनामयन्तेन उच्चेन स्वरेण हीषितं मम हीषणशब्देन राजा शुद्धोदनो विबुद्धिष्यति जनकायो च तेन समन्तायोजनं स्वरेण अभिविज्ञापितं न कोचिद्विबुध्यति ॥ देवकोटिसहस्रियो कपिलवस्तुं समागताः गन्धमाल्यमादाय बोधिसत्वस्य अभिनिष्क्रमणस्य पूजार्थं ॥

बोधिसत्वो कण्ठकं हयराजं आरूढो देवसहस्रेहि च नभगतेहि पुष्पवर्षं ओसृष्टं मण्डारवाणि महामण्डारवाणि कर्कारवाणि महाकर्कारवाणि रोचमानानि महारोचमानानि मंजूषकाणि महामंजूषकाणि भीष्माणि महाभीष्माणि समन्तगन्धानि महासमन्तगन्धानि पारिजातकानि दिव्यानि सुवर्णपुष्पाणि दिव्यानि रूप्यपुष्पाणि दिव्यानि रत्नपुष्पाणि दिव्यानि चन्दनचूर्णानि दिव्यानि अगुरुचूर्णानि दिव्यानि केशरचूर्णानि दिव्यानि तमालपत्रचूर्णानि दिव्यानि च गन्धोदकशीतलानि कपिलवस्तुनः समन्तेन षष्टि योजनानि जानुमात्रं दिव्यं कुसुमौघं संवृत्तं समन्ताच्च षष्टि योजनानि दिव्यगन्धोदकेन कर्दमं संवृत्तं अभवत् ततानि च दिव्यानि कोटिसहस्रनियुता संप्रवाद्येन्सुः दिव्यानि च संगीति निर्वर्तेन्सुः अप्सरसहस्राणि च प्रगायेन्सुः

1. B °kanthakaṁ ‖. — 3. C °shkramituṁ kâmaḥ tadâ°. — 4. B te dâni kaṇṭha° C tadâ dâniṁ kaṇṭha° BC °pallânatena u° B °reṇa âroᶜamuktaṁ | ya° C °ârâvamuktaṁ ya° B °râjâ dhya(?)ya jano° C °sarve kapi° °stu cchanda° B °stu kapilasvareṇa°. — 5. C °reṇa naṁdâni tato kecid vi° B °taḥ kvacid vi°.

6. B °janasyam âbhya° C °janasya abhyantara vâhi° BC °ocopanaṁ kṛitvâ kaṇṭha°. — 7. B °mayanti na ucce° °reṇa hishitaṁ° BC °mama bhishaṇa° C °ṇabdaṁ na râjâ° B °janakâye ca° C °janakâyâ ca tena samantayo° B °samantoyoja° °taṁ na kvacid vi° C °taṁ na kenacid vi°. — 9. B °gatah ga° C °gato gandha° °jârtha bo° B °rthaṁ bo°.

11. BC °ârûḍhâ de° C °nabhagatehi pu° B °nabhagatehi pu° C °shpavarsha osṛi° B °mahârocamâni° C °mahârocamânâni maṁjûshakâṇi mahâmaṁjûshakâni bhishmâṇi samanta° B °mahâbhishmâni ‖ samanta° BC °candanacûrṇâni divyâni agu° C °rucûrṇâni divyâni tamâlapatracûrṇâni divyâni kaçalacûrṇâni divyâni ca çigamândho° B °keçalacû° çitalâṇi ka° C °stuno samantena shashṭhi yojanâni jâ° BC °mâtraṁ divyaṁ kum° C °samantâ ca shashṭi yojanânâṁ divyaṁ gandhodake° B °e ca shashṭi joyanâṁ divyaṁ gandhodake° vṛittaṁ ‖ bhagavân tâni ca° C °vṛittaṁ ‖ bhagavâ tatâni ca° B °srakoṭiniyuta saṁpra° C °srakoṭini saṁpra° BC °vâdyetaṁḥ divyâni ca saṁgîti nivartetaṁḥ a° C °trâṇi ca saprâdyetaṁḥ caturhi° B °praadyetaṁḥ ca gâyeta ca caturhi°.

अगाराद्नगारियं अभिनिष्क्रमति । अथ खलु भिक्षवः बोधिसत्वो महान्तं भोगस्कन्धमवहाय अगाराद्नगारियं अभिनिष्क्रमति ॥ न [154a] खलु पुनर्भिक्षवः बोधिसत्वो ज्ञातिपरिजुञ्ञेन परिजूर्णो अगाराद्नगारियं अभिनिष्क्रमति । अथ खलु भिक्षवः बोधिसत्वो महान्तं ज्ञातिवर्गमवहाय अगाराद्नगारियं अभिनिष्क्रामति ॥

शैलाः संधूपेंसुः सलिला चलेंसुः सागरो च निरामिषो क्षुभे देवा च दिव्यं चन्दनचूर्णमोकिरेंसुः । दिव्यानि अगुरुचूर्णानि दिव्यानि केशरचूर्णानि दिव्यानि तमालपत्रचूर्णानि दिव्यानि मुक्तपुष्पवर्षाणि ओकिरेंसुः ॥ इयं महापृथिवी अतीव षड्विकारं कंपे प्रकम्पे संप्रकम्पे बोधिसत्वस्यैव तेजेन अप्रमेयस्य च उदारस्य च महतो अवभासस्य लोके प्रादुर्भावो अभूषि । या पि ता लोकान्तरिकाः अन्धकारा अन्धकारार्पिता तमिस्रा तमिस्रार्पिता अघा असंविदितपूर्वा यत्र इमे चन्द्रमसूर्या एवं महर्द्धिका एवं महानुभावा आभया आभां नाभिसंभुणन्ति आलोकेन वा आलोकं न स्फरन्ति ता पि च तेन अवभासेन स्फुटा अभूषुः । ये पि तत्र सत्वा उपपन्नाः ते पि अन्योन्यं संजानेंसुः । अन्ये पि किल भो इह सत्वा उपपन्ना । एकान्तसुखसमर्पिता च पुनस्तत्क्षणं तन्मुहूर्तं सर्वसत्वा अभूषुः ॥ ये पि तत्र अवीचिस्मिं महानरके उपपन्नाः अतिक्रम्यैव देवानां देवानुभावं नागानां नागानुभावं यक्षाणां यक्षानुभावं । ध्यामानि च अभूषुः मारभवनानि निष्प्रभाणि निस्तेजानि निरभिरम्याणि ॥ क्रोशिकान्यप्यत्र खण्डानि प्रपतेंसुः द्विक्रोशिकान्यत्र खण्डानि प्रपतेंसुः त्रिक्रोशिकान्यप्यत्र खण्डानि प्रपतेंसुः योजनिकान्यप्यत्र खण्डानि प्रप-

1. C *hāntaṃ yaskandha* C *agāraṃād anagāri*. — 2. C atha khalu bhikṣa* B *jñātiparijñānena parijñāto agārā* C *jñātiparijanena parijñato agārā * riyam abhi*. — 3. C na khalu bhi * satva ma* B *ya agāyād ana* C *niṣkramati çilāṃ*. — 5. B *saṃdhūpetsuḥ salilā lalatsuḥ sāga* C çilāṃ saṃdhopetsuḥ salilalaṃsu sāyaro ca nirāmiko kṣubhya de* B *nirāmiko kṣhu* B *cūrṇṇaṃm ākiretsuḥ | C *cūrṇṇa okitetsuḥ agu*.

6. BC aguracūrṇṇāni divyāni cūrṇṇāni divyāni keçalacā * kiretsuḥ | . — 7. BC imaṃ mahā* B *ḍvikālaṃ kaṃpe saṃkampe saṃprakampe bo* C *raṃ kampe pra * tvasyairaṃ te*rbhāvaḥ | abhāsi yā*. — 9. BC *ntarikāḥ andhakārā(B *ro andhakārā)pitatvā tamiçrām ā(C *srām i)ti asyitvā aghāsaṃ vidhipūrvā* C *ryā evaṃ maharddhiko evaṃ maharddhikā evaṃ mahānubhāvā ābhayā ābhirāsaṃbhu* B *saṃbhuṇati | ā * na spharanti | tā* C *ranti tāṃ pi ca te * bhāsena sphu* B *abhūtsuḥ ye*.

12. B *papannās te pi* BC *jānetsuḥ anye*. — 13. BC *nnā e*. — 14[1]. C *sukhasamarpi * hūrtta sarva* B *nsuḥ ye pi ta*. — 14[2]. B *nnāḥ abhiniṣkramyeyaṃ | devānāṃ* C *nnāḥ abhiniṣkramyairaṃ devānāṃ* C *yakṣhāṇāṃ ya* BC *kṣhānubhāvaṃ vyāmāni*.

16. C *māni raṃ abhū * bhavanāni ca niṣpra* B *bhāni nirabhiramyāni nistejā koçikā*. — 17. B koçikā * patetsuḥ dvikoçikā * patetsuḥ trikoçikāṃnyapya * patetsuḥ jojana * patetsuḥ | C kroçikānyapyatrā khaṇḍāni prapatetsuḥ trikoçikānyatra khaṇḍā * patetsuḥ yojanānyatra kha * patetsuḥ.

हेंसुः । ध्वजाग्राण्यपि चात्र प्रपतेंसुः । मारो च पापीमां दुःखी दुर्मना विप्रतिसारी अन्तःशल्यपरिदाघजातो अभूषि ॥

बोधिसत्वे खलु पुनः भिक्षवो अभिनिष्क्रमन्ते अतीव पुरिमा दिशा परिशुद्धा पर्यवदाता अभूषि । अतीव दक्षिणा दिशा परिशुद्धा पर्यवदाता अभूषि । अतीव पश्चिमा दिशा परिशुद्धा पर्यवदाता अभूषि । अतीव उत्तरा दिशा परिशुद्धा पर्यवदाता अभूषि । अतीव हे[154a]ष्टिमा दिशा अतीवोपरिमा दिशा परिशुद्धा पर्यवदाता अभूषि ॥ अतीव चन्द्रमसूर्याणामुद्गमनानि परिशुद्धानि पर्यवदातानि अभूंसुः अतीव पथगमनानि अतीव ओगमनानि परिशुद्धानि पर्यवदातानि अभूषि ॥ अतीव नक्षत्राणि परिशुद्धानि पर्यवदातानि अभूषि । अतीव तारकरूपाणि परिशुद्धानि पर्यवदातानि अभूषि ॥ अतीव चातुर्महाराजिकानां देवानां भवनानि परिशुद्धानि पर्यवदातानि अभूषि । अतीव त्रायस्त्रिंशानां यामानां तुषितानां निर्माणरतीनां परनिर्मितवशवर्तिनां देवानां भवनानि परिशुद्धानि पर्यवदातानि अभूषि ॥ अतीव मारभवनानि ध्यामानि अभूंसुः । दुर्वर्णा निष्प्रभाणि ध्वजाग्राणि मारकायिकानां देवानां मारो च पापीमां दुःखी दुर्मनो विप्रतिसारी ध्यामन्तवर्णो अन्तोशल्यपरिदाघजातो ॥ ब्रह्मकायिकानां देवानां भवनानि परिशुद्धानि पर्यवदातानि अभूंसुः । शुद्धावासानां देवानां भवनानि परिशुद्धानि पर्यवदातानि अभूंसुः । एवं च तेषु शुद्धावासेषु देवेषु परीत्ताभानां सम्यक्संबुद्धानां अधिष्ठितानि चंक्रमा निषद्यानि शय्यानि तानि पि अतीव परिशुद्धानि अभूंसुः पर्यवदाता ॥ शुद्धावासा देवा अतीव हृष्टा अभूषि उदग्रा प्रमुदिता प्रीतिसौमनस्यजाता ॥ बोधिसत्वे खलु पुनर्भिक्षवः अभिनिष्क्रमन्ते यावता नागानामधिपतयो नागराजानो अण्डजा वा जरायुजा वा संस्वेदजा वा औप-

1[1]. BC °jāgrāṇiṃ a ° tetaṃḥ mā°. — 1[2]. BC °ḥkhī daurmanā°. — 3. BC °satvo khu° C °punar bhikṣha ° manto ati ° ryyapadātā°. — 4[1]. B °çā pariçuçā pariçuddhā°. — 4[2]. B °ryapadātā°. — 5. B °uttaradiçāto pari° C °çā paryyava°.

7. B °sūryāṇāṃpāṃ° BC °dgamatāni pari ° suḥ | ativa patha° C °thagamanāni atirā oga°. — 9[1]. B °kshatrāni pari°. — 9[2]. C °rūpāni pariça°.

11. B °strirīçānā yā° C ° avartitānāṃ de°. — 13[1]. C ativa ca māra° BC °dhyānāni abhūsuḥ(C °tuḥ | ) du°. — 13[2]. C °bhāṇi dhvajāgāni mārakāyikāṃ devatā māro° B °grāṇi mānakāyikāna devatā māro° C °durmanā vi ° ri dhyāvanto varṇṇo° B °dhyāmavanto varṇṇo° C °çalyopari° BC °jāto bra°. — 15. C °bhūtaṃḥ | .

16. C °devānāṃ pari ° bhūtaṃḥ. — 17. C °rītabhānāṃ saṃmya ° kramāçiṣadyā° C °tānyapi ati ° dāta ‖ . — 19. B çuddhāvāso de° BC °hṛishṭo abhūshi | u° C °prītisumanasyajātāḥ. — 20. B °satvo khu° C °satva khalu punaḥ bhikshu° B °yāvatāṃ nāgānāṃ° C °yāvattāṃ nāgāṃ adhi ° rājānāṃ aṇḍa° B °rājāno | aṇḍa ° ttikāyaṃm abhi° C °ttikāyaṃ abhi ° tvam evaṃ pashkaretaṃḥ | agārā° B °akaretaṃḥ agārā ° jānāṃ ho°.

पादुका वा ते महतीं चतुरंगिनीं सेनामभिनिर्मिणित्वा महान्तं हस्तिकायं अश्वकायं रथकायं पत्तिकायमभिनिर्मिणित्वा बोधिसत्वमेव पुरस्करेन्सुः अगारादनगारियं प्रव्रजितुं ॥ बोधिसत्वे खलु पुनर्भिक्षवः अभिनिष्क्रमन्ते यावता सुवर्णाधिपतयो सुवर्णराजानो अण्डजा वा जरायुजा वा संस्वेदजा वा औपपादुका वा ते महतीं चतुरंगिनीं सेनां अभिनिर्मिणित्वा महान्तं हस्तिकायं अश्वकायं रथकायं पत्तिकायं अभिनिर्मिणित्वा बोधिसत्वमेव पुरस्करेन्सुः ॥ नगरदेवता बोधिसत्वस्य गच्छतः पुरतः [155a] स्थित्वा दीनमना आह ॥

नाग नाग अवलोकयाहि मे
सिंह सिंह अवलोकयाहि मे ।
सत्वसार अवलोकयाहि मे
सार्थवाह अवलोकयाहि मे ॥

कपिलाह्वयातो निर्गम्य अवलोकिय पुरवरं पुरुषसिंहो शाक्यकुलानन्दजननो इमां गिरामभुदीरयति ॥

अपि नरकं प्रपतेयं विषं च खादितुं भोजनं भुंजे ।
न तु पुनरिह प्रविशे अप्राप्य जरामरणपारं ॥

अयं भिक्षवः बोधिसत्वस्य अभिनिष्क्रमणसम्पदा ॥

बोधिसत्वो देवसहस्रेहि चतुर्हि च महाराजेहि संप्रतिगृहीतो कपिलवस्तुतो दक्षिणेन द्वादश योजनानि नीतो मल्लविषयं अनोमियं नाम अधिष्ठानं वशिष्ठस्य ऋषिस्य आश्रमपदस्य नातिदूरे ॥ तहिं बोधिसत्वो प्रतिष्ठितो छन्दको च ॥ बो-

3. B °tve ‖ puna° C °tve khalu puna° B °yâvato suvarṇṇâ° C °yâvattâṁ suvarṇṇâdhipataye suvarṇṇa° BC °dukâ vâ taṁ mahântaṁ catu° C °senâṁ abhinirmâya mahâ ° stikâyam açva ° thakâyaṁ abhinirmâya bo ° tvam evaṁ pu ° retsuḥ | B °retsuḥ naga°.
6. C °cchantasya purato sthitvâ dînavadanâ âha ‖ . — 8. B nâgânâga a° C nâgânâṁgaṁ avalokayâmi siṁhasiṁhaṁ avalokayâmi | B °me siṁhaṁ siṁha a°. — 10. C me satva°.
12. C °hvayotaṁ nirga° B °hvayâto nirga° C °lokaya puruṣapuraṁ puruṣaṁ siṁhaṁ çakyakulanandija° B °kulanaṁdeja°. — 14. BC °khâditoṁ° B °bhuñjea sa°. — 15. B na khu (ca tu) ca ahaṁ pra° C na bhuvaṁ ahaṁ pravi° B °viçyaṁ aprâ° BC °maraṇaṁ pâraṁ- (C °raṁ ‖ ) a°.
16. BC °dâ bo°. — 17. C °hasrâ catu° B °hasrâ ca catu° C °jehi ca saṁ° C °yojanaṁ nîto ‖ ma ° shaya anâma adhisthânaṁ° B °anomyaṁ nâ ° shṭhasya âçra ° dûre tahiṁ°. — 19¹. C °pratisthito° B °ko ca bo°. — 19². C °açvarâjaṁ echa° BC °cati | mahâ° C °gantumi° BC °lpesi | krita° C °nishyam prasṛtiṣpravara° B °vritya vara°.

धिसत्वो छन्दकस्य हस्ते आभरणानि च देति कण्ठकं च अश्वं छत्ररत्नं च पितुश् शुद्धोदनस्य संदिशति महाप्रजापतीये गौतमीये सर्वस्य च ज्ञातिवर्गस्य आरोग्यं अरोमि कृतकृत्यो आगमिष्यामि प्रवृत्तवरधर्मचक्रः ॥ छन्दको आह ॥ मातुः पितुः न उत्कण्ठितं स्या ते ॥ बोधिसत्वो आह ॥ छन्दक

इत्यर्थमेवमहं नव दोषदर्शी
मोक्षार्थं मोक्षमति स्वजनं त्यजामि ।
जातस्य जन्मानि कथं पुनर्भवेया
इष्टेन बान्धवजनेन विप्रयोगः ॥
यदि न मरणं नो जातं स्यान्न रोगजरादयः
यदि च न भवेदिष्टत्यागो न चाप्रियसंग्रहो ।
यदि च विफला नो स्यादाशा सुखं च न चंचलं
विविधविषया मानुष्यकिं इमापि रतिर्भवेत् ॥

छन्दको आह ॥ त्वं नाम आर्यपुत्र निर्दिष्टो सर्वशास्त्रकुशलेहि चातुर्द्वीपपति- र्भविष्यसीति । न तं सत्यं ॥ बोधिसत्वो आह ॥ भो भणे छन्दका किमर्थं च भणितं तेहि नैमित्तिकेहि कुशलेहि ॥ वर्तति खु सत्यकालो यदि ते मम गौरवं अस्ति ॥ छन्दको आह ॥ एषो भणामि । अथ वा विजहित्वा मेदिनीं प्रव्रजति भवति भवरागहन्ता चक्षोपदर्शी इदं द्वितीयं ॥

बोधिसत्वस्य एतदभूषि । कथं प्रव्रज्या च चूडा च ॥ बोधिसत्वेन असिपट्टेन चूडा छिन्ना सा च चूडा शक्रेण देवानामिन्द्रेण प्रतिच्छिता त्रायस्त्रिंशभवने पूज्यति

3ᵇ. B mátuḥ mátuḥ na utkaṇṭhitasyati ‖ C mátuḥ na utkaṇṭhasyeti | . — 5ᵇ. C °satva áha ‖ . — 5ᵇ. B °m evaṁ ahaṁ ta° ryámaḥ mokshárthaṁ ákshamayatiḥ sva° C °kshártha mokshayati sva°.

7. C °sya játmani ka° BC °veyá | 1° B °bándhavena janena ca vipayogaḥ ya° C °janena ca viprayogo ya°. — 9. BC °raṇaṁ játa syán-na ro° yaḥ | yadi na bha° B °d-ishṭityá° C °saṁçrayo BC °yo yadi°.

11. B °phalá tasyá° C °phalá tasya áçá sukhan tava caṁcaraṁ vivi° B °khaṁ tava caṁ° BC °shayo mánushesmiṁ° B °imáṁ pi ra° C °imám api ra°. — 13ᵃ. B °nidishṭo° BC °cátudvípagatir bha°. — 14ᵃ. C etaṁ sa° BC °tyaṁ bo°. — 14ᵇ. BC °satva á°. — 14ᵇ. C °udako ki° BC °bhi va°. — 15. B °rttati sha sa° di te | mama° C °ravaṁ sati ‖ .

16ᵃ. BC °medinī pravraja(C °jishya)ti | bhavati bhavará° C °darçi i°. — 18ᵃ. C °tva-syaitad a° B °bhúshi katham°. — 18ᵇ. B °dá ca bo°. — 18ᵇ. B °satva na asipaṭṭena cúḍá vchi° C °sipaṭṭena cúḍá vchinná sá cúḍá ca ° ndreṇa pravicchitá tra° C °jyati cúḍámahaṁ ca°.

चूडामहं च वर्तति ॥ [155b] समसमं कण्ठको बोधिसत्वस्य पादां लिहति । बोधिसत्वो अनपेक्षो प्रक्रमति ॥

प्रव्रज्यां कीर्तयिष्यामि यथा प्रव्रजि चक्षुमां ।
जीर्णं कालगतं दृष्ट्वा संविगमध्यगमे मुनिः ॥
योनिशो लब्धसंवेगो महाप्रज्ञो विपश्यको ।
दृष्ट्वा आदीनवं लोके प्रव्रजि अनगारियं ॥
अवहाय मातापितरं ज्ञातिसंगमनं तथा ।
निर्यासि कपिलवस्तुतो अश्वमभिरुह्य कण्ठकं ॥
अवहायाश्वच्छन्दकं छित्वान गृहबन्धनां ।
सर्वमेतमवसृज्य अनपेक्षो एव प्रक्रमेत् ॥

यं दानि बोधिसत्वेन अभिनिष्क्रमित्वा अनोमियातो अधिष्ठानातो वशिष्ठस्य ऋषिस्य आश्रमस्य नातिदूरतो छन्दको निवर्तितः सकण्ठको आभरणानि च विसर्जितानि राज्ञो शुद्धोदनस्य कोशातो संदिष्टं महाप्रजापतीये गौतमीये तथान्येषामपि ज्ञातीनां । यशोधराये न संदिशति ॥ यदा भगवां प्रवृत्तवरधर्मचक्रः तं भिक्षूहि श्रुतं । भिक्षू भगवन्तमाहन्सुः ॥ कथं यशोधराये अनपेक्षो प्रक्रान्तो ॥ भगवानाह ॥ नाहं भिक्षवः एतरहिं एवानपेक्षो प्रक्रान्तो । अन्यदापि अहं यशोधराये अनपेक्षो प्रक्रान्तः ॥ भिक्षू आहन्सुः ॥ अन्यदापि भगवन् ॥ भगवानाह ॥ अन्यदापि भिक्षवः ॥

भूतपूर्वं भिक्षवो ऽतीतमध्वाने उत्तरापथे तक्षशिला नाम नगरं तत्र वज्रसेनो

1a. B °kaṇṭhako bo° dhāṁ liheti | . — 1b. C °satva ana° kramī pravra° B °mati pravra°. — 3. BC °dhyāmi | ya° B °māṁ ji° C °māṁ ṛuṇa kāla°. — 4. C °labhate munim || B °munih yo°. — 5. C °mahāpaçyeti paçyako | .

7. C °jñātiṁ ca saṁgamaṁ ta°. — 8. C niryyāsi ka° BC °stuno a° C °açvaruhya kaṁṭhakaṁ | . — 9. B °hāyaçva° C °hāyachandako cchitvā gṛhe bāndhavaḥ B °tvā gṛhabāndhavāṁ°. — 10. C °kho evaṁ prakramate yadi | .

11. B °atopiyāto° C °atopiyāto adhisthānā° dūre cchandako nivartito || sacchandako sakaṇṭha° B °ritāḥ || sacchanno sakaṇṭha° ṇāni ca | visa° B °jñātīnāṁ | . — 14b. B yathā bha° C °bhikshubhi çru° BC °çrutaṁ bhi°. — 15a. C bhikshu bha°. — 15b. C kathaṁ bhagavāṁn yaço° BC °anāpe°.

16a. C °etarhim māna°. — 16b. C °krānto | . — 17a. C bhikshu āhaṁsuḥ || B °nsuḥ a°. — 18. C °kshavo bhūta° B °kshavaḥ atī°. — 19. B uttā °the takshaçilā° C °pūrva bhi° B °mno nā çre° BC °çreshṭhiputro° B °takshaçilāto° C °vārāṇasīṁ ga° B °cchati | a° dāya so dā°.

नाम श्रेष्ठिपुत्रो अश्ववाणिज्येन तक्षशिलातो वाराणसिं गच्छति अश्वभाण्डमादाय ॥ सो दानि गच्छन्तो अन्यत्र वाराणसीये सार्थो चोरेहि विप्रहतो । वणिजा हतविहता कृता सर्वे अश्वा हृता ॥ सो दानि सार्थवाहो मृतकेन पुरुषकुणपेन आत्मानं प्रतिच्छादेत्वा शयितो एवं न हतो ॥ यदा ते चोरा तं सार्थवाहं हतविप्रहतं कृत्वा अश्वगणमादाय गता तदा सो वज्रसेनो अश्ववाणिजो उदकश्रमेन वाराणसीं नगरं प्रविशित्वा शून्यागारे शयितो ॥ तां एव दानिं रात्रीं वाराणसीये नगरे चोरेहि राजकुलातो सन्धिं छित्त्वा प्रभूतं द्रव्यं हृतं । प्रभाताये रात्रीये राजकुले सन्धिः छिन्ना अमात्येहि दृष्टा ॥ तेहि राज्ञो निवेदितं ॥ महाराज राजकुले सन्धिः छिन्ना ॥ राज्ञा आणत्ता ॥ प्रत्यवेक्षथ राजकुलं ॥ अमात्येहि प्रत्यवेक्षन्तेहि दृष्टं प्रभूतं द्रव्यं हृतं [156a] ॥ तेहि राज्ञ आरोचितं ॥ महाराज प्रभूतो राजकुलातो द्रव्यं हृतं ॥ राज्ञा अमात्या आणत्ता ॥ मार्गथ तां चोरां ॥ ते राजआणत्तीये तन्मुहूर्तं वाराणसीये चोरा मार्गीयन्ति सर्वगृहाणि लोडीयन्ति देवागाराणि शून्यागाराणि ॥

ते राजभट्टा मार्गन्ता तहिं शून्यागारं प्रविष्टा यत्र वज्रसेनो अश्ववाणिजको चोरेहि विप्रहतो शयितो ॥ सो दानि मार्गश्रमेण च रात्रीजागरेण च चिन्ताये च श्रान्तोक्लान्तो प्रसुप्तो सूर्ये पि उदिते न विबुध्यति ॥ सो तेहि राजभट्टेहि चोरा मार्गन्तेहि दृष्टो रुधिरेण सिक्तावसिक्तगात्रवस्त्रो सद्रव्यो शयितो तेषां राजभट्टानां च दृष्टा एतदभूषि ॥ अयं चौरो राजकुलमोषको ॥ सो दानि राजभट्टेन पादेन

2¹. B °vārāṇasīye° C °sārtha caurehi° B °rtho cārehi viprahato va°. — 2². BC va(C vā)ṇijaṃ hata(C °tā)vihatā hṛitvā sa° B °hṛitā so dā°. — 3. C °kena manushyakūṇapeṇa ātmā° B °tvā çaito na evaṃ° C °çayitena evaṃ° BC °hato yadā°. — 4. C yadā ta caurā taṃ sā° vihataṃ kṛi° B °grahaṇam ā° B °gatā | tadā° C °gatāḥ tadā so vajrase° ṇasīṃ na° B °ra çayito tāṃ eva dā°.

6. C tān evaṃ dāni rātriṃ vārāṇasiye nagare caure° B °hṛitaṃ pra°. — 7. C °kule sandhi cchi° BC °cchinnāḥ a° B °drishṭvā tehi°. — 8¹. B °taṃ ma°. — 8². C °sandhir cchinnāḥ B °nnāḥ rājñā°. — 9¹. BC °ttā pra°. — 9². C °kule amā° B °kulaṃ amā°. — 9³. C °drashṭavyaṃ hṛitaṃ ‖ B °hṛitaṃ tehi°. — 10¹. B tehi | rājñā ārocitaṃ ma°. — 10². B °hṛitaṃ rā°.

11¹. B rājño a° C rājā āṇattā amā° BC °ttā mā°. — 11². C mārgatha tāṃ caurān te rā° B °rāṃ te rā°. — 11³. BC °rājā āṇa° C °ṇattīye | tatmuhurtta vā° B °rgīyanti sa° C °sarve gṛi° vāgārāṇi pānāgārāṇi çū° BC °nyāgārāṇi te rā°. — 14. C °bhaṭṭa mārganta tāhiṃ çū° BC °shṭā ya°. — 15. C °rātrijāga° BC °krānto suptāsupto sū° C °sūryya pi u° BC °buddhyati so te°.

16. B °rgantehi dṛi° BC °vasikto gātro savastro° B °stro dravyaṃ suçarire teshāṃ° C °stro savastro dravyaṃ mūlaçarire teshāṃ°. — 18¹. C °kulaso esha ko so dā° B °shako so dā°. — 18². C °bhaṭṭa da° B °pito utti°.

प्रहारं दत्वा उत्थापितो । उत्तिष्ठ पाप चोर असि नाम त्वं राजकुलं धर्षयसि ॥ सो दानि अश्ववाणिजको भीतो त्रस्तो उत्थितो किमेतं ति ॥ ते दानि राजभटा आहंसु ॥ असि नाम त्वं पाप चोर राजकुलं पि धर्षयसि ॥ सो दानि आह ॥ आर्या प्रसीदथ नाहं चोरो अश्ववाणिजको अहं ति ॥ ते दानि राजभटा आहंसु ॥ एदृशको अश्ववाणिजको भवति यादृशो त्वं पापचोरो त्वं ॥ तेहि स उदीरयन्तो पश्चाद्बाहुं बन्धयित्वा राज्ञो उपनामयितो ॥ एवं देव शून्यागारे ग्रथितो लब्धो ॥ राजा पि चण्डो च उग्रशासनो च । तेन आणत्तं ॥ गच्छथ एनं अतिमुक्तकश्मशाने नेत्वा शीघ्रशूलकं करोथ ॥

सो दानि पश्चाद्बाहुं बन्धनबद्धो मधपानेन पायी वध्यकण्ठगुणेन खरस्वरेण पटहेन वाद्यमानेन असिशक्तितोमरधरेहि पुरुषेहि वध्यघातकेहि परिवृतो जनसहस्रेहि अतिमुक्तकश्मशानं निर्णीयति नगरवीथिं च संप्राप्तः । तहिं च श्यामा नाम अग्रगणिका आढ्या महाधना महाकोशा प्रभूतजातरूपरजतोपकरणा प्रभूतदासीदासकर्मकरपौरुषेया ॥ सो दानि सार्थवाहः वधं नीयन्तो ताये श्यामाये अग्रगणिकाये दृष्टो । सह दर्शनमात्रेण गणिकाये तस्मिं सार्थवाहे प्रेमं निपतितं ॥ यथोक्तं भगवता ॥

पूर्वे वासनिवासेन प्रत्युत्पन्ने हितेन वा ।
एवं संजायते प्रेमं उत्पलं [156a] वा यथोदके ॥
संवासेन निवासेन प्रेक्षितेन स्मितेन च ।
एवं संजायते प्रेमं मानुषाणां मृगाण च ॥

1. B *cauro asi* C *si nomam̃ tvam̃ rājakule dharshayasi | . — 2¹. B *bhitas trasto C *m etan ti | B *tam̃ ti te dā*. — 2². C *hataḥ ‖ . — 3¹. C *cauram̃ rājakulam api dha*. — 4¹. B ârya pra* C âryya pra*. — 5¹. B *ço tvam̃ hi cauro tvan tehi*. — 5². BC *hi saudira* C *nāmito ] .

6. C evam̃ te ca çû* C *labdhā ‖ . — 7¹. C *ugrapâçâne ca B *udagrâsâsano ca tena*. — 7². BC *tam̃ ga*. — 7³. C *muktakam̃ çmaçâne nitvâ* B *muktake çiçâne netvâ* C *çûnyakam̃*. — 9. C *nena pâni baddha kaṇṭha gu* B *nena pâyi vaddhyakaṇṭha guṇena ‖ evam* B *paṭâhena* C *ahehi baddhyaghâ * muktamûkam̃ çma* B *muktakam̃ çma * nirnâyati | ga* BC *vîthi ca samprâptaḥ(C *pto) ta*.

11. B tahim̃ ca tahim̃ ca çyâ* C tahim̃ ca tahim̃ çyâ* C *âḍhyo mahâdhano mahâkoço prabhûtajâ * sha vâ | B *she vâ so dâ*. — 13. C *rthavâho vadhe nîya* B *haḥ vadhryâsîya * shṭo saha*. — 14. C sa darça*.

16. C *sena vratyutpannena tena vâ | . — 17. C *prema utpalam̃ vâ ya*. — 18. C *kahitena smitena ca | B *smitena ca evam̃*. — 19. C *sañjâyate pre* B *premam̃ mâ * mṛgâṇa ca | B *gâṇâm̃ ca | .

यत्र मनं प्रविशति चित्तं चापि प्रसीदति ।
सर्वत्र पण्डितो गच्छे संस्तवो ये पुरे भवेत् ॥

सा दानि गणिका तहिं अग्रवाणिजके जातीसहस्राणि प्रेमानुबद्धा । तस्या तहिं अत्यर्थं प्रेमं उत्पन्नं ॥ तस्या दानि एतदभूषि । यदि एतं पुरुषं न लभामि मरिष्यामि ॥ सा दानि तन्मुहूर्तं चेटिकामाह ॥ अमुके गच्छ मम वचनेन एतां वध्यघातां वदेहि अहं वो एतकं हिरण्यसुवर्णं दास्यामि मा एतं पुरुषं घातेथ । अन्यो पुरुषो आगमिष्यति एतद्वर्णो एतद्रूपो च तं गृह्य तं मारेथ ॥ तथा च ज्ञास्यसि द्वितीयो न जानीति ॥ ततः सा चेटी गत्वा तेषां च घातकानां यथासन्दिष्टं आरोचयेसि ॥ तस्या ते वध्यघातका आहन्सुः ॥ बाढं एवं भवतु ॥ ते दानि कूटान्तसूनिकां गच्छन्ति ॥ तहिं दानि गणिकाकुले श्रेष्ठिस्य एकपुत्रको द्वादशवर्षिकेन क्रमेण प्रविष्टको दश वर्षा अतिक्रान्ता द्वे वर्षा अवशिष्टा ॥ तथाह ॥

शतं माया क्षत्रियाणां ब्राह्मणानां दुवे शता ।
सहस्रं माया राज्ञानां स्त्रीमाया हि अनन्तिका ॥

सा दानि गणिका श्रान्ता तस्य श्रेष्ठिपुत्रस्य अग्रतो भोजनं उपनेति व्यंजनं च । श्रेष्ठिपुत्रो पृच्छति ॥ स्याले किमिमं भविष्यति ॥ सा आह ॥ आर्यपुत्र तं मे वध्यं दृष्ट्वा कृपा उत्पन्ना । तस्या मे एतदभूषि । स्वयं इमं भोजनं हरिष्यामि ॥ श्रेष्ठिपुत्रो आह ॥ मा त्वं स्वयं गच्छे चेटिं प्रेषेहि ॥ सा आह ॥ को जानाति दास्यति वा चेटी न वा दास्यतीति । स्वयं आहरित्वा दास्यामि ॥ ततो सो श्रेष्ठि-

1. C yatra ma° çanti ci°. — 2. C sarvam pi paṇḍita gacche° B °eche saṁsto vai pure bhavet sā dā° C °santo sa vipulaṁ bhaved |. — 3[1]. B °nijako jā° pi | pramanubaddhā ta° C °nubodhyā ta°. — 3[2]. BC tasya tahiṁ° C °tyartha pre° B °premyaṁ u°. — 4[1]. BC tasya dā°. — 5[1]. C so dāni tatmuhurtaṁ°. — 5[2]. BC °mena | etāṁ° C °ghātetha |.

7[1]. BC °shyati | etadvarṇṇo etadrūpaṁ(C °drupo) bhaktaṁ gṛi° C °hya ta mārotha |. — 7[2]. C °dvitiyaṁ na jā°. — 8. C °tvā tathā teshāṁ° B °ghāṭakā° C °saṁdṛishṭaṁ° B °dishṭhaṁm āro° BC °catesi ||. — 9[1]. BC tasya te badhya° C °ghāṭakā āhatsuh | B °ṁsuḥ vā°. — 9[2]. B vāḍhaṁ || evaṁ bhavatu te dā°. — 9[3]. C te dārikadṛiṣṭā sunika gaccha° B °dāni kaṭṭantāsunikaṁ gacchanti tahiṁ°. — 10. C tahi dāni gaṇikā ku çre° BC °çreshṭisya o ° kena kriyena pra° C °dve varshā ava°.

12. C °yā kshetri°. — 13. BC sahasramāyā rā° B °nāṁ strimāyā hi°. — 14. BC °sya çreshṭhiputra ° naṁ vara(C °raṁ)veti vyaṁjanaṁ va çre°. — 15[1]. BC çreshṭhiputro°. — 15[2]. C syāt me° B °me kiṁ imaṁ°. — 15[3]. C °kṛipān utpa° BC °tpannā ta°.

16[1]. BC tasya me°. — 16[2]. BC çreshṭhipu°. — 17[1]. C °gacchati ce°. — 17[2]. B °āha ko jā°. — 17[3]. C kā jānāti dāsyāmi vā ceṭī na° B °nāti vā ceṭi°. — 18[1]. BC svayaṁ nāhara°. — 18[2]. C tataḥ so° BC °çreshṭhipu° C °putra āha ||.

पुत्रो आह ॥ आनेहि अहं गमिष्यामि मा त्वं स्वयं गच्छासि ॥ सा दानि भूयस्या मात्रया मायां दर्शयति । आह ॥ न होति मा आर्यपुत्रो गच्छतु अहं गमिष्यामि ॥ श्रेष्ठिपुत्रो पि आह ॥ न हि मा त्वं गच्छ अहं गमिष्यामि ॥ गणिका आह ॥ यथा आर्यपुत्रस्य अभिप्रायो भवतु अहं वा गच्छेय आर्यपुत्रो वा ॥ सो दानि श्रेष्ठिपुत्रो तं भोजनमादाय प्रस्थितो ॥ ताये दानि गणिकाये चेटी उक्ता ॥ गच्छ यदा एषो श्रेष्ठिपुत्रो घातितो भवति ततः तं पुरुषं प्रतिच्छन्नं आ[157a]नयाहि यथा न कोचित्पश्येया याव दानि सूर्यो अस्तमेति ॥ सर्वो जनकायो निवृत्तः ते च वध्यघाताः श्मशानमनुप्राप्ताः सो च श्रेष्ठिपुत्रो तं भोजनमादाय उपगतो । तेन सो भोजनो तस्य वध्यस्य उपनामितो । तेहि दानि वध्यघातेहि तं श्रेष्ठिपुत्रं घातेत्वा सो अश्ववाणिजको ओमुक्तः ॥

सो दानि ताये चेटिकाये प्रच्छन्नं तं गणिकाकुलं प्रवेशितो ॥ सो दानि अश्ववाणिजको तमुहूर्तके उच्छापितो स्नापितो महारहं वस्त्रं परिहापितो महारहे पर्यङ्के उपविशापितो गन्धमाल्यं च उपनामितं भोजनमुपनामितं । पंचहि कामगुणेहि समर्पितः समङ्गीभूतो ॥ उभौ क्रीडन्ति रमन्ति प्रविचारयन्ति ॥ सो दानि प्रथमको श्रेष्ठिपुत्रो दशवर्षप्रविष्टो आसि । यदा घातापितो तदापि द्वे वर्षाणि सर्वोपकरणं मातापितृणां सकाशातो आनीयति ॥ सो दानि अश्ववाणिजको तं वर्तनं तादृशं पश्यिय शोकसमर्पितो पाण्डुवर्णो भवे । न भुक्तं पि यं भोजनं तं छन्देति मा हैवं अहं पि तथा एव हनिष्यामि यथा सो पुरिमको श्रेष्ठिपुत्रो ॥ सा दानि गणिका तं अश्ववाणिजकं पृच्छति ॥ आर्यपुत्र एत्तको कालो

1[1]. B °gacchâmi | C °gacchâhi | . — 1[2]. B so dâni°. — 2[2]. B na bhôti° C °âryyaputrâ ga° B °mi çre°. — 3[1]. BC çreshṭipu° C °tro âha || . — 3[2]. C °hi mâm tva gacchatha ahaṁ°. — 4[1]. C °yo tathâ bhavatuṁ | ahaṁ vâ gacchedu â° B °vâ so dâ°. — 4[2]. C sâ dâ° BC °çreshṭipu° B °to tâ°. — 5[2]. BC °uktâ ga°. — 5[4]. B °ghâṭito bha° C °ghâṭiko bhavati | tato taṁ° BC °cchannam âna° C °nayâhi yathâ kenacit paçyeyâṁ ca dâni° B °na kvacit paçyeyâ ca dâni° C °ashṭam eti | .

7. C sarve janakâye nirvṛito tena ca va° B °yo nirvṛittaḥ tena ca va° C °ghâto çma° B °tâḥ çâçânam a° C °prâptâ | so° BC °çreshṭipu° B °gato tena°. — 9[1]. B °mito te°. — 9[2]. C °ghâtehi taṁ° BC °çreshṭipu° C °ghâṭetvâ mo açva ° ajakto || B °aktaḥ so dâ°.

11[1]. B °çito so°. — 11[2]. C sâ dâ ° jakâṁ tatmurtake utthâpito° B °hûrtaka utthâpito° BC °mahârataṁ va° C °rihâyino ma° B °rihâpino ma ° upadiçâ° C °diçâpito ga° B °ca upanâpitaṁ bho°. — 13. C tadâ pañca ° rppito samagrâṁ bhûtâ ubhau°. — 14[2]. B °yanti so dâ°. — 15[2]. BC °çreshṭipu° B °darçava° C °vishṭam âsît | . — 15. C °ghâtâpito°.

16. BC °ke tâṁ vartamânaṁ tâdṛçâṁ pa° C °paçyeyâço ° rṇṇo bhavet || B °bhave na bho°. — 17. C yena bhu° BC °kiaṁ pi ye bhojanaṁ na echanda(C °de)ti ma° B °haiva a° BC °evaṁ haniṣyâmi | yathâ tu so pu° BC °çreshṭipu°. — 19[1]. C °çvavânija° B °echati â°. — 19[2]. B °te kutaḥ âryaputra° C °te kuto âryyaputra iha° BC °bhiratâṁ na° B °udagra kena°.

यतः आर्यपुत्रो इह प्रविष्टो न च ते पश्यामि अभिरतं न उद्ग्रं । केन ते वैकल्यं किं प्रार्थयसि कस्य वा ते अभिलाषो तं लभिष्यसि ॥ सो दानि अश्ववाणिजको आह ॥ सा अस्माकं नगरी तथारूपा उद्यानोपशोभिता पुष्करिणीहि च तत्र च अभीक्ष्णं जनो उद्यानयात्रां निर्धावति क्रीडार्थं तानि चोद्यानानि तां च उद्यानक्रीडां दककीडानि च समनुस्मरामि ॥ गणिका आह ॥ आर्यपुत्र इहापि वाराणस्यां उद्यानानि पुष्करिण्यश्च आरामानि च पुष्पफलोपेतानि रमणीयानि यदि आर्यपुत्रस्य उद्यानगमने अभिप्रायो निर्धावामि उद्यानभूमिं क्रीडार्थं ॥ सो आह ॥ बाढं निर्धावामो ति ॥

तायै दानि गणिकायै अन्यतरा उद्यानभूमी सिक्तसंमृष्टा कारापिता । तं अश्ववाणिजकं योनरथयाने प्रक्षिपित्वा खाद्यभोज्यं च पानं च गन्धमाल्यं च आदाय चेटीहि पु[157b]रस्कृता निष्क्रान्ता ॥ तेन दानि अश्वसेनेन श्रेष्ठिपुत्रेण सा गणिका उक्ता ॥ एतां पुष्करिणीं प्रतिसीराहि प्रतिवेठापेहि विश्वस्ता दककीडां क्रीडिष्यामः न कोचित्पश्यति ॥ तस्या गणिकाये भवति । सुष्ठु आर्यपुत्रो अच्छति तत्र विश्वस्तं क्रीडिष्यामः न च नं कोचित्प्रत्यभिजानिष्यति ॥ तायै दानि गणिकायै पुष्करिणी प्रतिसीराहि वेठापिता । ते दानि उदककीडायै क्रीडन्ति रमन्ति प्रविचारयन्ति उभये अद्वितीया ॥ तस्य दानि अश्ववाणिजकस्य भवति । यदि अहं अद्य न पलायामि न भूयः शक्यं पलायितुं ॥ सो दानि पानं अपि स्वापयित्वा तां गणिकां पायेति यदा च एषा प्रमत्ता भवेदहं तदा शक्येयं पलायितुं ॥ गणिका पि पश्यति प्रेमेण पश्यति मां आर्यपुत्रो पायेतीति । सा दानि पिबन्ती मत्ता

1. C °sho ca bhavishyasi |. — 3. BC so asmā° B °çobhitaḥ pu° C °çobhito pu° ṇīhi yaṁ tatra° C °no udyānajātrāṁ° B °niddhāvati° C °dyānakrīḍā dakaṁ krīḍāni ca sa° B °dyānakrīḍāṁ devakrīḍāṇi ca sa°. — 5². C °iham api vā° B °pushkiriṇyāṁç ca ārā° C °shkariṇyā ca ārā° B °dī āyapu° C °gamanābhiprā° °rddhāvati u° ḍārtha ||.

7. BC °āha vā°. — 8. B °ḍhaṁ || ni°. — 9¹. C °nyataro u° bhūmiṁ si° B °mī çiktasaṁṛishṭhā kārāpitā taṁ a°. — 9². C tam açva° jakaṁ uraddhapuṇyaṁ prakshayitvā khā° B °onaddhapuṇya prakshi° ya ceṭihi pu° C °skṛito nishkrānto te° B °shkrānto |.

11. BC te dā° na çreshṭipu° B °ktā e°. — 12. C ekāṁ pushkariṇī pratiçīlehi prativeṭāyehi vi° B °shkaraṇīṁ pratisiharāhi prativeṭhāyehi vi° C °stā uda° maḥ || na kvacit paçyishyati | B °maḥ na kvacit pa°. — 13¹. BC tasya ga° vati su°. — 13². BC °maḥ | na ca naṁ(C °taṁ) kvaci°. — 14. C °kāye sā pushkariṇīṁ pratiçīlehi ceṭāpitāti | B °sīrāhi veṭāpitā |. — 15. C dā° ḍā ca krīḍanti ra° B °ḍāye krīḍanti ra° C °amitrīyā |.

16¹. C °çijasya°. — 16². BC °dya na parāyāmi° C °bhūyo ça°. — 17. C °dāni udyānam açcoshi athā° B °dāni yā(çeu pā)naṁ agrocchishṭayitvā tā gaṇikā yāyeti | yathā ca e° C °kāṁ yāpeti | yathā ca esho pra° BC °haṁ ca na ça°. — 18. C °premena paçya māṁ ā° tro yāpantiti | B °tro yāyetīti |

संवृत्ता ॥ सो दानि यववाणिजको तेषां चेटीनामाह ॥ गच्छथ यूयं भाण्डमूलं आनथ वयं विश्वस्ता उदकक्रीडां क्रीडिष्यामः ॥ ता दानि चेटी एकान्ते भाण्डमूलं आसन्ति ॥ ते दानि उभयो पुष्करिणीमोतीर्णा उदकक्रीडनकेहि क्रीडितुं ॥ सो दानि यववाणिजको तां श्यामां कण्ठे समालिंगं कृत्वा निवर्तेति मुहूर्तं धारेत्वा उद्यच्छति । श्यामा जानाति आर्यपुत्र उदकक्रीडां करोति । एवं तेन यववाणिजेन यवसेनेन भूयोभूयो चिरतरं निवुड्डिय धारेति श्यामा च पीडियति यवसेनो च तहिं उदके निवुड्डापिय करोति अल्पप्राणा संजाता ॥ यवसेनस्य भवति । मृता एषा श्यामा अयं वेला मम पलायनार्थे ॥ सो दानि श्यामां मृतामभिज्ञात्वा पुष्करिणीये सोपानके स्थपेत्वा इतोऽतः प्रत्यवेक्षित्वा पलायते यथा न केनचिद्दृष्टो ॥

तेषां चेटीनामेतदभूषि । चिरायेन्ति अत्र पुष्करिणीयं आर्यपुत्रो आर्यधीता च क्रीडार्थं न च तानं किंचित्क्रीडनकानां शब्दं शृणोम गच्छाम जानाम ॥ ते दानि पुष्करिणीं अल्लीना पश्यन्ति च तां श्यामां तत्र पुष्करिण्यां सोपाने मृत्तिकां शयमानां । कथंचिदाश्वासयन्ति ॥ सा दानि श्यामा तेहि चेटीहि तन्मुहूर्तं औमूर्धिकमालम्बापिता सर्वं च से उदकं मुखेन आ[158ᵃ]गतं ॥ सा दानि श्यामा यं वेलं प्रत्याश्वस्ता ततः चेटीनि पृच्छति कहिं आर्यपुत्रो ति ॥ चेटी आहन्सुः ॥ आर्यधीते न खलु आर्यपुत्रो कहिंचिद्दृश्यति भवितव्यं पलानो ॥ सा आह ॥ मा चिरं करोथ नगरं प्रविशामः ॥ ता दानि नगरं प्रविष्टा ॥

1[1]. B °ceṭīnām āha ga°. — 1[2]. B °tha | yū° BC °yaṃ bhaṇḍa° B °çvastodaka ° mah te°. — 2. B te dā° C tā dā ceṭikā e° BC °nte bhaṇḍa° C °santoḥ te dā°. — 3[1]. C °ubhaye pushkiriṇīṃ oti° B °rṇyoti° BC °tīrṇṇodaka° C °kakrīḍantehi krīḍi°. — 3[2]. B °kaṇṭha samālaṃviṃ kṛitvā nivartiati mu° C °rteti mūhū° B °trā udyaduti çyā° C °trā udya(?)çyā°. — 5[1]. C °putrodaka° B °krīḍyāṃ karoti e°. — 5[2]. C °na bhūya bhūyaḥ ciratamaṃ vibuḍḍiya dhārehi çyā° B °raṃ nivuḍiya dhārehi çyā° B °pīḍiyiko ya° C °pīḍaiko yajase° BC °no ca taṃhi uda° C °ke nivuttio(?)piya° BC °roti | alpa° C °prāṇā sajātā ya° B °prāṇā saṃjāta ya°.

7[1]. C yajasena° BC °ti mṛi°. — 7[2]. B mṛite esho çyā° C °velā gamana palā°. — 8. C °çyāmā mṛi° BC °mṛitābhi° BC °pānemmiṃ° C °petvā itas tato pra° B °vekshetvā pa°shṭa teshāṃ°. — 10[1]. B °ceṭinām e° C °ṭīnāṃ eta° B °shi ti°. — 10[2]. C vilokyantā atra° B vilokentā | atra° B °ṇīyam āryapu° C °ṇīyaṃ āryyadhītā° B °naṃ kiñcin krīḍa° cchāma jajñāma te dā°.

11. C °ṇī pushkariṇī alli° BC °paçyati ca° C °shkariṇīm so° BC °mṛittikāṃ ça °nāṃ kathaṃ°. — 13[1]. BC °cid açvasenti | . — 13[2]. C °tehi caṭehi ta° B °hūrtta | omūrdhikāṃ laṃbāliya sarvaṃ° C °rdhikāṃ laṃbāliya sarvaṃ° C °udaka mu°. — 14. C °pratyudaçva° B °pratyaçvastā° C °tataç ceṭī° BC °ti kahiṃ° C °āryyāāryyaputreti | . — 15. B °nsuḥ āryadhite°.

16[2]. C °hiñci dṛiçya° [illegible]ḥ | . — 17[1]. C °tha nakharaṃ pravekshāmaḥ | B °kshyāmaḥ tā°. — 17[2]. BC tā dāniṃ nagaraṃ pravekshyāmaḥ tā dāni nagaraṃ pra° C °vishṭe | .

सा दानि श्यामा गणिका तन्मुहूर्तं चण्डालानां शब्दापयित्वान आह ॥ अहं युष्माकं एत्तकं च एत्तकं च हिरण्यं उपजीवनं दास्यामि इच्छामि प्रत्यग्रमृतकं पुरुषं अनादृष्टं आनीयन्तं ॥ आहन्सु ॥ बाढं आनीयति ॥ तेहि श्मशानं गत्वा प्रत्यग्रमृतको पुरुषो अनादृष्टो आनीयते यथा न केनचिद्दृष्टो ॥ ते दानि चण्डाला उपजीवनं दत्वा विसर्जिता ॥ ताये दानि श्यामाये सो मृतको पुरुषो गन्धोदकेन स्नापयित्वा गन्धेहि अनुलिम्पित्वा अहतेहि वस्त्रेहि वेठित्वा अमुखिं अर्चापयित्वा सुवद्धं कृत्वा तेषां चेटीनामाह ॥ सर्वं एककण्ठा रोदनं करोथ एवं च वदथ आर्यपुत्रो कालगतो आर्यपुत्रो कालगतो ति ॥ तेहि चेटीहि यथायथा ताये श्यामाये सन्दिष्टं रोदनं कृतं ॥ महता जनकायेन गणिकाये श्यामाये गृहे रोदनशब्दं श्रुत्वा श्रेष्ठिपुत्रो कालगतो ति । तस्य श्रेष्ठिपुत्रस्य मातापितृभिः श्रुतं सो अस्माकं एकपुत्रको कालगतो ति ॥ ते दानि रोदनं करोन्ता तं गणिकाकुलं गताः सर्वो च ज्ञातिवर्गो । गणिकावीथिजनेन समाख्याति ॥ ते आहन्सु ॥ अपहरथ एतां वस्तुं पश्चिमदर्शनं पुत्रं पश्याम ॥ तस्या दानि गणिकाये एतदभूषि । यदि वस्तुं हरिष्यन्ति ततो बुद्धिष्यन्ति तदहं खण्डखण्डं छिन्दिष्यं ॥ सा तेषां आह ॥ मा युष्मे वस्तुं अपहरिष्यथ ॥ ते आहन्सुः ॥ किंकारणं ॥ सा आह ॥ यं कालं आर्यपुत्रो ग्लानो तं कालं मया उक्त आर्यपुत्र गच्छाहि मातापितॄणां कुलं । सो दानाह । एत्तकेहि वर्षेहि न गतो न इदानीं गमिष्यं यावद्वार्त्तीभवामि ततः गमिष्यं मातापितॄणि द्रष्टुं । सो दानि यं वेलं न वार्त्तीभवति व्याधिना च ग्रस्तो ततो नेन अहं संदिष्टा मा मे

1[2]. C °tatmuhūrtta caṇḍāviyāna° B °ṇḍāla ṣalalā°. — 1[3]. BC aham ca yu° C °ahmākam ettakam ca hilanyam suvarṇam upaji° BC °rusham anā° C °nādṛishṭam°. — 3[1]. C te āhamsuḥ ‖ B °nsu vā°. — 3[2]. B vāṭam āni° C vādha ānī°. — 3[3]. BC °nīyate | yathā° B °kenid dṛishṭo | . — 4. B °ṇḍāla u° C °nam dṛishṭvā visarjitam | . — 5. C °ndhodakam snā° lipim kṛitvā aha° BC °zhatehi vastrehi veṭhitvā cā(B °ramu)amim° C °ceṭinām āha ‖ .

7. C sarvam e° BC °kaṇṭhā roda° rotha | evam ca vadetha ā° B °tha ā° āryaputro kālagateti | C °tha ā° gato kālagateti | te dāni ro° (l. 11[1]). — 8. B °kṛitam maha°. — 9. B °çreshṭipu° gateti | . — 10. B °çreshṭipu°.

11[1]. B °karontā° C °lam gato sarvām ca jñātivargā gaṇi° B °rgo gaṇi°. — 11[2]. C °nena samsmārayanti ‖ B °nena samunāyati te ā°. — 12[1]. C °nsuḥ | B °nsu apa°. — 12[2]. B °tha | etām camunam paçci° C °etām ca imam paçyāma darçana pu° çyāmaḥ ‖ B °çyāma ta°. — 13[1]. B tasya dā°. — 13[2]. B °ddhishyanti | tad a°. — 14[1]. C sa teshām āha ‖ . — 14[2]. C mā tuhme camam avaha° B °mam avaha° C °shyati ‖ . — 15[1]. B °āhamsuḥ kim°. — 15[2]. B °ṇam sā°. — 15[3]. B sā sā āha ‖ . — 15[4]. B yam kālagam āyam putro glāna tam° C °glānām tam kā° yā uktaḥ ārya° BC °pitṛiṇām° C °ṇām mūlam ‖ .

16[1]. C so tān āha ‖ . — 16[2]. B °ehehi nagarāto ito idānim gami° C °to ito idānīm gamishyam ‖ sā teshām āha ‖ yāvadvartī gamishyam bhavāmi tato mātāpi° B °d vartībha° BC °pitṛiṇi dra° B °shṭum so°. — 18. B °velam vartībhavati | vyā° C °velam nartati bhava° dhinām ca grasto tato tam aham samdṛishṭam mā° B °shyati | ettaka me pri° ehi mayā°.

मृतस्य मातापितॄणां ज्ञातीनां वा दर्शयिष्यसि एतकं मे प्रियं क[158a]रोहि । मया च आर्यपुत्रस्य प्रतिज्ञातं न आर्यपुत्र मृतकं कस्यचित् मातापितॄणां वा ज्ञातीनां वा उपदर्शयिष्यामि । कामं आत्मानमुपसंक्रमेयं न पुनरार्यपुत्रस्य शरीरसंदर्शनं करेयं । ततो यदि युष्मे एतं धनं अपहरथ आत्मानं अहमुपसंक्रमेयं । एवं मया आर्यपुत्रस्य पश्चिमकाले प्रतिज्ञातं ॥ श्रेष्ठिस्य भवति ॥ एवमेतं यथा एषा जल्पति यत्कारणं एषा मम पुत्रस्य अत्यर्थं प्रिया मनापा च आसि या मरणकाले पि मम पुत्रेण एषा न परित्यक्ता एषापि च मम पुत्रस्य भावानुरक्ता हितकामा च आसि अस्माकं च पुत्रको मृतो अनक्षमनीयो एषो यो यदि वयं एतत्पुत्रं मृतं न क्षमामः तस्मादपनेतु धनं ॥ श्रेष्ठिना आणत्तं ॥ मा अपहरथ धनं यथा मम पुत्रस्य मरणकाले अभिप्रायो तथा भवतु ॥ सो दानि महता सत्कारेण नगरातो निष्कासिय एकान्ते ध्यापितो ॥ सा दानि गणिका अतिकरुणानि रोदति शोचति परिदेवति बहूनि भायानि दर्शयति । निवारीयन्ती येन चिता ततः अभिमुखा धावति इच्छति चितायां पतितुं सर्वजनेन निवारिता चितायां पतन्ती ॥ तस्य दानि श्रेष्ठिपुत्रस्य मातापितॄणामेतदभूषि ॥ इमा श्यामा गणिका अस्माकं पुत्रस्य इष्टा च दयिता च आसि एतायेपि च अस्माकं पुत्रो इष्टो च दयितो आसि यं नूनं वयमेतां श्यामां गृहं प्रवेशामः या अस्माकं पुत्रस्य दर्शनं भविष्यति ॥ तेन दानि श्रेष्ठिना सा श्यामा राजकुलातो अनुज्ञानापेत्वा गृहं प्रवेशिता ॥ सा दानि ओमुक्तमणिमुक्तवर्णा ओदातवस्त्राम्बरधरा एकवेणीधरा [illegible] शोचन्ती आसति । श्रेष्ठिपुत्रस्य च मातापितॄणामेतदभूषि । अस्माकमेषा एक-

2. B °pitṛṇâṁ° C °tṛṇâṁ vâ darça°. — 3. B kâmam âtmâ° C kâmâm evam upa° B °meyaṁ | na puna° BC °rîraṁ saṁ° B °yaṁ tato°. — 4. C tataḥ yadi tuṣphevaṁ evaṁ upahara° B °tumhevaṁ evaṁ ca upahara° C °tmânam aha° meṣhyaṁ | . — 5[1]. C °trasya ca parima°. — 5[2]. BC °çreshṭisya bhavati eva°. — 5[3]. B °thâ esho ja° C °thâ eshâṁ jalpati | yaṁ kâlaṁ esho mama° B °rthaṁ kriyâ° C °priyo manâ° B °nâpa ca âsi | yâ maraṇakâraṇakâle° BC °ṇa eshâ ṇa pari° B °tyaktvâ eshâpi ca mama° C °tyaktâḥ eshâpi ma° raktâḥ hitakâmâ ca âsi || asmâ° B °âsi || asmâ° C °rtho ye yadi va° bhâma | asmad apane° B °bhâmaḥ | asmad apane°.

9[2]. C °çreshṭinâ° BC °ttaṁ mâ a°. — 10. C °ekântaṁ dhyâ°.

11. C sâ dâni aṇṇaṇaṇi° BC °reyati nivâ°. — 12. BC °riyanti | yena° B °citâ tataḥ° C °citto chaiyaṁ tato 'bhimu° C °dhâvanti icchati citâyâṁ pati° B °sarvejane° nti tasya°. — 14[1]. C °dâni çre° BC °çreshṭipu° B °tṛṇâṁm eta° C °tṛṇâṁ eta°. — 14[2]. B imaṁ çyâ° C °shṭâ ca parâyitâ ca âsi || etâ° B °si etâryasha ca asmâkaṁ putro ishṭo ca dayitâ âsi yaṁ° C °to âsi | yaṁ°.

16. BC °çreshṭinâ° B °jânâyetvâ° C °jânâmetrâ°. — 17. C °suvarṇṇa etâ° ṇidharâ rajasaṁ apta° canti â°. — 19[1]. C çreshṭipu° tṛṇâṁ eta° B °tṛṇâṁm eta°. — 19[2]. C kasmâkam esho ekapu° B asmâkam eshâṁ eshâ eka° cali so dâ°.

पुत्रस्य शोचति ॥ सो दानि श्रेष्ठि समार्यको यथा च पुत्रं तथा तां श्यामां चेष्टति ॥

कदाचिद्दानि तक्षशिलका नटा वाराणसीमागताः । ते दानि नटदारका भिक्षार्थका तं श्रेष्ठिकुलं प्रविष्टा ॥ ताये दानि श्यामाये तेषां नटदारकाणामुत्तरापथकं भाष्यं प्र[159a]गृहीतं । सा तां नटदारकां पृच्छति । कुतो यूयं ति ॥ ते आहन्सुः ॥ उत्तरापथका वयं ॥ सा आह ॥ कतमातो अधिष्ठानातो ॥ ते आहन्सुः ॥ तक्षशिलातो ॥ सा आह ॥ येन(?) प्रत्यभिजानथ यूयं तक्षशिलायां श्रेष्ठिपुत्रो वज्रसेनो नाम अश्ववाणिजको ॥ नटदारका आहन्सुः ॥ आम प्रत्यभिजानाम ॥ सा आह ॥ शक्नथ मम उपकारं कर्तुं ॥ ते आहन्सुः ॥ बाढं शक्नामो ति किं कर्तव्यं ॥ सा आह ॥ इमं श्लोकं श्रेष्ठिपुत्रस्य वज्रसेनस्य अन्तिके भणथ ॥

यान्त्वं सालेहि फुल्लेहि श्यामां कौशेयवासिनीं ।
गाढं अंकेन पीडेसि सा ते कौशल्यं पृच्छति ॥

ते दानि नटदारका अनुपूर्वेण तक्षशिलामागता अश्ववाणिजकं वज्रसेनमुपसंक्रमित्वा आहन्सुः ॥

यान्त्वं सालेहि फुल्लेहि श्यामां कौशेयवासिनीं ।
गाढं अंकेन पीडेसि सा ते कौशल्यं पृच्छति ॥

सो दानि वज्रसेनो श्रेष्ठिपुत्रो तं श्लोकं श्रुत्वा तां नटदारकां गाथया प्रत्यभाषे ॥

1. BC °çreshṭhi bhâryya(C °ryya)ko yathâ ca pu° B °ceshṭhati ‖. — 3[1]. B °çilâkâ na vârâ° (ou plutôt °naṭâ vâ°?) C °çikâto vârâ° °dârikâ° BC °gatâḥ te dâ°. — 3[2]. C °bhikshottakâ tam̃ çreshṭhikulam̃° B °bhikshâttakâ tam̃ çre° B °shṭâ tâye°. — 4. C °dârikâṇâm u° B °pathakam̃ bhâ° BC °bhâshya pra°. — 5[1]. C °dârikâm̃ kṛcchati BC °echati ku°. — 5[2]. C °yûyam ti ‖ B °ti te â°.

6[1]. B °nsuḥ utta°. — 6[2]. B °mâto âsthâ°. — 7[1]. B °nsuḥ ta°. — 7[2]. C yena pra° B °nam̃ prabhijâ° °lâyâm̃ ‖ çre° BC °çreshṭiputro(C °trah) vajraseno°. — 8[1]. C °dârikâ°. — 8[2]. C âtma pra° °nâmo ‖. — 9[1]. C °âhansuh ‖. — 9[2]. C °pâra kartum̃ ‖. — 9[3]. C °kyâmeti° BC °ti | kim̃°. — 10[1]. B so âha ‖. — 10[2]. C °kam̃ tasya vajrasenasya çreshṭiputrasya anti° B °çreshṭipu°.

12. BC yat tam̃ sâ° C °sârehi phullehi çyâ° BC °vâçinîm̃ ‖. — 13. C vâḍham̃ âṅgena pî° B °kauçalya pṛi°. — 14. B °dârako a° C °dârikâ anu° °ṇa tashaçi° B °âgatvâ va° BC °kam̃ vajrase° C °nsuḥ yat tam̃°.

16. BC yat tam̃ sâ° C °sârehi phu° C °kauçalyavâçinîm̃ ‖. — 17. B gâḍam̃ a° C vâḍham̃ aṅgena° B °çalya pṛi°. — 18. BC °vajrase° C °çreshṭipu° °dârikâm̃ gâthâye pra° B °gâthâyâ°.

रागाभिभूता न सुखं शयन्ति
कृतानुकारं प्रतिकर्तुकामा ।
नराः कृतघ्ना न सुखं शयन्ति
वैरप्रसंगी न सुखं शयन्ति ॥

तं वो न श्रद्दधाम्यहं वातो वा गिरिमावहे ।
कथं सा मृतिका नारी मम कौशल्यकं भणे ॥

ते दानि गन्धदारका आहंसु ॥

नापि सा मृयते नारी अन्यमन्यमभिकांक्षति ।
एकवेणीधरा बाला त्वामेव अभिकांक्षति ॥

श्रेष्ठिपुत्रो वज्रसेनो आह ॥

असंस्तुतं मे चिरसंस्तुतेन
न निर्मिणेया ध्रुवमध्रुवेण ।
इतो अहं दूरतरं गमिष्ये
ममापि सा अन्यं न निर्मिणेय ॥

स्यात्खलु भिक्षवः युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन वज्रसेनो नाम अश्ववाणिजको अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । अहं स भिक्षवः तेन कालेन तेन समयेन वज्रसेनो नाम अश्ववाणिजको अभूषि ॥ अन्या सा तेन कालेन तेन समयेन नगरे वाराणसीये गणिका श्यामा नाम अभूषि । नैतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एषा सा भिक्षवः यशोधरा तेन कालेन तेन समयेन वाराणस्यां

1. B *khaṃ svapanti kṛ* C *khaṃ svapanti vairaprasaṃgī na sukhaṃ çayanti | kṛtā* B *pratikarttuṃ kāmā narāḥ* C *rtūmā narāḥ*. — 3. C *khaṃ svapanti | vaira*. — 5. BC haṃbho na çra* B *ddadhyāmy*.
6. C *mṛttikā*. — 7. C *dārikā āhaṃsuḥ | B *nsuḥ nāpi*. — 8. B *te nārī napya*. — 9. BC *lā tvāṃm evam abhi*. — 10. BC çreshṭhiputro* B *vajrase* C *vajrasena āha ||.
11. BC asaṃstutaṃ(B *ta) me ci* C *na saṃstutaṃ me na ni* B *yā dhruvam adhruveṇa | C *yā dhruvam adhruveṇa |. — 13. B *dūraṃ ga* C *dūratakaṃ gamishyaṃ mamāpi so anyaṃ nirmiṇe syāt || B *mā pi so anyena nirmiṇe ||. — 15. C atha khalu punar bhikshu* BC *vajrasena nā * abhi mai*.
16¹. C *shyeyu ||. — 16². C *hetor ahaṃ*. — 16³. C *kālaṃ tena kā* BC *vajraseno*. — 17. C *yasiṃye gaṇikā çyā nāma* BC *abhi mai*. — 19¹. C *hetor e*. — 19². C esha sma bhikshavo yaçodha*.

नगरे श्यामा नाम अय्यगणिका अभूषि । तदापि अहं एताये अनपेक्षो एतरहिं पि एताये अनपेक्षो ॥

समाप्तं श्यामाये जातकं ॥

अथ भिक्षू आहन्सुः [159b] ॥ भगवां यशोधराये वधे निर्भीयन्तो याचितो । वञ्चकरा भगवतो बोधिसत्वभूतस्य संसारे संसरन्तस्य यशोधरा आसि ॥ भगवानाह ॥ नाहं भिक्षवः वञ्चकरा यशोधरा आसि तथागतस्य संसारे संसरन्तस्य । अन्यदापि अहं एताये यशोधराये अमित्रहस्तगतो रक्षितो ॥ भिक्षू आहन्सुः ॥ अन्यदापि भगवन् ॥ भगवानाह ॥ अन्यदापि भिक्षवः ॥

भूतपूर्वं भिक्षवो अतीतमध्वानं नगरे वाराणसी काशिजनपदे उग्रसेनो नाम राजा राज्यं कारयति कृतपुण्यो महेशाख्यो सुसंगृहीतपरिजनो दानसंविभागशीलो महाकोशो महावाहनो । तस्य तं राज्यं ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं च आकीर्णजनमनुष्यं च सुखितजनमनुष्यं च प्रशान्तदण्डडमरं सुनिगृहीततस्करव्यवहारसंपन्नं च ॥ तस्य दानि तहिं जनपदे चम्पको नाम नागराजो प्रतिवसति कृतपुण्यो उत्सदकुशलसंचयो अनेकनागशतसहस्रपरिवारः ॥ तस्य दानि चंपकस्य नागराज्ञो भवनं देवभवनसंनिभं सप्तरत्नमयानि विमानानि सर्वर्तुकानि सर्वकालिकानि पुष्पफलानि रत्नमयायो पुष्करिणीयो उत्पलपद्मनलिनिकुमुदपुण्डरीकसंछन्ना ॥ ताये पुष्करिणीये अविदूरे वैडूर्यस्तम्भप्रासादो रत्नामयो मुसारगल्वतलाकृतो ॥ तस्य च राज्ञो षोडशनागकन्यासहस्राणि अन्तःपुरं ॥ सो दानि तहिं नागभवने यथा देवराजा तथा मोदति ॥ सो दानि अष्टमी चतुर्दशी पंचदशी त्रिष्कृत्वो पक्षस्य चतुर्महापथे उपोषधं उपोषति । अष्टाङ्गसमन्वागतो ओसृष्टकायो विह-

1. B °pekshâ etara° pekshâ ‖ C °pekshâ etarhi pi etâ° pekshâ ‖. — 3. B atha bhikshûm âhaṃsuḥ ‖ samâ° C iti çrîmahâvastuavadâne çyâmâye jâtakaṃ samâptaṃ ‖. — 4¹. C bhikshu bhagavantam âhaṃsuḥ ‖ B °kshûm âha°. — 4². C bhagavân yaço° BC °vadhe ni° C °trâpite ‖. — 5¹. B °karo bha° C °re saṃsara° râ âsi ‖.

6. BC °râ âha ‖ ta° C °thâtathâga° °re saṃsarantasya anya° B °ntasya anya°. — 7². C bhikshu â° B °âhaṃsuḥ ‖. — 8². B °kshavaḥ bhû° C °kshavo atîtam adhvâ°. — 9. C °dhvâne naga° çîlo mahâbalo mahâkoço° B °ça mahâvahane tasya°.

11. B °ṛiddhiṃ ca sphîtaṃ ca kshe° BC °ḍamara sunigṛi° C °saṃpannâ ca ‖. — 13. BC °kṛitapuṇyo u° C °kulaṃsaṃvayo a° B °dakulasaṃ° C °vâro B °vâraḥ tasya°. — 16. C C °lâni ratnamayâni pushkariṇîye padumotpalanalini° B °tnamayâye pushkiriṇîye utpa° C °cchannâḥ ‖.

17. C °nîye abhidû° B °vaidûrya° C °ratnamayâyo musâgalva° B °mayo susâra°. — 18¹. C °nâgakaṃnyâsa° pure ‖ B °puraṃ so°. — 18². C °râja tathâ°. — 19. C °ashṭamiṃ caturda° daçî trishkṛitya paksha° B °trishkṛitvâ paksha°. — 20. BC °ashṭaṃhakâ° C °kâye vi°.

रति ॥ सो दानि नागराजा तहिं चतुर्महापथे उपवासं समादत्तो अहितुण्डकेन दृष्टो । तेन सो अहितुण्डिकेन चम्पको नागराजो ततः चतुर्महापथातो गृह्य सर्पकरण्डके प्रक्षिप्तो आसति । नापि तस्य अहितुण्डिकस्य कुप्यति न अनुरक्षीयन्तो महाबलो महातेजो नागराजा इच्छति सजनपदां वाराणसीं भस्मीकरेया ॥ तत्र सर्पकरण्डे तं व्रतमनुपालेन्तो [160ᵃ] आसति ॥ तेनापि नागराज्ञा परिवारस्य निमित्तानि आचिक्षितानि यदि मम एत्य चतुर्महापथे उपवासं समादत्तस्य कोचिद्विहेठेय तहिं नागभवने निमित्तानि भविष्यन्ति । यदि इह नागभवने एतानि वनस्पतीनि संमिलायेन्सुः एतानि च उत्पलपदुमकुमुदपुण्डरीकसौगन्धिकानि ततो जानेय बद्धो सो नागराजा । यदि एतानि वनस्पतीनि सर्वाणि सर्वशुष्कपत्रा भवेन्सुः एतानि च पुष्करिणीनि निरोदकानि भवेन्सुः ततः जानेय हतो नागराजा ति ॥ तेन दानि चम्पकेन नागराज्ञा अहितुण्डकेन सर्पकरण्डके बद्धेन तहिं नागभवने एतानि निमित्तानि प्रादुर्भवन्ति ॥ ते दानि नागा च नागकन्या च तहिं नागभवने तानि निमित्तानि दृष्ट्वा सर्वे उत्कण्ठिता बद्धो नागराजा । किं ततो । एकमेको समर्थो तं नागराजं ततः अहितुण्डिकस्य हस्तातो मोचयितुं न च तं नागराजं मोचयन्ति ॥ यत्कारणं पूर्वं व नागराजेन परिवारस्य संदिष्टं । यदि मम उपवाससमंगिस्य कोचिद् हरेय वा बंधेय वा न युष्माभिस्तस्य केनचिद्प्रियो वा विप्रियो वा कर्तव्यो । यत्कारणं एष मम व्रतोत्सर्गं ॥

तस्य दानि नागराज्ञो अग्रमहिषी षोडशानां स्त्रीसहस्राणां ..... । ताये च वाराणसीं गत्वा राज्ञो उग्रसेनस्य उपरिप्रासादवरगतस्य नागराज्ञो चहुणं संनिदानमारोपितं ॥ राजा उग्रसेनो तस्या नागिनीये सकाशातो चम्पकस्य ना-

1. C °kena prakshipto āsa° (l. 3) B °shṭo tena°. — 2. B °hāpathoto gṛi°. — 3. B °hi-yanti | mahāba° C °hīyantī mahāvaro mahātejo° BC °padaṃ vārā° B °bhasmīṃkareyyā | C°reyyā | . — 4. C °rpakaraṇḍa taṃ vra° B °pālanto°. — 5. C °rājā pari° kahacitāni yadi mama etihaṃ ca° B °ttasya kācid viheṭheye | tahiṃ° C °d viheṭheya ta° B °bhaviṣhyaṃti yadi°.

7. C °iha nāgarājñā parivārasya iha nāgabha° BC °vanaspatini saṃ° B °yetsuḥ etā° C °baddhaḥ so nāgarā° BC °rājā etāni°. — 9. BC etāni ° tāni sarveṇa sarvaṃ çu° B °çuka-patrā bhavetsuḥ e° C °patrāṇi bhavetsuḥ etāni va pu° BC °ṇīna niro° C °kāni vahatsuḥ | tato jā° B °bhavetsuḥ ta°.

11. C °rājña ahituṇḍikena° B °tāni nittāni°. — 12. C °gā ca nāgakaññyā ca tahiṃ° C °nirmittāni dṛi° BC °rājā kiṃ°. — 13. C °tataḥ e° B °tato e°. — 14. C °tato ahi° B °tuṇḍikasya hastāto mākahayi° BC °rājaṃ na mo°. — 15¹. BC °rve ca nā° B °shṭaṃ yadi°. — 15². C cadi ma° BC °pavāsamaṅgiṣya kvacid ha°.

17. C °ṇaṃ vā caha°. — 18¹. C °gramahiṣhi sho° BC °ṇāṃ tāye°. — 18². C °prāsādā vara ° ṇaṃ saṃnidā° B °ṇaṃ saṃnidhan°. — 20. C °senas tasya nāgi° B °tasya nāgi° BC °rṣṭito cā°.

गराजो तं गुणपरिकीर्तनं श्रुत्वा प्रीतो संवृत्तो । राजा तां नागकन्यामाह ॥ निषीदाहि वा स्वकं वा भवनं गच्छाहि यावत्सुदूता तं नागराजमन्वेषिय आनयन्ति इति ॥ नागिनी आह ॥ महाराज अहितुण्डिकं संतोषयित्वा ग्रामवरेण वा हिरण्यसुवर्णेन वा तं नागराजानं मोचेहि मा राजाज्ञया ॥ राजा आह ॥ नागिनि एवमस्तु अहितुण्डिकं परितोषेत्वा ग्रामवरेण वा हिरण्यसुवर्णेन वा चंपकं नाम नागराजानं मोचयिष्यामि ॥ सा दानि नागकन्या उग्रसेनस्य काशिराजो आह ॥ शरणगतो ते महाराज चंपको नाम राजा सार्धं [160b] पीडयति स्त्रीसहस्रेहि ॥ एवमुक्त्वा सा नागकन्या अन्तरहिता ॥ राजा उग्रसेनेन समन्ता दूता प्रेषिता । चम्पको नागराजा उपवाससमंगी अहितुण्डिकेन गृहीतको तं आनेथ ॥

मनसा देवानां वचसा पार्थिवानां
अचिरेणाढ्यानां कर्मणा दरिद्राणां ॥

राज्ञो उग्रसेनस्य वचनमात्रेण राजदूतेहि अहितुण्डको सनागराजो आनीतो ॥ राज्ञा तं अहितुण्डिकं परितोषित्वा ग्रामवरेण हिरण्यसुवर्णेन च चंपको नागराजो मोचित: ॥ मुक्तमात्रो च चम्पको नागराजा देवराजविषयो संवृत्तो नागभवनो च यथापौराणं संवृत्तं देवभवनसन्निभं तस्य च नागराज्ञो परिवारो यथापौराणं भवनं दृष्ट्वा प्रीता तुष्टा संवृत्ता । मुक्तो नागराजा ॥

सो दानि नागराजा उग्रसेनेन काशिराज्ञा सार्धं एकपर्यङ्केन निषण्णो ॥ सो तं काशिराजं निमन्त्रेति इच्छामि महाराज यं सपरिवारो मम भवनं पश्येसि ॥ राजा आह ॥ यूयं नागा तीक्ष्णविषा च क्रोधना च । न शक्यामि नागभवनं गन्तुं ॥ नागराजा तमाह ॥ महाराज सशरीरो सो महानरके प्रपतेया यो

1[1]. C °gakaññyām ā°. — 1[2]. B °yāvat sadūtā° C °dūtāṁ taṁ° B °rājanām anveshi ‖ ya ā° C °nveshaya ā° BC °gacchaṁti iti ‖. — 3[2]. C °kaṁ santoshu° B °suvarṇṇena vā° C °ṇṇe vā taṁ°. — 4[2]. BC nāginī eva° C °toshitvā° B °suvarṇṇena vā caṁ°.

6. BC °gakaññyā°. — 7. C °ko nāma mahārāja sārddha shoḍaçehi strī° BC °sehi eva°. — 8[1]. BC °ta uptkā sā nā° C °gakaññyā antarhito |. — 8[2]. C rājño ugrasenena samanto dū° B °grasena sa ° shitā campa°. — 9. C °pavāsamaṅgi ahi°. — 10. B °acirāṇāḍhyā° C °maṇāṁ da°.

12. C °treṇa rājadū ° tuṇḍehi tuṇḍiko nā° B °tuṇḍako nā°. — 13. B °hiraṇṇyasu° kshitaḥ mu° C °kshito mu°. — 14. C °tro ck ca° B °jā devarājaṁ vi° BC °shayaṁ saṁvṛtto° B °tto devabhavanasanni° C °ne ca yathāpaurāṇasaṁvṛittaṁ de° paurāṇaṁ nāgabhavanaṁ dṛi° B °paurāṇaṁ nā bhavanaṁ dṛi° C °prīto tushṭo saṁvṛitto |.

17[1]. BC °jā so dā°. — 17[1]. C °ekaparyyaṅkena nishaṇṇā su taṁ° B °shaṇṇo so taṁ°. — 17[2]. C sau taṁ °ntreti | I ° vāro na mama°. — 19[2]. C °krodhanā ca |. — 20[2]. BC °ja mayaṁ° BC °prapateyo va yushmā° B °ahmākaṁm edṛi° C °dhmākaṁ edṛi° B °pūrvakāri° BC °jīveyānarūpateyā |.

यथाकर्मोपगं तव पूर्वोपकारिमपकृत्वान जीवं नरके पतेया । सचन्द्रतारा पृथिवी पतेया नद्यो च प्रतिस्रोतं वहेन्सुः । न खल्वेवं अहं मृषावादं भाषेया तव च कृतं न जानेया ॥ राजा आह ॥ यथा नागराजस्य इष्टं तथा भवतु । पश्यामि ते भवनं ॥ राज्ञा उग्रसेनेन अमात्या आणत्ता । युज्यन्तु रथा हस्ति अश्वा विविधानि च यानानि नागराज्ञो भवनं द्रक्ष्यामः ॥ वचनमात्रेण राज्ञो अमात्येहि प्रतिजागृतं ॥ राजा सामात्यपरिजनो सयुग्यबलवाहनो चम्पकेन नागराज्ञा सार्धं एकयानमभिरुहित्वा महता राजानुभावेन महता राजऋद्धीये महतो जनकायस्य हक्कारहिक्कारमरुपटहशंखशब्दसंनादेन वाराणसीये नगरातो निर्यात्वा येन चम्पकस्य नागराज्ञो भवनं तेन प्रयासि । यावत्तां यानानां भूमिं ताव यानेहि यात्वा पद्चारेण चंपकस्य नागराज्ञो भवनं प्रविष्टो सपरिवारो ॥ सो दानि तं चम्पकस्य नागराज्ञो भवनं पश्यति देवभवनसंनिभं पुष्पफलोपेतेहि वृक्षसहस्रेहि उपशो[161a]भितं नानाप्रकारेहि च माल्येहि उपवासितं पुष्करिणीहि च रत्नामयीहि उपशोभितं उत्पलपद्मनलिनिकुमुदपुण्डरीकसौगन्धिकसंछन्नाहि नानाविधेहि च रत्नमयेहि कूटागारेहि प्रासादेहि च वैडूर्यस्तम्भेहि मुसारगल्वास्तृततलेहि ॥ तत्र काशिराजा चम्पकेन नागराजेन रत्नामये पर्यङ्के उपविशापितः ॥ तानि षोडश नागकन्यासहस्राणि चंपकं नागराजं उपक्रम्य पृच्छन्ति । कथन्ते अमित्रमध्ये वासो आसि कथं ते क्षुधापिपासा विनोदिता कथं वा ततः मोक्षो आसि ॥ नागराजा आह ॥ लब्धो मे यथोचितमन्नपानं एतेन च काशिराज्ञा मोचितो ॥ ता दानि षोडश नागराजकन्यासहस्राणि राज्ञो उग्रसेनस्य प्रीता तुष्टा संवृत्ता मुक्तानां पंच वैडूर्यमिश्राणि वाहशतानि दिन्नानि ॥ चम्पकेन नागराजेन सर्वा-

1. BC °ndratāraṃ pṛ° C °thivī gaccheyā° B °vahensuḥ | — 2. B °sheyā | tava° BC °tava cikṛitaṃ°. — 3². BC °naṃ rā°. — 4¹. BC rājño ugrasena a ° yattā(C °ttāḥ) yu°. — 4². BC yujyatu ra° C °dhānāni ca yā ° garāja bhava° BC °vane dra°. — 5. BC °rājñā a°.
6. B °sāmātyāpari ° hano campakanāga° B °yānam abhiruhitvā° C °bhirūhitvā° C °ddhiyena mahatā ja ° hikkāramarupaṭahasaṃkha° BC °khasaṃninādo° C °nagarāto ni° BC °yena campaka°. — 9. C yāvattā yānā° C °tāvad yānehi°. — 10. C °phalopetehi vṛ° BC °srehi upaçobhitaṃ | nānāpra° B °upayāsi° C °kārehi mālyehi ca upa° B °pushkiri° BC °bhitaṃ | utpa° C °lparamadumapuṇḍarīkanalinisau° B °ṇḍalikasau° C °cchannāni nānāvi° B mbhehi ca sauā° C °vaiḍūryehi stambehi musāgalvastṛitalehi ‖ B °stṛipatalehi ‖.
15. C °rājā ratnā° B °tnāpayo parya° C °çāpito |.
16¹. C tāni dāni shoḍa ° gakaṃnyāsahasrāni caṃ° BC °campakanāga° B °nti katha°. —
16². C kathaṃ te a ° so āsi | kathaṃ te° B °āsi ‖ kathaṃ te° C °pāsā prativino ° kho āsi | . — 18². BC °thodakam anna° C °nena sya rājño bharaṇaṃ paçyati° (p. mix. l. 1) B °rājño mo°. — 19. B °prāṇāṃ ca vāha°. — 20. B °sarvakāraṃ u ° çyati | de° C °bhavanaṃ sammi° B °bhaṃ rāja°.

कारं उग्रसेनस्य राज्ञो भवनं पश्यति देवभवनसन्निभं ॥ राजकुलं परिरक्षितं अग्निदाहो च उत्पन्नो चम्पकेन नागराजेन निर्वापितः ॥

इति श्रीचम्पकस्य नागराजस्य परिकल्पपदं समाप्तं ॥

अथ

का नु विद्युद्दिवाभासि सरसि विय तारका ।
ताम्रपादपयष्टिर्वा पुष्पिता वनमन्तरे ॥
असि त्वं भद्रके जाता जाता विहरसे वने ।
देवी असि वा गन्धर्वी न त्वं असि हि मानुषी ॥

नागकन्या आह ॥

नाहं देवी न गन्धर्वी न महाराज मानुषी ।
नागकन्याहं भद्रं ते अर्थीनी इह आगता ॥

राजा आह ॥

चित्तान्तचित्ता विलुप्तेन्द्रियासि
नेत्रेहि ते वारि स्रवन्ति दिन्ने ।
नष्टं हि किंची अभिप्रार्थयन्ती
इहागता तानि न दीर्घं ब्रूहि ॥

नागकन्या आह ॥

यमुग्रतेजं उरगो त्ति आहु
नागो ति मं आहु जना जनेन्द्र ।
तमर्थये पुरुषो जीवितान्वितं
तं अन्यथा मुंच पतिं मे देव ॥

1. BC °kshitaṃ | asti° C °pito ||. — 3. C çrīmahāvastuavadāne campa° rājājātakasya pari° B °rājātasya pari° BC °lpapadā sa°. — 4. C kā na vi° BC °dyur ivā° C °bhāsa tu sara° B °si usara° BC °kāḥ tāmrapāda°.

6. B °shpitā ca ramantare | C °shpitā ca ramantike | . — 7. BC asmīva(C °vāve)dane jātā jātā ci°. — 8. B devim asi ca ga° C devim asi gandharva na° BC °na te anyāni mā° B °nushīḥ ||.

11. C °bhadraṃ te a° B °n te arinī iha°. — 13. B cittāntā° C °ndriyā çrī netrehi te shāṇi çra° B °vārī çra°. — 15. C nashṭehi kiṃcābhi° B °shṭaṃ kiṃ abhi° C °rthayanti i° B °dīrghataṃ kruhi || C °dīrghataṃ bhuvih ||.

17. BC °gakaṃnyā°. — 18. BC yaṃ udagratejā u° C °uragorttim āhuḥ nāgoti nāhu janā° B °gortti naṃ āhu | nāgoti na āhu janā° BC °janendraṃ | . — 20. BC °purusho(C °sha) jīvati jīvitānvitaṃ(C °taṃ )iha° C °me ca devāḥ na°.

नगरं पि नागो भस्मीकरेया
तथा हि यावच्च बलोपपेतो ।
धर्मं तु नागो अयं याचमानो
हस्तत्थमागच्छे वनीपकस्य ॥

राजा आह ॥

कथं विजानेय गृहीतनागो
स उग्रतेजो बलस्थामवन्तो ।
दुरासदो दुःप्रसहो भुजंगो
हस्तत्थमागच्छे वनीपकस्य ॥

ना[161b]गकन्या आह ॥

चतुर्दशीं पंचदशीं च अष्टमीं
चतुष्पथे गच्छति नागराजो ।
ओसृष्टकायो विचरन्तो नागो
हस्तत्थमागच्छे वनीपकस्य ॥
एवं विजानेसि गृहीतनागो
सो उग्रतेजो बलस्थामप्राप्तो ।
दुरासदो दुःप्रसहो भुजंगो
हस्तत्थमागच्छे वनीपकस्य ॥

राजा आह ॥

निषीद वा तिष्ठाहि त्वं च नागि
गच्छाहि वा ताव स्वकं निवेशनं ।
यावन्ति दूता गतो नीयतां ति
अन्वेषिषुः नागनृपं यशस्विनं ॥

1. C °raṃ nāgo bha ° revā | tathā° B °hi yā balo°. — 3. B °nāgo arya pāpamāno° C °ccheya vaṇi° B °varṇāpa°.
6. B °ya mṛitanāgo nam ugra° C °ya mṛite nāgam ugratetejo balasthāmaviryyavanto | B °sthāmanto | . — 8. C durāsadā duḥ ° m āgacchai vaṇi°. — 10. C nāgakaññyā°.
11. BC °rdaśi paṃ° B °shṭamiṃ ca catu° C °shṭamiṃ caturpatho ga ° rājā | . — 13. C °shṭashṭhakāye vicaranti nāgah haṃ bhaavam āgacchati vaṇipakaṃya | B °go haṃ tvam ā°.
17. C °rāsadā dushprasaho bhu ° gacchasi vaṇi°. — 20. B nisīdo vā tishṭha vā tāṃ vanāni gacchā° C °shṭhati vā vanāhi gacchahi° BC °tāvat svakaṃ°.
22. B yāva mi dā° C yāvad bhūmi dūtā gatā nāya tantu anve° B °gatā nāya taṃ tu anve° BC °shi sa nāgarājā yaça°.

नागकन्या आह ॥

धर्मेण मोचेहि असाहसेन
ग्रामेण निष्केण च गोशतेन ।
ओसृष्टकायो निगृहीतनागो
पुण्यार्थिको मुच्यतु नागराजो ॥

राजा आह ॥

धर्मेण मोचेष्यमसाहसेन
ग्रामेण निष्केण गवां शतेन ।
ओसृष्टकायो च भुजंगो गच्छतु
प्रीतो च संपद्यतु नागराजा ॥

नागिनी आह ॥

षोडश स्त्रीसहस्राणि आमुक्तमणिकुण्डला ।
वारिवासगृहाश्रिता आर्य त्वां शरणागता ॥

राजदूतेहि अहितुण्डिको च नागराजा च आनीतो ॥ राजा उग्रसेन आह ॥

देमि निष्कशतं सर्व्वं स्थूला च मणिकुण्डला ।
चतुःशतं च पर्य्यङ्कं दामकपुष्पसन्निभं ।
भार्य्या च सदृशीं देवीं मुच्यतु उरगाधिपः ॥

अहितुण्डिको आह ॥

विना तु दाना वचनान्नरेन्द्र
मुञ्चामिमं धार्मिको नागराजा ।
महानुभावो परलोकदर्शी
महायशो सो च न संविहेठ्यो ॥

1. C nâgakaññyâ°. — 2. B °movehi° C °mokshevehi°. — 4. B osṛishṭhakâyo ° puṇyarthiko mucyantu nâ° C °rthiko ucyantu nâ°.

7. BC °cehyaṁ asâ° B °grâmana ni° C °shkena ga°. — 9. B °kâyo gacchatu bhujago prîto ca ṣampa°.

11. C nâgiṇî âha ‖. — 12. BC °ṣoḍaṣi asu° C °ṇḍalâḥ vâ° B °ṇḍalâ vâri°. — 13. C vârîvaṁ ca grihâṣritâṁ âryya° B °rîva grihâṣrito ârye tvâṁ çaraṇam âgatâ ‖. — 14¹. BC râjâdâ° C °garâjo ca°. — 14². C °sena âha ‖. — 15. C °nishkâçataṁ°.
16. B °kaṁ damako pu° C °kaṁ damakaṁ pu°. — 17. C bhâryyâ ca sa° B °dṛiçâṁ de° çyatam ura°. — 19. BC °dânâ tu vacanâu na(C °nâ na)rendraṁ muñcâmimâṁ dhâ°.
21. C °pamaloka° lo ca na saṁviheṭhayo | B °lo vacana saṁviheṭhayo |.

यो बाधते पूर्वकरिस्मि राज्ञो
[164ª] यथादृशो तुह्य कृतं न जाने ॥
अप्येव वातो गिरिमावहेय
चन्द्रो च सूर्यो च चितिं पतेय ।
सर्वा च नद्यो प्रतिस्रोता वहेन्सुः
न त्वेवहं राज मृषा भणेयं ॥

राजा आह ॥

यथेदं नागराजस्य तथा भोतूरगाधिप ।
यथा तुवं च याचेसि पश्यामि ते निवेशनं ॥

राजा उग्रसेनो अमात्यानाह ॥

युज्यन्तु ते राजरथा सुचित्रा
कम्बोजका अश्ववरा सुदान्ता ।
हस्ती च युज्यन्तु सुवर्णच्छन्ना
द्रक्षाम्यहं नागनिवेशनानि ॥

अमात्या आहन्सुः ॥

युक्ता इमे अश्वरथा सुचित्रा
कम्बोजका अश्ववरा सुदान्ता ।
हस्ती च युक्तास्ते सुवर्णच्छन्ना
निर्यातु (राजेन्द्रो) महाबलेन ॥
ततो च राजा निर्यासि सेना च चतुरंगिनी ।
मित्रामात्यपरिवृतो ज्ञातीसङ्घपुरस्कृतो ॥

1. B yo bâdhite° C yo bodhite° BC °pûrvopakâri° B °râjaṁ samâ° C °râjan samândriço° BC °tujya kṛi°. — 3. C apyeva kṛitaṁ giri sâ bhaveya ca° B °giri sâhaveya ca° BC °candro sû(C °su)ryo ca° C °pateyâ | . — 5. C °çrota vahetsuḥ na tvevam ahaṁ° B °hetsuḥ | na tve° BC °râjâ mṛisho bhaṇeyaṁ | .

7. BC *omettent ces deux mots.* — 8. BC yathedaṁ thânâga ° thâ bhotû(B °bhobhô)ragâdhipaḥ(C °paḥ | ) ya°. — 9. B yathâ tvaṁ ca yâ° C yathâ ca tvaṁ yâcasi nâgarâjâ paçyâmi ca | te° BC °te nâganiveçanâni ‖ . — 10. B °tyâ âha ‖ C °tyânâm âha ‖.

11. C pûjyantu° B yujyaṁtu te râ° C °ratho muci°. — 13. B hastî ca yu° C hastiç ca pûjya° BC °trâ(C °trâ | ) drakshyâmi nâga°.

16. C yuktanie açvara° B °ktâ me açvara° C °jakâ ashtavaro sudânto ha° B °ntâ ha°. — 18. C hastiç ca yu° B °varṇṇâ ccho° BC °ryâtu mahâ° C °balenâ ta°. — 20. C tataç ca | râ° BC °senâ catu° et mitrâ°.

21. B °skṛito bhe°.

भेरी मृदंगा पटहा च संखा
वाद्येन्सु वेणू उग्रसेनराज्ञो ।
निर्यांति राजा महता बलेन
पुरस्कृतो नागरिकान मध्ये ॥

गत्वान काशीनां राजा नागराजनिवेशनं ।
अद्राक्षीन्नागराजस्य देवानां भवनं यथा ॥
आम्रजम्बूहि संछन्नं कोकिलगणसेवितं ।
अद्राक्षी नागराजस्य काशिराजा निवेशनं ॥
समन्ततो वनगुल्मा पुष्पिता सर्वकालिका ।
मनोज्ञगन्धं प्रवायन्ति नागराजनिवेशने ॥
सुवर्णरूप्यसोपाना पुष्करिण्यो अभिनिर्मिता ।
पद्मोत्पलसंछन्ना नानाद्विजनिषेविता ॥
वैडूर्यस्तम्भप्रासादा मुसारगल्वतलावृता ।
अद्राक्षी नागराजस्य काशिराजा निवेशने ॥
प्रविष्ट काशीनां राजा नागराजनिवेशनं ।
पर्यंकस्मिं उपविष्टो आतरूपमये शुभे ॥
दृष्ट्वान तं आगतं च नागराजं च चम्पकं ।
काशिराजेन सार्धं च कृत्वान अंजलिं गता ॥
पृच्छति नागकन्या यदासि अभिरमस्यिमे ।
ततो पिपासां क्षुधां च कथं तव विनोदये ॥

1. BC °vâdyeśu veṇu(B °ṇuṁ) ugrasenasya(B °naç ca) râjño ni°. — 3. C niryâtu ‖ râ° B niryâti ‖ râ° C °skṛtâni nâ° BC °nâriga ° dhye ga°.

6. C °kahit nâga° BC °devabha°. — 7. BC sarujaṁ kruhi saṁ° C °cchannâḥ ko°. — 9. B °gulmapu° C °gulmeshu pushpikâ sa° B °lika mano°. — 10. B °gandhapra° C °râjâ ni° BC °çanaṁ | .

11. C °sopânâṁ pushkariṇyo 'bhi°. — 12. BC padmotpa° C °tparasaṁcchannâç ca nâ°. — 13. BC addarçâ nâgarâjasya kâçirâjâ niveçanaṁ | vaiḍû° C °prâsâdo musâgalva° B °dâ susâragalvatalâstṛi°. — 14. BC °niveçanaṁ | . — 15. BC °gurâjânive° B °çanaṁ pa°.

16. B payaṅkasmin upâvi jâ° C paryyaṁkesmiṁ upâviçya jâ°. — 17. C °taṁ ca âgataṁ nâgarâjâ saṁpakasya ca ‖ B °râjâ câmpayakaḥ | . — 18. C kâçirâ °rddhaṁ ca so kṛitâṁjaliṁ pṛi° B °kṛitâñjalim anu pṛi°. — 19. BC °cchati | nâgakaṁnyâ° B °nyâ kathaṁ sâç ca âsi° C °nyâ sâ kathaṁ ca âsâ ami°. — 20. C tato kshudhâpipâçâç ca ka° B °pipâkshudhâṁ ca ka°.

नागराजा आह ॥

यथोचितं भक्षति अन्नपानं
क्षुधापिपासाय विनोदनार्थं ।
अयं च मे . . . . . काशिराजा
क्षिप्रं नाम मोचये बन्धनातो ॥

ता दानि षोडश नागकन्यासहस्राणि उग्रसेनं काशिराजमभिष्टवेन्सुः ॥

एवं नन्दाहि भद्रन्ते काशिराज सबान्धवो ।
यथा वयम[163b]द्य नन्दाम दृष्ट्वानुरगाधिपं ॥
एवं नन्दाहि त्वं राज सह सर्वेहि ज्ञातिहि ।
यथा वयमद्य नन्दाम समग्रा पतिना सह ॥
मुक्तान ते वाहशतानि पंच
वैडूर्यमिश्रान ददामि राज्ञे ।
अन्तःपुरे भूमि समास्तरा हि
निष्कर्दमा लिपिमति नीरराज ॥
तं तादृशं अथ स राजा दृष्ट्वा
अन्तःपुरं देवविमानकल्पं ।
नारीगणेन परिचर्यमाणो
अनुशासते काशिपुरं समृद्धं ॥

राजा उग्रसेन आह ॥

त्वं कंचुकाम्बरधरो सुवस्त्रो
तव चापेन्तो अनुपमवर्णो ।
दिव्येहि कामेहि समङ्गिभूतः
किमर्थं नाग भुवि त्वं चरेसि ॥

2. C °nnapāna kshu°. — 5. BC °ca me kāçi°.

6. C °çakāmnyā° B °udagrasenaṁ° BC °stavetsuḥ evaṁ°. — 7. BC evaṁ nayehi bha° C °bhadanto kā° °ndhavaḥ | B °ndhavā | . — 10. C °ndāma samāgrā°.

11. BC °rājan | . — 13. B °samasta° C °samastalā hi ni° B °nishpadaṁ mā bheshyati ni° C °mā bhavishyati ni° BC °rāja taṁ tā°. — 15. BC °çaṁ | atha sa rāja açishṭaṁ (B °shṭhaṁ) antaḥ°.

17. C °ryamāṇo anu° C °samṛiddhaṁ | . — 20. BC °cuko paradhārā suvastrāyāyanti (B °nti | ) anupavarṇṇā divye°.

22. B °mehi saṁmaṅgi° C °samanvagibhūto ki° BC °martho nā° B °ga bhavanaṁ ca° C °ga bhūvanaṁ ca°.

नागराजा आह ॥

नान्यत्र भवे मानुषको जनो तु
संचिन्तयति नो दिव्यसंयमो वा ।
योनिमहं मानुषीं प्रार्थयन्तो
तस्य कारणाद्य तपं चरामि ॥

राजा उग्रसेनो चिन्तयति ॥

दृष्टा नागा च नागी च प्रार्थयन्ता मानुषं भवं ।
किं करिष्यामि शुभं कर्म अपायसमतिक्रमं ॥
पूर्वेनिवासं भगवां पूर्वेजातिमनुस्मरन् ।
जातकमिदमाख्यासि शास्ता भिक्षूण अन्तिके ॥
ते स्कन्धा तानि धातूनि तानि आयतनानि च ।
आत्मानं च अधिकृत्य भगवानेतमर्थं व्याकरे ॥
अनवरागस्मिं संसारे यत्र मे उषितं पुरा ।
चम्पको हं तदा आसि नागराजा महर्द्धिको ।
यशोधरा नागकन्यासि एवं धारेथ जातकं ॥
एवमिदमपरिमितं बहुदुःखं
उच्चनीचं चरितं पुराणं ।
विगतज्वरो विगतभयो अशोको
स्वजातकं भाषति भिक्षुसंघमध्ये ॥

भगवानाह ॥ तदाप्यहं भिक्षवः नागभूतो अहितुण्डिकेन बद्धो मान्सार्थं यशोधराये मोचितो । अग्रवाणिजको पि सन्तो वाराणसीये संजातो मोचितो ॥

इति श्रीचम्पकनागराजस्य जातकं समाप्तं ॥

2. C °bhava mâ° BC °jane tu saṃcintyata | so °di(B °dvi)vasaṃ yamo vâ yo°. — 4. BC yonirahaṃ°.

7. BC dṛshṭvâ nâ° B °rthayati manu° C °rthayatâ mânushi bhavaṃ | . — 9. BC °nivâsa bha° C °gavân pûrve jâtim anu°. — 10. B °m âkhyâsi C °khyâsi sâkshâ bhikshuṇaṃ antike |.

11. BC °tâni âyatya°. — 12. C °tmânam adhi° B °bhavon etam a° C °bhagavân etam artha vyâ°. — 14. C °ko nâgarâjâ haṃ tadâpyaham âsi nâ°. — 15. BC °nâgakaṃnyâ°.

16. B evam ivam apa° C °mimidaṃ ba° BC °rûpaṃ vigatajva°. — 18. C °jvaraṃ vigatabhâ°. — 20². B °mâṃsârthaṃ yaço° C °mâsârthaṃ yaço°.

21. BC °âya saṃjâto°. — 22. C çrîmahâvastuavadâne campako nâ°.

छन्दको बोधिसत्वेन अभिनिष्क्रमन्तेन अनोमियातो अधिष्ठानातो निवर्तितो । छन्दकश्च कण्ठको च कपिलवस्तु आगता ॥ राजा शुद्धोदनो श्रुत्वा छन्दको आगतो कण्ठकमादाय छत्रं च आभरणानि च राजकुलातो बाहिरद्वारशालां निर्धावितो सान्तःपुरो यशोधरापि कण्ठकं ग्रीवायामुपगृह्य प्ररोदन्ती आह ॥ कहिन्ते कण्ठक कुमारो नीतो किं मया तव अपरार्द्धं छन्दकस्य च यं यु[163a]यं मम सुखप्रसुप्ताये कुमारमादाय गता अहं च षष्टिसहस्रं च अन्तःपुरं भवति विधवाकृतं ॥ छन्दको आह ॥ किमस्माकं अपराधं कृतं अहं पि उच्चेन स्वरेण आरवामि । कुमारेण अभिनिष्क्रमन्तेन कण्ठकेन उच्चेन स्वरेण हीषणशब्दं कृतं न च युष्माकं को पि विबुध्यति ॥ देवसहस्रकोटीयो अन्तरीक्षे समागता ॥ इमां मल्लभूमिं अनोमियं नाम अधिष्ठानं नीतो वशिष्ठस्य ऋषिस्य आश्रमपदस्य नातिदूरे ॥ कुमारेण लुब्धकस्य काशिकानि दत्वा काषायाणि गृहीतानि स्वयं चूडा असिपत्रेण छिन्ना सा च चूडा शक्रेण देवराज्ञेन प्रतिच्छिता ॥ ततः मो कुमारेण आभरणानि दत्वा निवर्तिता । एवं च अहं सन्दिष्टो । पितरं मे कौशल्यं पृच्छेसि मातुस्वसाये पि सर्वस्य ज्ञातिवर्गस्य । कृतकार्यो पि परिपूर्णसंकल्पो आगमिष्यामि ॥ यशोधरा च षष्टिसहस्रं च अन्तःपुरं सर्वं च शाक्यराष्ट्रं रोदित्वा परिदेवित्वा स्वकस्वकानि निवेशनानि गता ॥

छन्दकस्य राजकुलं प्रवेशित्वा राजार्हं प्रणीतं अन्नपानखाद्यभोज्यं उपनामितं । कण्ठकस्यापि मधुम्रक्षितानि मोदकानि उपनामितानि तथा अन्यमपि राजार्हं खाद्यभोज्यं मोदकप्रकाराणि च कण्ठकस्य पुरतो राशीकृता न च कण्ठको परिभुंजति ।

1. C *nomijāto adhi*. — 2a. BC *ç ca kanthako* C *lavastum āga* BC *gato ||. — 3b. B *dvālaçā* *vito çāntaḥ* C *grīvoyāṃ upagṛi* B *rodantīṃ āha ||. — 4. C kahiṃ te kumā* B *n te kanthaka ku* *to kiṃ me yā ta* C *parādhaṃ ccha* BC *sya cāyaṃ yā* C *sukhaṃpra* *mārodāya gato || ahaṃ* B *tā | ahaṃ* C *shashṭhisaha* BC *hpuraṃ bhavati vidha*.

7b. C *dhaṃ kim asmākam aparādhaṃ kṛitā ahaṃ* B *ārevāmi ||. — 8. B *ntena kanthakena u* C *uccena sva* BC *reṇa hīsha*. — 9. C *riksho samāgatāḥ ayaṃ malla*. — 10a. C *vaçishṭhasya ṛi* *padāsya nāti* B *dūra kumā*. — 10b. C *sya kanç* BC *svayam varaṃ asi* B *trena cchi* C *cchinna sā*.

12. C tataḥ kumā* B tataḥ mām kumā* C *ṇāni vartito | B *datvā niva*. — 13a. C *saṃdṛishṭo BC *ṣṭo pita*. — 13b. C *pṛicchasi | mātuḥ svasāpi* B *si | mātursvasāpi sarvasya jñā*. — 14a. B *kārye pi* C *kāryyaparipūrṇṇaṃ saṃ* BC *kalpo ā*. — 14b. B *dharo ca shashṭe ca saha* C *shashṭhī sahasraṃ cāntaḥ* BC *hpuraṃ sārddhaṃ ca çā* B *rāshṭaṃ ro* C *rājaṃ rodi*.

17. B *kula pravo* C *rhaṃ praṇītaṃ annapānaṃ khā* B *bhojya u*. — 18. B kanthakasyā *dhumakshi* BC *anyasyāpi rājārhasya khādyabhojasya mo* C *prakāprakārāṇi* C *puravo rāçiṃ kṛitvā na*.

बोधिसत्वं समनुगच्छन्तो सर्वकालमश्रूणि प्रवर्तेंति । अन्तःपुरिका च अंशुकेहि दुकूलेहि पट्टोर्णेहि च महारहेहि राजार्हेहि वस्त्रेहि कण्ठकस्य अन्ये अश्रूणि प्रमार्जेन्ति अन्ये शीर्षं प्रमार्जेन्ति अन्ये ग्रीवं प्रमार्जेन्ति अन्ये पृष्ठं प्रमार्जेन्ति अन्ये स्कन्धं प्रमार्जेन्ति अन्ये बाहुं प्रमार्जेन्ति अन्ये सक्थिं प्रमार्जेन्ति अन्ये बालधिं प्रमार्जेन्ति अन्ये पादानि परिमर्दयन्ति अन्ये मधुघृतानि आलोपानि मुखे अल्लीयन्ति अन्ये नानाप्रकाराणि खाद्यकानि अल्लीयन्ति अन्ये उक्कारिकाणि अल्लीयन्ति अन्ये मोदकानि अल्लीयन्ति सुवर्णरूप्यमयेहि भाजनेहि रत्नविचित्रेहि राजारहाणि पानानि अल्लीयन्ति न च कण्ठक आहारं करोति । बोधिसत्वस्य शोकेन अनाहारो च कण्ठको कालगतो बोधिसत्वमनु[163b]स्मरन्तो ॥ तस्य कालगतस्य राज्ञा शुद्धोदनेन महता राजानुभावेन शरीरपूजा कृता ॥ समनन्तरकालगतो च त्रायस्त्रिंशेहि उपपन्नो शिखण्डिस्य देवपुत्रस्य पुत्रत्वमभ्युपगतो कण्ठको नाम देवपुत्रो महर्द्धिको महानुभावो अन्येषां पूर्वोपपन्नानां देवसहस्राणां देवपुत्राणां दिव्येहि दशहि स्थानेहि अभिभवति । तद्यथा दिव्येनायुषा दिव्येन वर्णेन दिव्येन सुखेन दिव्येन ऐश्वर्येण दिव्येन परिवारेण दिव्येहि च रूपेहि शब्देहि गन्धेहि रसेहि दिव्येहि च स्पर्शेहि ॥

यदा भगवां प्रवृत्तवरधर्मचक्रो वैशालिकमासनसंजातो तदायुष्मता महामौद्गल्यायनेन देवेषु चारिकां चरमाणेन कण्ठको देवपुत्रो दृष्टो दृष्ट्वा च पुनः गाथया अध्यभाषे ॥

1[1]. B °sattva sama° C °kâlam açrû° B °lam açrûṇi° C °vartiayati | . — 1[2]. B °rikâ vaḥ aṃ° C °rikâ va aṃçukehi dukulehi patrorṇehi mahârahehi râjarha vastre° B °patrolehi ca mahârahehi râ° °strehi kanthakasya° BC °nye açruṇi pramârjenti | anye çî° B °grîve pra° C °grîvaṃ pramârjeti anye prishṭiṃ pramarjeti anye skandhaṃ pramârjeti | anye bâ° B °prishṭe pra° °adhaṃ pramârjenti | anye bâ° B °nye baladhiṃ° BC °rdayanti | anye ma° B °dhumakshitâni laṃpâni mukhe alliyanti | anye nâ° C °kshitâni laṃpâṇi mukhe alliyanti | na ca kanthaka âhâraṃ karoti | anye nânâprakârâṇi khâdyakâni alliyanti | anye ukkârakâ vi alliyanti | anye mo° B °ijakâni alliyanti | anye u° °dakâni alliyanti | su° C °modakâni alliyanti | anye suvarṇamayâni rûpya° B °râjârarhâṇi pâṇâni alliyanti | na ca°.

8. B °kena âhâ° C °hârâ ca kantha° °satvo paçyanto | . — 9. C °gatasya râjño çu° B °ddhodanena ma° C °mahâtâ râjâ° °pûjâṃ kritâ | . — 10. B samantarakâragato° BC °he ca trayastriṃ° C °ṇṇpâṃ pû° BC °rvopapannâṃ deva(C °vaputro)saha° C °daçehi sthâ.

13. C °sâreṇa divyehi rûpehi divyehi çabdehi divyehi gandhehi divyehi rasehi divyehi sparçehi | .

16. C yadâ ca bha° °cakra vai° BC °sâriko çâsa° B °jâto | tadâ° C °jâtaṃ | tadâ âyushmato mahâ° C °punar gâthâm abhâshe | B °gâthayâ a°.

चन्द्रो यथा पंचदशीं नक्षत्रपरिवारितो ।
ओभासेति दिशां सर्वा तारका विगता नभा ॥
तथोपमामिदं वेश्म दिव्यं देवपुरे तव ।
प्रज्वाल्यमानो वर्णेन आदित्यो व विरोचसि ॥
मुसारगल्लमुक्ताहि मणिलोहितकाहि च ।
चित्रा सुसंस्कृता भूमि न चात्रोद्वायते रजः ॥
वैडूर्यस्य सुवर्णस्य स्फाटिकस्य रूपियस्य च ।
कूटागारशुभाख्याना प्रासादा ते मनोरमा ॥
प्रासादानां च अविदूरे पुष्करिण्यो सुनिर्मिता ।
वैडूर्यफलकसोपाना सुवर्णवालिकसंस्तृता ॥
तासां च तीरेषु द्रुमा सुजाता
महा महान्तं विटपं समुद्गता ।
अभ्युद्गता ब्रह्मपुरं च अम्बराद्
वातेरिता सर्वदिशा प्रवान्ति ॥
तेषां च तीरेषु द्रुमा सुजाता
महा महान्तं विटपं समुद्गता ।
संपुष्पिता भान्ति दिशा चतस्रो
द्विजेहि घुष्टा रुचिरस्वरेहि ॥
संछन्ना पुण्डरीकेहि पद्मेहि उत्पलेहि च ।
नानावर्णेहि पुष्पेहि वान्ति सर्वदिशो दिशो ॥
एकमेकस्मिं तूर्यस्मिं षष्टि नृत्यन्ति अप्सरा ।

1. BC °daçiṃ naksha° C °kshatrâparivâro o° B °rito ob̄hâ°. — 2. B °seti | di° C °diçâ sa° BC °viyatinabhâ tatho°. — 3. B °pamaṁ veçma° C °daṁ vaçma° BC °puraṁ tave | . — 4. BC prajvâlyamânâ varṇṇe° C °dityo ca vi° B °tyo ca vi°. — 5. C musâgalva° kâni ca | B °kâṇi ca | .

6. C °bhûmi câtra udvayate râjo vai° B °trodvayate râjaḥ vai°. — 7. B °ṭikâ rû° C °rûpiyâ ca. — 8. C kuṭâ ° çubhasthomâṁ prasâdâ mano° B °sthânâṁ prasâdâto mano°. — 9. C °nâṁ câbhidû° BC °pushkiriṇyâ su° C °rmitâḥ | . — 10. C °phalakhaṁ° BC °pânâni su° C °vârikasaṁ° B °stṛtâ tâsâṁ ca tî°.

11. B °jâtâ mahânta viṭa° C °jâtâ mahantâ vitataṁ samu°. — 13. BC °pure ca a° B °mbarât vâte°. — 15. B °jâto mahâ mahântaṁ vi° C °jâtâ mahântâ vitataṁ samudgatâḥ.

17. C °shpitâ bhavanti di° C °catasro | dvi° B °catasro dvi° (?) BC °ghushṭo ruci°. — 19. BC °nnâ padmapuṇḍa° C °ṇḍalikehi kusumehi u° B °rîkehi sukumehi u° BC °tpalehi ca ‖ . — 20. B °rvadiçe ekame°.

21. C ekaṁ ekasmiṁ târyyasmiṁ shashṭhiṁ nṛi° B °kasmiṁ bhûryasmiṁ shashṭiṁ nṛi°.

तासां च नृत्यमानानां दिव्यकन्यान कानने ।
दिव्यो निश्चरते शब्दो दिव्यकन्यानगो यथा ॥
सुवर्णपादे पर्यंके निर्मिते रत्नामये ।
संस्तृते सुविसृष्टे च सर्वकायाश्च मोदसि ॥
सुवर्णपादे पर्यंके निर्मिते रत्नामये ।
प्रेक्षमाणो दिशा सर्वा ब्रह्मा व उपशोभसि ॥
तस्मिं निषण्णं .... पर्यंके तूलिकास्तृते ।
अलंकृता देवकन्या वीजन्ति चा[164ª]मरेहि ते ॥
तवमेते अप्सरसंघा हेमजाला अलंकृता ।
बाहुं विकीर्य नृत्यन्ति गायन्ति च सुवादितं ॥
काचित्तत्र उपगायन्ति उपवादेन्ति अप्सरा ।
काचिच्च उपनृत्यन्ति संगीतस्मिं सुवादिते ॥
काचित्ते रुचिरं शब्दं मुंचन्त्यङ्गेहि सर्वशो ।
कासांचित्सर्वरोमेहि वान्ति गन्धा अमानुषा ॥
तं देवकन्याहि उपेतरूपं
निवेशनं ते पदुमुत्तरातहि ।
सुवर्णकंचुककृतभूतिमेतं
भवनमहो अंकृतमप्सरोहि ॥
किं त्वं कर्म करित्वान पूर्वं अन्यासु जातिषु ।
केन कुशलमूलेन चायस्त्रिंशोपपन्नव ॥
किं त्वं कर्म करित्वान पूर्वे मानुष्यके भवे ।

1. C °nāṁ devakaññyā° B °syakaññyā ° nane di°. — 2. C divyā niçca° B divyāç cara° BC °jakaññyā°. — 3. C °paryyaṁkanirmite ratnāmate | . — 4. B °suvipraśiṣṭhe vā sarvā ca viyamādani | C °sliṣṭe vā sarva ca viyamo°. — 5. C °paryyake°.

6. C °mānā diçā° B °māṇā diçā° C °sarve lira° BC °hmā ca u° B °çobhite | . — 7. BC °niṣaṇṇo paryaṁko(C °ryyaṁke) tū° C °stṛitam alaṁ° B °te alaṁ°. — 8. BC °kṛitā de° C °vakaññyā vī ° rehi cāmarehi ca tvam ete°. — 9. BC tvam ete° C °lā abhujjālā alaṁ°. — 10. BC °dita | .

11. C °i tatropagā ° vāyanti a° B °vādanti a°. — 12. C kācid upa° BC °nā ugī° C °gītesmiṁ B °ditā | . — 13. C °rucirançabde sucyatyaṁ | gahi sa° B °muñcatyaṅge°. — 15. B C °devakaññyā ° rūpā niva°.

17. C °kaṁcūkihi bhūtam etaṁ° B °bhūtam etaṁ bhavāṁ ogholaṁ° C °bhavāṁ utha-kṛitaṁ me apsa° B °tam sa apsa°. — 19. C °pūrve a°. — 20. C °mūlena tāpā° B °mūlena karmanā trayastriṁçopapadyatha kiṁ tvaṁ°.

21. B °ri pūrve | mānuṣye bhave | .

केन कुशलमूलेन विपाकमनुभोसिमं ॥
केन त्वया वर्णं लब्धो आयुर्वंशो यशो बलं ।
ऋद्धिं च परिवारं च अनुभोषि अमानुषं ॥
किं त्वया कल्याणं कर्म कारित्वा अन्यासु जातिषु ।
केन कुशलकर्मेण विपाकमनुभोसिमं ॥
केन ते ब्रह्मचर्येण संयमेन दमेन च ।
केन कुशलकर्मेण स्वर्गकायस्मि मोदसि ॥
केनापि एवं ज्वलितो अनुभावो वर्णो च ते ।
केन कुशलकर्मेण सर्वा दिशां प्रभाससि ।
पृच्छितो देवपुत्र ब्रूहि कस्य कर्मस्यिदं फलं ॥
सो देवपुत्रो आत्मना मौद्गल्यायनेन पृच्छितो ।
प्रश्नं पृष्टो वियाकर्षि स्थविरस्येति मे श्रुतं ॥
अहं कपिलवस्तुस्मिं शाक्यानां नगरोत्तमे ।
अट्टालकोट्टरचिते दृढप्राकारतोरणे ॥
गोधामुखनिर्यूहदृढार्गलकपाटतोरणे ।
हयगजरथाचीर्णे आवासि शाक्यश्रेष्ठिनो ॥
आकीर्णजनमनुष्ये नगरे साधुनिर्मिते ।
शुद्धोदनस्य पुत्रस्य सहजो आसि कण्ठको ॥
यदा चाभिनिष्क्रमेसि प्रव्रज्याये नरोत्तमो ।
तदा स वचनमाह वल्गुसम्यग्गिरां ब्रवीत् ॥

1. BC °nubhâsiyaṁ | . — 2. C °labdhaṁ | âyu varṇṇo yaço baraṁ | . — 3. B ṛiddhi ca pa° BC °vâro ca a° B °nubhâsi°. — 4. B °lyâṇa karma° C °lyâṇe karmakari pûrve anya° B °tvâna pûrve anyâ°. — 5. C kuça° B °çalakarmeṣu vi° bhosi mâṁ | C °bhosi mâṁ.

6. BC tena te bra°. — 7. C °kâyesmiṁ mo°. — 8. BC kenâsi e° C °litânubhâvâ va-rṇṇo° B °lito nubhâ° BC °rṇṇo ca te sarvâ(B °rvâṁ) diçâṁ°. — 9. BC °bhâsati | . — 10. C °putro kruhi° B °tra kruhi° BC °rmasyedaṁ°.

11. C °putra â° B °tmano maudgalyâyena pṛi°. — 12. BC °shṭo vyâka ṛishi° C °rasya iti°. — 13. C °çâkânâṁ naro° B °kyânâṁ ca naro°. — 14. B aṭṭalakhoṭakelacille dṛi° C aṭṭâlakhoṭakaroci°. — 15. C gûdhâmu° BC °mukha ni° C °dhâgde kapâtato° B °ṇe raṇya | .

16. C ramyuhaya° BC °thâmotrṇṇo âvâso çâkyaçreshṭhi(C °shṭinya | . — 17. B °ṇṇa bahujanamanushya naga° C °shyeṇa naga° BC °rmite ca°. — 18. BC °jo haṁ kaṇṭha-(B °ṇṭha)ko âsi | . — 19. C yathâ câ ° shkramasi pra° B °shkramati pra° BC °ttame | . — 20. BC °dâ sa jyâmja âha(B °ha || ) ha° B °ggiri bra° C °ggiri bra°.

तां सह गिरां श्रुणित्वा हर्षजातेन चेतसा
वेगजातो नमस्यन्तो वन्दिदुं पुरुषोत्तमं ॥
परेषां विषयं गत्वा अस्तमिते दिवाकरे ।
मम छन्दकं च विहाय अनवेक्षो स प्रक्रमे ॥
तस्य तासमस्या चरणां जिह्वाया परिलेहिय ।
रोदमानो उदीरेय गच्छन्तं पुरुषोत्तमं ॥
तस्यैव अदर्शनेन शाक्यपुत्रस्य श्रीमतो ।
शुरआबाध उत्पद्येतू ततो कालं करो[164b]म्यहं ॥
तस्यैवमनुभावेन विमानमावसाम्यहं ।
नारीगणसमाकीर्णं कूटागारं वरुत्तमं ॥
सचेद् भदन्ते गच्छासि शाक्यसिंहस्य सान्तिके ।
कण्ठको वचनं आह वदेसि पुरुषोत्तमं ॥
एषो चाहमपि आमंसे वन्दितुं पुरुषोत्तमं ।
साधु खु दर्शनं भोति तादृशानां महर्षिणां ॥
तेन मया इदं लब्धं आयुवर्णयशोबलं ।
ऋद्धिं च परिवारं च अनुभोमि अमानुषं ॥
तेन मे ब्रह्मचर्येण संयमेन दमेन च ।
अयं मे तादृशी ऋद्धी अप्रतिकान्ता अमानुषी ॥
तं कर्म कुशलं कृत्वा यत्तं उपचितं पुरा ।
तेन कुशलकर्मेण विपाकमनुभवाम्यहं ॥
भोगा च मे उत्पद्येन्तु ये केचित् मनसि प्रिया ।
देवा च मे नमस्यन्ति तेषां च उपचितो अहं ॥

1. C °girā çru°. — 2. C °ato vandehaṃ pu° B °vadehaṃ pu°. — 3. BC °dgatasmiṃ°. — 4. C °kaṃ ca avahāya anavakkho sa° B °kaṃ avahāya ana°. — 5. B °hṛdayaṃ palilekhiya | C °hṛdayaṃ parilekhiya |.

6. C °yaṃ gadgagaṃ gaccha°. — 7. C tasyaivaṃ ca a° B °mato |. — 8. BC khuro ā° C °bādha u°. — 9. C °mānam eva sā° B °mānam avasā°. — 10. C nārīgaṇasamākīrṇaṃ kūṭā°.

12. C °demi purushottamam | sādhu°. — 13. B °pi āmaṃsa vandi°. — 14. C °dhu sha darçanaṃ bhāti tādṛ° B °naṃ bhoati tādṛ°. — 15. C °labdhaṃ yava° B °yaçovaraṃ |.

16. C ṛddhiṃ° B ṛiddhi ca parivāro ca anu° C °vāreṇa anu°. — 17. C °yamena ayaṃ°. — 18. C ayaṃ te tā° C °ṛiddhiṃ pratikāntā amānuṣiṃ B °krānta amānushiṃ |.

21. C °upadyetuḥ ye° B °dyetu ye° BC °manasāṃ priyaṃ |. — 22. C °ahāṃ upavito ahaṃ | B °ca upacitāṃ ahaṃ |.

तस्मिं चित्तं प्रसादेय दक्षिणीयेषु तादृशं ।
पश्यति रत्नभूतेन कर्म उपचितं शुभं ॥

इति श्रीमहावस्तुअवदानकथायां कण्ठकस्य व्याकरणं समाप्तं ॥

शुद्धावासेहि देवेहि तहिं अरण्यायतने काषायप्रावृतो लुब्धको निर्मितो । सो दानि बोधिसत्वेन दृष्टो ॥

तत्राद्राक्षीदरण्यस्मिं लुब्धकं काषायप्रावृतं ।
सो तत्र उपसंक्रम्य इदं वचनमब्रवीत् ॥
इमां काशिकां गृह्णित्वा देहि काषायं त्वं मम ।
सो तां काशिकां गृहीत्वा देति काषायं लुब्धको ॥
ततः काषायं गृह्णित्वा तुष्टो आत्तमनो अभूत् ।
सो पथो मे वरो धीरो उत्तमार्थस्य प्रार्थये त्ति ॥

बोधिसत्वो धर्मारण्यं वसिष्ठस्य ऋषिस्य आश्रमपदं प्रविष्टः ॥ वसिष्ठो पि ऋषि बोधिसत्वं दृष्ट्वा विस्मितो को अयं भविष्यति मानुषो वा देवो वा शक्रो वा ब्रह्मा वा यस्य कायस्य प्रभाये सर्वमिदं तपोवनमोभासितं ॥ सर्वे ते बटुका बोधिसत्वं दृष्ट्वा त्वरितत्वरिता स्वकस्वकानि पर्णकूटीनि प्रधाविता नानाप्रकाराणि फलानि गृह्य पानीयं च बोधिसत्वमुपसंक्रान्ता ॥

तत्र दृष्टं महाप्राज्ञं तापसं तपतां वरं ।
वसिष्ठं नाम गोत्रेण ददर्श च जगाम च ॥
ताम्रधूमार्णजटं ज्वालमिव अदर्शि तं ।

1. C °kshîṇeshu°. — 2. C paçyanti ratnacchatrabhûtena karmopacitaṁ ca° B °karuṇâṁ upa°. — 3. C °yâṁ kaṅṭha° B °yâṁ kanthakasya°. — 5¹. B °vâsehi de° C °vehi aranyâ° B °shâyaprâvṛti ° ka nimito |.
6. BC °kshîd aranya(C °nye)smiṁ lubdhako kâ° B °vṛito so ta° C °vṛitaḥ so taṁ°. — 7. BC so ta (C °taṁ) tatropasaṁ° C °ida va°. — 8. BC °çika gṛi° B °gṛihnitvâ C °gṛihîtvâna de° BC °shâye tvaṁ°. — 9. BC °shâyam lu°. — 10. B °gṛihnitvâ C °gṛihîtvâ tu ° bhû | B °bhûte pathe°.
11. B pathena varo dhîro° C pathe me varo dhî° mâyeti prârthayeti |. — 12¹. B °dhamâra° C °shṭhasya ṛishi ° shṭo |. — 12². C vaçishṭo pi ṛishiḥ bo° B °ṛishiṁ bo° shyati | mâ° C °sho ca | de° kro vâ devo vâ bra° C °sarve imaṁ° B °sidaṁ sarva°. — 14. B °ṭukâ bodhi dṛi° °ritatvaritâ svaka° C °tvaritatvaritaṁ svaka° hya tânipaṁ ca bo° BC °krânto |.
17. C °tâpasaṁ tapatâm varaṁ |. — 18. BC vaçishṭaṁ nâ° B °rçana jagâya ca |.
19. BC °mâra(C °ra)najaṭaṁ(B °ṇadbhaṭaṁ) jâlaṁyam akarshi taṁ |.

युक्तो यं सर्वभूतानां त्रिलोकपतिरीश्वरः ॥
प्रभया पूरयन्तीव स्वशरीरसमुत्थया ।
तपोवनमिदं सर्वं उदयन्निव भास्करो ॥
अशीतिव्यंजनोपेतो द्वात्रिंशद्वरलक्षणः ।
सनत्कुमारप्रतिमो कुमारो द्युतिमानयं ॥
सर्वलक्षणसंपन्नं सर्वभूतमनोहरं ।
कुमारं परिपृच्छेयं महर्षिं उपगम्य तं ॥
गन्धर्वशशिसंकाश देवगर्भोपम युवा ।
कस्य त्वं किंनिमित्तं वा तपोवनमुपागतो ॥
सत्यानुपरिवर्तिन्या सर्वभूतात्मया गिरा ।
श्लक्ष्णया प्रियवादिन्या बभाषे स नृपात्मजः ॥
इक्ष्वाकुवंशप्रभवः शुद्धोदननृपात्मजः ।
विहाय पृथिवीं राज्यं उज्झित्वा मोक्षमाश्रितः ॥
लोकन्तु बद्धमिदं दुःखैर्दृष्ट्वैवं समभिद्रुतं ।
मोक्षार्थमभिनिष्क्रान्तो जातिव्याधिजरादिभिः ॥
यत्र सर्वं न भवते यत्र सर्वं निरुध्यते ।
यत्रोपशाम्यति सर्वं तत्पदं प्रार्थयाम्यहं ॥
एवमुक्ते महाप्राज्ञो महात्मा सत्यवागृषिः ।
उवाच वदतां श्रेष्ठं शाक्यराजकुलोदितं ॥
ईदृशेन हि वृत्तेन वृत्या लक्षणसंपदा ।
प्रज्ञया च महाभाग न किंचिद्यं न प्रापये ॥

1. B °lokapratim īçva° C °lokāpatim īçvaro ‖. — 2. B °pūrayetye°. — 3. C °sarva udayanniva bhāskaraḥ ‖ B °dayanneva bhāskare ‖. — 4. C °janaṃpeto dvā° lakṣaṇa ‖. — 5. C °pratimā ca ku° BC °māro dyu°.

7. C °rcheya maha° °myatāṃ ‖. — 8. C °saṃkāçaṃ de° B °saṃkāço de° °pamaṃ yu° C °pamaṃ yuvān ‖. — 10. BC °tātmajāṃ girāṃ ‖.

11. C °kṣṇayāni priyaṃvādi°. — 12. B °pravabhaḥ çu° C °prabhavo çu°. — 13. B °pṛthivī rā° C °sthitā ‖. — 14. C lokānto ba° B lokanto ba° °r duḥkhaṃ dṛ° C °r duḥkhaiḥ dṛṣhṭevaṃ sa°. — 15. BC °shkrāntaṃ jā°.

16. C yatra sarvena bhu° B °vate tatra yatra° C °tra sarva niru° B °niruddhyate ‖. — 18. C evaṃm ukte°. — 19. BC °çreshṭaṃ çā° °kulāditaṃ ‖. — 20. C idṛ° BC °hi vṛttena(C °ttehi) vṛtyā la°.

21. C prajñepāra mahābhego na ki° B °hābhāge na ki° BC °ñcid yatra prā° B °prāpayo ‖.

बोधिसत्त्वो [165ᵇ] इदानि वैशालिं गतो आराडं कालामं अल्लीनो । निर्विंदित्वा नायं मार्गो नैर्याणिको ततो राजगृहं गतो ॥

गत्वा च सो राजगृहं मागधानां गिरिव्रजे ।
पिण्डाये अभिसरेसि आकीर्णवरलक्षणः ॥
तमद्दशासि प्रासादात् श्रेणियो मगधाधिपः ।
प्रसन्नचित्तो दृष्ट्वा च अमात्यां इदमब्रवीत् ॥
इमं भवन्तो पश्यन्तु आकीर्णवरलक्षणं ।
आरोहिय च सम्पन्नं युगमात्रं च प्रेक्षति ॥
उत्क्षिप्तचक्षुर्मेधावी नायमूनकुलोदितो ।
राजदूतानुबन्धन्तु कहिं वासमुपेष्यति ॥
ततो तं संदिशिता दूता पृष्ठतो अनुबन्धियु ।
गमिष्यति कहिं भिक्षुः कहिं वासमुपेष्यति ॥
पिण्डाये चारं चरित्वान निष्क्रमे नगरान्मुनिः ।
पाण्डवं अभिसरेसि अत्र वासो भविष्यति ॥
ज्ञात्वा च वासोपगतं एको दूतो उपाविशत् ।
अपरो क्षिप्रमागम्य राज्ञो आरोचये तदा ॥
एष भिक्षुः महाराज पाण्डवस्मिं पुरस्ततः ।
निषण्णो वृक्षमूलस्मिं एकाग्रो सुसमाहितः ॥
द्वीपीव सुतनुं चित्तं व्याघ्रं वा गिरिसानुगं ।
सिंहं वा गिरिदुर्गस्मिं महासिंहो मृगाधिपः ॥
ततो च राजा त्वरमाणो अमात्यां अध्यभाषति ।

1. B °satra dāni vai °ḍaṃ kālāmaṃ | a° BC °allīno ni°. — 2. C nirviṇitvā nāyaṃ mārgo nairyāṇiko ti | tato° B °nairyāṇiko | tato° C °gataḥ B °gato gatvā°. — 3. BC °rājagṛi° C °mādhakānāṃ gi° B °dhānaṃ | gi° BC °hvaye pi°. — 4. C piṇḍāya abhi° BC °bhisaraṃ°. — 5. BC °çāsi prāsādāt seniko maga° C °dhipā.

8. Omis dans C. B ārohe ca saṃpannaṃ°. — 9. C °kshu medhāvī nāyaṃ unakulohitaḥ | B °nāye ū(?)nakulohito | . — 10. C °rājadūto nu° BC °sam upaçyati | .

11. C tato sa prahiṣṭato dūta saṃdiṣṭo anu° B tato sau saṃdiçato dūto pṛi°. — 12. B °bhikshuḥ ka° BC °çayati | . — 13. C piṇḍacāraṃ cari ° shkrame nagarān munih | . — 14. C °dhyaṃ | . — 15. C °upāviçat | .

16. C °rocaye tadā | . — 17. C esho bhikshur mahā ° rakṣitaḥ | B °sitaḥ ni°. — 18. BC °sharṇṇo vṛi° C °mūlasmiṃ° BC °ekāgre sam°. — 19. B dīpivāṃ su° C dvīpivāṃ su°. — 20. C °durgasmiṃ°.

21. C °rājā tvara° BC °mātyām adhya°.

क्षिप्रं पन्थं विशोधेथ द्रक्ष्याम पुरुषोत्तमं ॥
ततो च ते राजदूता महामात्रा यशस्विनो ।
क्षिप्रं पन्थं विशोधेन्सुः स्वयं राजा द्रक्ष्यति ॥
ततो च ते राजदूता महामात्रा यशस्विनो ।
गत्वा राज्ञो निवेदेन्सुः शुद्धो ते देव पाण्डवो ॥
ततो च निर्यासि राजा सेना च चतुरंगिनी ।
मित्रामात्यपरिवृतो ज्ञातिसंघपुरस्कृतो ॥
यानातो ओतरित्वान पदसा उपसंक्रमे ।
सारायणीं कथां कृत्वा एकमन्ते उपाविशि ॥
निषद्य प्रमुखो राजा बोधिसत्वमभ्यभाषति ।
उदग्रो त्वमसि राज्ञः अश्वारोही च सैनको ॥
ददामि भोगां भुंजाहि जातीं चाख्याहि पृच्छितो ॥

बोधिसत्व आह ॥

ऋजुजनपदो राज हिमवन्तस्य पार्श्वतः ।
धनवीर्येण सम्पन्नो कोशलेषु निवासितो ।
आदित्यो नाम गोत्रेण शाकियो नाम जातिये ॥
ततो कुला प्रव्रजितो हं न कामां अभिप्रार्थये ।
प्रहाणाय गमिष्यामि वेश्मं मुक्त्वा रत्नामयं ॥
तं खो तथा भोतु सुखाहि निर्वृतिं
बोधिं च प्राप्तो पुनरागमेसि ।

1. C *prañi pañthe vi* B *drakshâma purushuttamaḥ | . — 2. C tato va te* B *râjâdû* BC *dûto ma* B *svine | . — 3. B *çodhetaḥ sva * bhaveti | . — 4. BC tato ca rà* B *dûto ca ma* C *dûdâto ma * svinaḥ ‖ B *svine | . — 5. B *râjâ nivedensuḥ* C *nivedītsuḥ çu* BC *çuddhâ te* C *pâṇḍulo | B *vâyo | .

6. B *niryati senâ* C *ryâti senâ ca caturaṅgiṇî BC *ṇi mitrâ*. — 7. C *vṛitaḥ | jñâ* B *vṛita | jñâ * skṛitya yânâ*. — 8. C *ritvâna padasâm upa* B *tvâna | pa * krame sâ*. — 9. B *yaṇi kathâm* C *yaṇîyaṃ kathâṃ* B *upaviçi ni* C *upaviçitvâ ni*. — 10. C nishidya pra*.

11. C ugra tva * râjño açvâhaivo sainko | . — 12. C *bhuñjehi jâtiṃ câ*. — 13. C *satvo âha ‖ . — 14. B *padâ râjâ hi* C *râjâ hi*. — 15. C *ryena sa * vâçino | B *vâsino | .

16. C âditya nâma*. — 17. C tato kumârapra* BC *jito hani naniñ râja kâmâṃ abhiprârthayâmi | . — 18. BC *shyâmi munmajyaṃ ra*. — 19. BC taṃ khu ta* C *apriçehi ni* BC *tiṃ | bodhiṃ ca vira saṃprâpto bodhiprâpto bodhi(C *dhiṃ) puna* C *gamasi | .

मह्यं पि ध[166a]र्मं कथयेसि गौतम
यमहं श्रुत्वान व्रजेय स्वर्गंति ॥

बोधिसत्व आह ॥

तं खो महाराज तथा भविष्यति
बोधिं स्पृशिष्यामि न मे त्र संशयो ।
प्राप्तो च बोधिं पुनरागमिष्यं
धर्मं च ते देशयिष्यं प्रतिशृणोमीति ॥

बोधिसत्व उद्रकं रामपुत्रं आलीनो नायं मार्गो निर्याणिको ति । ततो पक्रम्य गयां गतो ॥ गयाशीर्षे पर्वते तिस्रो उपमा प्रतिभायेन्सुः ॥ ततो उरुविल्वां गतो पिण्डाय प्रविष्टो ॥ काश्यपो पुरतो उरुविल्वां पिण्डाये प्रविष्टो ॥

चीवरं विगृहित्वा गृणीथ एकाग्रमानसा सर्वे ।
यथा पुरिमजिनसंगमो यशस्विनो बोधिसत्वस्य ॥
प्रव्रज्यामभ्युपेत्वा आराडउद्रकं वने अपरितुष्टो ।
प्रक्रमि दिशं प्रदक्षिणां पुरिमजिननिसेवितं देशं ॥
पिण्डाये प्रतिचरन्तो उरुविल्वां प्राप्तो कनकनिष्कनिभो ।
ग्रामिकघरं आगमि नरनारिसमाकुलं काले ॥
अथ ग्रामिकस्य धीता नामेन सुजाता पण्डिता कुलीना ।
तं दृष्ट्वा राजपुत्रं प्रकम्पिता प्रीतिवेगेन ॥
अश्रूणि प्रवर्तयन्ति पुरतो स्थिता हि सप्रतिस्सगौरवा ।

1. B °dharma katha° C °dharma kârayasi ‖ gauttamaḥ yam a° B °tamaḥ yam a° tvâna gaccheya sva°. — 3. C °satvo âha ‖ . — 5. BC taṁ khu ma° °shyâmi | na mamâtra saṁ° C °çayâ | B °çayâ prâ°.
6. C °dharma deça° B °dharmaṁ te de° °ṇomi te | . — 8¹. BC °satvaṁ udrakaṁ râmaputra° C °putrakaṁ alî° °ryâṇikâ ti | B °ko ti tato°. — 8². C °yâṁ tato gayâ° B °gato gayâ°. — 9¹. C °çîrshaparva° °aupamâ pratibhâyetsuḥ | B °yetsuḥ tato°. — 9². C °urupilvâṁ° BC °gatâyâṁ piṇḍâya(C °ye) pravishṭo kâçya°. — 10. BC °vilvâ piṇḍâya(C °ya) pra°.
11. B bhîvaraṇaṁ° C bhîmusaraṁ vi° BC °gramanasâ° C °sarva yathâ° B °rve yathâ°. — 12. C °thâ pûri° BC °majana° C °svinaḥ bo° BC °tvasya pra°. — 13. BC °jyâye bhyu° C °râḍa ugrakâ dane tushṭo pra° B °drakâ vane a° °shṭo pra°. — 14. C °diçâḥ ‖ pradakshiṇaṁ pu° B °diçâ pradakshiṇaṁ pu° BC °rimajana °taṁ dinaṁ pi°. — 15. BC °nto | uruvilvâṁ kanakanishka(C °nakavimba)nibho grâ°.
16. B °ghâram a° C °kaṭâram upâ° B °nârisamâkulaṁ | kâle ‖ C °kulakâle | . — 17. BC °ṇḍitâ kuladhitâ | . — 18. BC °gena açruṇi°. — 19. BC açruṇi pra° °to sthitehi sâ sa(C °sva)gaurava â°.

आलपति राजपुत्रं मा त्वं निवर्तयस्व नरवर ॥
चन्द्रप्रतिपूर्णवदन मा मा निवसन्तु सर्वतो निगमा ।
अतृप्ता हि मम नयना तव वीर निरीक्षमाणाये ॥
किं तु खु सुचारुविक्रम सुरूपलक्षण वराभरणधारि ।
प्रक्रमसि अतृप्ताया सर्वान्धकृतो यं मे हृदयं ॥
सा शृणति देवतानां गिरां नभगतानां च भाषन्तां ।
एष खलु कपिलवस्तुतो शुद्धोदनराजवरपुत्रो ॥
सा तस्य दर्शनतृषा निर्धाविता गुणशता कीर्तयति ।
वरपुरुष विप्रहीनो स्वबन्धुजनस्य कथं चासी ॥
प्रमदागणसंपरिवृता रुदन्ति अनुगच्छन्ति कनकवर्णा ।
परिदेवते च करुणं अटविवनमुखे प्रपद्यन्तं ॥
सुखिता वनेषु सकुना मृगा च वनदेवा वनराजा च ।
ये राजहंसगतिकं वीक्षन्ति वनेचरं वीरं ॥
सुकुमारपुष्पगात्रं कमलदलनिभेहि पादतलेहि ।
कथमाक्रमसि वसुधां तृणकुशशरसंस्तृतविदुर्गां ॥
मृष्टान्नरससमुदितो नानारसप्रवरबृंहितशरीरो ।
मूलफलपत्रभक्षो भेष्यसि कथं निर्झरवनान्ते ॥
कनकमयदन्त[166b]पादे वरास्तरे कुसुमसंकुले शयने ।
सुपियान कथं शयिष्यसि तृणकुशशरसंस्तृततलेषु ॥
श्रुणियान वरेन्द्र भवने पटहवीणापुष्करनिनादसंगीतिं ।

1. B âlepati râ° C âsapati râ° BC °traṁ niva° B °rttaye(?)dya ravarâ candra° C °varâ candra°. — 2. BC °rṇṇavadanmânâ nitya° B °nigama âtṛ° C °nigamo atṛ°. — 3. BC °hi me na° C °mânâye ‖ . — 4. B ko nu khu° C kâ nu khu sucârumânâye vikrama surupala° cabhâra° BC °dhâri prakra°. — 5. B °masim atṛ° BC °ptâyaṁ sa° C °sarvalândhavâd ayaṁ me° B °ndhakadhâyaṁ me hṛdayaṁ sâ çru° C °dayaṁ mâ çru°.

6. C mâ çruṇati de° tâṁ nacâṇâṁ bahhâsekâṁ ‖ B °tâṁ nagarâṇâṁ ca bhâ°. — 7. B sahâṁ kalakapilava° C sahâṁ kapila° BC °danasya râ° C °râjasya tava pu°. — 8. BC °çatâni kîrttayati vara°. — 9. BC °hînabandhu° C °katham âsî pra° B °âsi pra°. — 10. BC pramadagaṇa° C °vṛtâh ru° BC °dantim anugacchanti | ka °ruṇaṁ pa°.

11. C °dyante sakhi° B °ntaṁ sakhi°. — 12. C °shu saṁku° BC °ca vanada(B °dai)vateshu mṛ° jâca ye râ°. — 13. BC °râjavitu(C °kho)gati kshati vane°. — 14. C sukumna phu° C °pâdavadâtare°. — 15. B katham âkra° dhâṁ | tṛṇakuçaçaraṁ saṁ°.

16. B °nnarasamuditâṁ nâ° râre mûla°. — 17. B °trasaphalabhaksho bheshyati | katham° B °nânte kana°. — 18. B °ntashâde vacâsta° BC °stareṇa kusu°. — 19. C supiyâne ka° kuçaçayane saṁ° B °kuçaçayanaṁ°. — 20. C çrutiyâna° B °bhavanapaṭâhetripashka° C °ṭahe trinaika° gîti çru°.

निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा क्रौंचजीवंजीवगता पंच करोन्ति त्वा प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा कोयगता पंच करोन्ति त्वा प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा हंसगता पंच करोन्ति त्वा प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा चक्रगता पंच करोन्ति त्वा प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा पूर्णकुम्भगता पंच करोन्ति त्वा प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा कन्यागता पंच करोन्ति त्वा प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा द्वात्रिंशति काये महापुरुषलक्षणा ।
निःसंशयं महावीर अद्य जित्वा विरोचसि ॥

अथ खलु भिक्षवो बोधिसत्त्वो अभीतविक्रान्तं विक्रमन्तो अदीनविक्रान्तं विक्रमन्तो अलीनविक्रान्तं विक्रमन्तो दुष्प्रधर्षविक्रान्तं विक्रमन्तो सिंहविक्रान्तं विक्रमन्तो नागविक्रान्तं विक्रमन्तो ऋषभविक्रान्तं विक्रमन्तो हंसविक्रान्तं विक्रमन्तः अग्रोत्पादाये विक्रमन्तो ज्येष्ठोत्पादाय विक्रमन्तो श्रेष्ठोत्पादाय विक्रमन्तः पूर्वोत्पादाय विक्रमन्तो युगोत्पादाय विक्रमन्तो शत्रुदमनार्थाय विक्रमन्तो अपराजितत्वाय विक्रमन्तो आजानेयविक्रान्तं विक्रमन्तो महापुरुषविक्रान्तं विक्रमन्तो हितैषिचनम-

1. C °viro a ° si | yathâ krauñcaga° (C *remplace la* l. 2 *par la* l. 4, *la* l. 4 *par la* l. 8 *et la* l. 8 *par la* l. 2). — 4. C yathâ krauñcaga°. — 5. B °hîvî adya° C °viro a°. — 7. B °viro a° C °shyasi ‖ yathâ ji° (l. 2, *cf.* l. 1). — 8. BC yathâ vâyasgatâ°. — 9. B °viro a ° shyati ‖. — 11. B °viro a°. — 12. C °thâ kaññyâ°. — 13. B °viro a ° shyati | . — 14. C °çati kâ ° lakshânâ eah | B °kshaṇe | . — 15. C °vira adya buddho bhavishyasi ‖ B °virah prabhaṁ ji°.

16. C °khavah bo ° dînavikrântaṁ vikramantaṁ | alînavikrânto vikramanto ‖ dushpradharshyavikrânto vikramanto | siṁhavikrânto vikramanto | nâgavikramanto | rishabhavikrânto vikramanto | haṁsavikrânto vikramanto | agrotpâdâ vikrânto vikramanto jyeshṭhotpâdâ vikrânto vikramanto çreshṭhotpâdâ vikrânto vikramanto pûrvotpâdâ vikrânto vikramanto yugotpâdâ vikrânto vikramanto | çatrur damanârthâya vikrânto vikramanto | aparâjitâya vikrânto vikramanto | ajâneya vikrânto vikramanto | mahâpurushavikrânto vikrama-

कारीकरणताये महासंग्रामविजयाये अनुत्तरस्य अमृ[190b]तस्य हरणताये महाविक्रान्तो विक्रमन्तो येन बोधियष्टिस्तेनोपसंक्रमित्वा बोधियष्टिये अभ्यन्तराये समन्तभद्रं तृणसंस्तरं प्रज्ञपयित्वा बोधियष्टिं पुरिमजिनचित्रीकारेण त्रिष्कृत्वो प्रदक्षिणीकृत्वा निषीदि पर्यंकमाभुजित्वा ऋजुकायं प्रणिधाय प्रतिमुखं स्मृतिमुपस्थापयित्वा ऋजु प्राचीनाभिमुखो ॥

समनन्तरंनिषण्णो च पुनर्भिक्षवो बोधिसत्त्वो पंच संज्ञा प्रतिलभति ॥ कतमा पंच ॥ क्षेमसंज्ञा सुखसंज्ञा शुभसंज्ञा हितसंज्ञा अद्य याहं अनुत्तरां सम्यक्संबोधिमभिसंबुद्धिष्यामि ॥ समनन्तरंनिषण्ण च पुनर्भिक्षवो बोधिसत्त्वो इमां पंच संज्ञा प्रतिलभते ॥ अथ खलु भिक्षवः मारो पापीमां दुःखी दुर्मनो अन्तःशल्यपरिदाहजातो येन बोधियष्टिस्तेनोपसंक्रमित्वा बोधिसत्त्वस्य पुरतो स्थित्वा महागीतं विय गाये महावैलाक्षेपं विय प्रयच्छे न च तं बोधिसत्त्वं चित्रीकारेसि ॥ अथ खलु भिक्षवः मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाहजातो बोधिसत्त्वं संचूयमानो दशविधं महाऊहसितं ऊहसे ॥ कथं भिक्षवो मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाहजातो दशविधं महाऊहसितं ऊहसे ॥ महर्द्धिको खु महाश्रमण महानुभावो न मे श्रमण मोक्षसीति मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाहजातो बोधिसत्त्वं संचूयमानो महाऊहसितं ऊहसे ॥ म-

nto ‖ hitaiṣhiandhanakārikaraṇatāyaiḥ mahāsaṁgrāmavijayāyaiḥ anutta ° mṛitasya haraṇatāye mahāvikrānto vikramanto yena bodhiyashṭis teno° B °adinavikrānto vikranta sīhaṁ vikrāntaṁ vikramanto dashyadharmo vikrāntaṁ vikramanto siṁ ° nto nāgavikrā ° kramantaṁ ṛishabhavikrāntaṁ vikramanto haṁ ° kramantaḥ | agro ° trudanarthāya vikramanto apaṇ° purushavikrāntantaṁ vikramantaṁ ‖ hitaishiamandhakārivāraṇatāyair mahāsaṁgrā° C °mitvā bodhiyashṭīye abhya° B °draṁ tṛiṇasastaraṁ pra ° dhiyashṭipa° C °jinavicitrikālena tri° B °jinacitrikālena tri° C °ṛyaṅkam ābhuṁji ° khaṁ smṛityum upasthā° B °smṛityum upasthā° C °prāvānābhi° BC °kho sama°.

6¹. C °kshavaḥ bo° B °bhanti ka°. — 6². C katamāni pañca | tadyathā | kshe°. — 7. C °rāṁ saṁmya° BC °shyati | . — 8. BC °shalyā ca pu° C °kshavaḥ bodhisatva I°. — 9. BC °rmanā anta° C °çalyopari° BC °gītam vigāya(B °viya gāye) mahāvailākshe(C °ksha)pā viya praṇacche ° satvā citrikāresi ‖ .

11. C °kshavo mā° B °vaḥ māre pā° BC °ḥkhī durmanasya(C °syā)jāto aṁtaçalya° C °dhisatva saṁ° BC °saṁkshuyamāno° B °hāsahasi° C °taṁ ūhase | mahārddhi° (l. 15). — 13. B °syajāto a ° taṁ ūhase maha°. — 14. B °ani çramaṇa mahānu° C °ani çravaṇo mahānu° C °çravaṇo mokshasi iti | mā° B °siti | mā° BC °duḥkhadaurma(C °rma)nasya° B °hçalyo pari ° saṁkshuyamāno° BC °se | māro pāpīyāṁ(C °māṁ) duḥkhī daurma(C °ḥkhā daurma)nasyajāto bodhisatvaṁ saṁkshu(C °ksha)yamāno mahaçcā°.

16. BC °ani çravaṇa(B °ṇe) na me çramaṇa(C °çravaṇaṁ) mokshya(C °ksha)sīti | māro° C °duḥkhā daurmanasya ° hçalyo pari° B °hçalyā pari° C °ghajātaḥ bo° B °saṁkshuya° C °saṁkshayamā°.

ईशाख्यो स्मि श्रमण न मे श्रमण मोक्ष्यसीति मारो पापीमां दुःखी दौर्मनस्यजातो ऽन्तःशल्यपरिदाघजातो बोधिसत्त्वं संधूयमानो महाऊहसितं जहसे ॥ महाप्रतापो स्मि श्रमण न मे श्रमण मोक्ष्यसीति मारो पापीमां दुःखी दौर्मनस्यजातो ऽन्तः[191a]शल्यपरिदाघजातो बोधिसत्त्वं संधूयमानो महाऊहसितं जहसे ॥ महावृषभो स्मि श्रमण न मे श्रमण मोक्ष्यसीति मारो पापीमां दुःखी दौर्मनस्यजातो ऽन्तःशल्यपरिदाघजातो बोधिसत्त्वं संधूयमानो महाऊहसितं जहसे ॥ महाविजयो स्मि श्रमण न मे श्रमण मोक्ष्यसीति मारो पापीमां दुःखी दौर्मनस्यजातो ऽन्तःशल्यपरिदाघजातो बोधिसत्त्वं संधूयमानो महाऊहसितं जहसे ॥ महासैन्यो स्मि श्रमण न मे श्रमण मोक्ष्यसीति मारो पापीमां दुःखी दौर्मनस्यजातो ऽन्तःशल्यपरिदाघजातो बोधिसत्त्वं संधूयमानो महाऊहसितं जहसे ॥ महाबलो स्मि श्रमण न मे श्रमण मोक्ष्यसीति मारो पापीमां दुःखी दौर्मनस्यजातो ऽन्तःशल्यपरिदाघजातो बोधिसत्त्वं संधूयमानो महाऊहसितं जहसे ॥ मनुष्यभूतो सि श्रमण अहं पुनर्देवपुत्रो न मे श्रमण मोक्ष्यसीति मारो पापीमां दुःखी दौर्मनस्यजातो ऽन्तःशल्यपरिदाघजातो बोधिसत्त्वं संधूयमानो महाऊहसितं जहसे ॥ मातापितृसंभवो श्रमणकायो ओदनकुल्माषोपचयो उच्छादनपरिमर्दनभेदनविकिरणविध्वंसनधर्मो मम पुनर्मनोमयः कायो न मे श्रमण मोक्ष्यसीति मारो पापीमां दुःखी दौर्मनस्यजातो ऽन्तःशल्यपरिदाघजातो बोधिसत्त्वं संधूयमानो महाऊहसितं जहसे ॥ एवं भिक्षवः मारो पापीमां दुःखी दौर्मनस्यजातो ऽन्तःशल्यपरिदाघजातो बोधिसत्त्वं संधूयमानो महाऊहसितं जहसे ॥

अथ खलु भिक्षवो बोधिसत्त्वो ऽभीतो ऽच्छम्भी विगतरोमहर्षो चतुर्दशभिरा-

2. B °po smiṁ çramaṇena me çramaṇe mo° C °po smiṁ çravaṇena me mokshasi° B °sti | mâ° B °duḥkhadau° C °daumanasya ° ḥçalyapa°. — 5. B °bho smiṁ çramaṇena me° C °bho smiṁ çravaṇena me çravaṇe mokshasi° BC °sti | mâ° B °duḥkhadau°.

6. B °jaye smi çramaṇena me çramaṇe mo° C °jaye smiṁ çravaṇena me çravaṇe mokshasi iti | mâ° B °sti | mâ° C °daumanasya° B °ḥçalye pari°. — 8. C mahâsainyo smiṁ çravaṇena me çravaṇe mokshasi° B °nyo si çramaṇena çramaṇa mo° BC °sti | mâ° C °daumanasya° B °dâghata bo° C °ghajâtâ bo° B °yamânaṁ mahâ°. — 10. C °lo smiṁ çravaṇenâ me çravaṇe mokshasiti | mâro° B °smi çramaṇena me ° sti | mâro° C °daumanasya° BC °antaçalya ° mâno ûhasi°.

12. B °bhûto smi çramaṇa a° C °bhûto smiṁ çravaṇe a °tro na me çravaṇe mokshasi° BC °sti | mâro° C °daumanasya° BC °dhûsayo maṁ°. — 14. C °pitṛibhâvo çravaṇakâ° BC °odanakâlmâ° C °shocayo u ° rimadanasya ° dharmo mama puraṁ mano° B °rmo sa- mapuramano° C °nomayakâyena çravaṇe mokshasi iti | mâro° B °sti | mâro° C °daumanasya° B °ayajâto bodhi° C °ḥçalyajâto bo°.

18. C °kshavo mâro°. — 20. B °cchabhito viga° C °cchabhi viga ° kâraiḥ mâ ° pânâṁ abhi° B °maṁ ‖ abhigajjed emaṁ ca bhi°.

कारेमारं पापीमं अभिगर्जे । एवं च भिक्षवः बोधिसत्वो अभीतो अच्छंभी विगतरोमहर्षो चतुर्दशभिराकारेमारं पापीमं संमुखं अभिगर्जे ॥ तेन हि ते पापीमं निहनिष्यामि । सय्यथापि नाम बलवां मल्लो दुर्बलं मल्लं तेन हि ते पापीमं निहनिष्यामि ॥ सय्यथा नाम बलवां वृषभो दुर्बलं वृषभं तेन हि ते पापीमं मर्दिष्यामि ॥ सय्यथापि नाम हस्तिनागो कदलिं असारिकां तेन हि ते पापीमं निहनिष्यामि ॥ सय्यथापि नाम बलवां मारुतो दुर्बलं द्रुमं तेन हि ते निहनिष्यामि ॥ सय्यथापि सूर्यो अभ्युदयमानो सर्वखद्योतकं तेन हि ते पापीमं अभिभविष्यामि ॥ सय्यथापि नाम चन्द्रो अभ्युदयमानो सर्वता[191b]रकरूपां तेन हि ते पापीमं अभिभविष्यामि ॥ सय्यथापि नाम हिमवां पर्वतराजा सर्वकालपर्वतांस्तेन हि ते पापीमं अभिभविष्यामि ॥ सय्यथापि नाम राजा चक्रवर्ती पृथु प्रत्येकराजानो तेन हि ते पापीमं संनिर्जिनिष्यामि ॥ सय्यथापि नाम भद्रो अश्वो आजानेयो सर्वाश्वखडुंकां तेन हि ते पापीमं सन्त्रासयिष्यामि ॥ सय्यथापि नाम सिंहो मृगराजा सर्वक्षुद्रमृगां तेन हि ते पापीमं संमोहजालं छेत्स्यामि ॥ सय्यथापि नाम बलवां मनुजो दुर्बलं जालं तेन हि ते पापीमं संमोहजालं दहिष्यामि ॥ सय्यथापि नाम अनलो उपादानस्तेन हि ते पापीमं भस्मीकरिष्यामि ॥ यथापीदं निष्यन्दसंयुक्तो तेन हि ते पापीमं अभिभविष्यामि ॥ यथापीदं अभिप्रज्ञायुक्तो तेन हि ते पापीमं उत्तारित्वा अभिग्रन्थित्वा त्रासयित्वा निर्जिनित्वा अभिक्रमिष्यामि । अत्र च पापीमं न गतिर्भविष्यति ॥ एवं खलु भिक्षवः बोधिसत्वो अभीतो अच्छम्भी विगतभयरोमहर्षो मारं पापीमं चतुर्दशभिराकारैः संमुखं अभिगर्जे ॥

1. C °kshavo bo ° harshaḥ caturdaçebhi âkâraiḥ mâro pâpîmâ saṁ° B °rdaçar âkârai mâraṁ pâ°. — 2. C °pîmâṁ ni°. — 3. C sadyathâ ° lavân mâruta durbala durmallaṁ | tena hi te nihanishyâmi | sadyathâpi nâma balavân mallo du ° B °durbala mallaṁ°. — 4. C sadyathâ nâ ° rbalo vrishabhaṁ° B °bhaṁ | te°. — 5. C sadyathâ ° go kavariṁ sa° B °go kacaliṁ mânikâṁ° C °hanishyati.

6[1]. (*La phrase est omise dans C.*) B °rutaṁ durbalaṁ drumaṁ | tena hi tehi te nihanishyâmi | . — 6[2]. C °sarve khadyo° B °pîmaṁm abhi°. — 7. B °candrâ abhyudayamânâ sarva ° pîmaṁm abhi°. — 9. C °jâ sarve kâlaparvatâṁ tena hi pâpî° B °hi pâpîmaṁm abhi°. — 10. C sadyathâ °kravarti pri° B °shyâma | .

11. C sadyathâ° BC °dro açvâjâneyâ sarvâçvakhaṇḍa° B °hi pâpî° C °pîmaṁ samtrâsa°. — 12. C sadyathâ° B °ho mriga sarva° C °jâ sarve kshu° B °gâṁ | tena te pâ° C °cchetsyâmi | . — 13. BC °balavân manujo° B °rbalaṁ jâlaṁ | tena° C °modajâlaṁ dahi°. — 14. C sadyathâpi nâma analâ u ° pîmaṁ adhikari° B °pîman adhikari°. — 15. BC °daṁ nishadanayukto°.

16. C yathâ prajña(?)yukto° B °daṁ abhiprajñâyukto° BC °hi pâpîmaṁ utta(B °sta)ritvâ abhigrathi(B °grasi)tvâ trâ° C °yitvâ vinirjitvâ abhikra°. — 18. B °caturbhir â°.

भिक्षू भगवतो पृच्छेन्सु ॥ पश्य भगवं ज्योतिष्कस्य गृहपतिस्य एवृद्धीये संपत्तीये समन्वागतं गृहं अभूषि असाधारणा च भोगा भगवां च आराधितो प्रव्रज्या उपसंपदा च लब्धा निष्क्लेशता च प्राप्ता । कस्यैतद्भगवं ज्योतिष्कस्य गृहपतिस्य कर्मफलविपाकः ॥ भगवानाह ॥

भूतपूर्वं भिक्षवः अतीतमध्वाने इतः एकनवतिमे कल्पे राजा अभूषि बंधुमो नाम ॥ राज्ञो खलु पुनः भिक्षवो बन्धुमस्य बन्धुमती नाम राजधानी अभूषि । चक्रवर्तिपुरी विस्तरेण ॥ राज्ञो खलु पुनः भिक्षवो बन्धुमस्य विपश्यी नाम पुत्रो अभूषि ॥ अथ खलु भिक्षवः विपश्यी बोधिसत्वो अपरस्मिं देशे गत्वा अगारस्मा-नगारियं प्रव्रजित्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धो ॥ कदाचि दानि राजा बन्धुमो भगवतो विपश्यिस्य दूतं प्रेषेति ॥ आगच्छाहि भगवं स्वकां जन्मभूमिं अस्माकं अनुकम्पार्थं ॥ अथ खलु भिक्षवो भगवां विपश्यी राजदूतवचनं श्रुत्वा येन स्वका जन्मभूमिस्तेनोपसंक्रमि सार्धं अष्टषष्टीहि अ[192a]र्हन्तसहस्रेहि ॥ तेन च कालेन तेन समयेन बंधुमतीयं राजधानीयं अनङ्गणो श्रेष्ठि आढ्यो महाधनो प्रभूतवित्तोपकरणो ॥ अश्रोषीत्खलु अनङ्गणो गृहपति एवं चैव च भगवां विपश्यी आगच्छति सार्धं अष्टषष्टीहि अर्हन्तसहस्रेहि ॥ तस्य दानि एतदभूषि । यं नूनाहं सर्वप्रथममेव भगवतो पादवन्दं उपसंक्रमेयं ॥ अथ खलु अनङ्गणो गृहपति शीघ्रशीघ्रं त्वरमाणरूपो भगवतो पादवन्दको उपसंक्रान्तो ॥ अद्राक्षीत् अनङ्गणो गृहपतिः भगवन्तं विपश्यिं दूरतो एवागच्छन्तं प्रासादिकं (यावत्) भिक्षुसंघप-

1¹. C bhikshu bhagavantaṁ pṛcchetsuḥ | B °cchetsu paçya°. — 1². C °gavaṁ jyotikasya gṛi ° dṛçiparamasaṁpatti° B °ciye saṁpa° BC °shi | asā° B °ṇā ca bhāgā° BC °bdhā niklecatāṁ ca prāpto(C °ptaḥ) karyaṁ°. — 3. C °vipākā ||. — 5. C °kshavo ati ° dhvāne ito eka° B °time kakalpe° BC °shi | bam° ° ma rā°.

6. B rājño kha° C °punar bhikshu° B °sya bandhumati nā ° shi cakra°. — 7². C °varttipuri° B °rī | vi° BC °ṇa rā°. — 8. C °vaḥ vipaçyī bo° B °tvā agāriyā°. — 9. C °vipaçyisya dū° B °sya dutaṁ° C °prashayati | . — 10. C °gavan svakaṁ ja° B °svakaṁ jarmma(ou °rtma°?)bhū°.

11. C °gavān vipaçyī rā ° kā jatmabhū° BC °kramitvā sā° B °rddhaṁ ashṭhashashṭhihi arha°. — 12. C tena kālena tena sama ° āgaṇo nāma çre° B °kālena sama° BC °çreshṭi a ° cittopakaraṇo a°. — 14. B abhū(corrigé en °çro°?)shit | kha ° rddhaṁ ashṭhashashṭhihi °rha° C °shashṭhihi arha°. — 15¹. B °shi yaṁ°. — 15². C yannūnā ° thamaṁ ānam evaṁ bha° B °thamānam ° to pāda vanda u° C °pāde vando u°.

16. C °anaṅgoṇo nāma çreshṭi gṛi° BC °nto adrā°. — 17. BC °kahiṁ | ana° C °āgaṇo nāma gṛi ° to evāṁgacchantaṁ dṛshṭvā prāsādikaṁ yeti bhi° B °dikaṁ | ye bhikshu°.

रिवृतं ॥ अथ खलु अनङ्गणो गृहपतिः येन भगवां (याव) भगवन्तमेतदवोचत् ॥ अधिवासेहि मे भगवन्त्रैमासभक्तेन सार्धं भिक्षुसंघेन (याव) तूष्णीभावेन ॥

अश्रोषी राजा बंधुमो एवं चेवं च भगवां विपश्यी आगच्छति महता भिक्षुसंघेन सार्धं अष्टषष्टीहि अर्हन्तसहस्रेहि . . . . . तेनान्तनगरं अलंकरोथ ॥ (यावत्) महता राजानुभावेन (यावत्) अद्राक्षी प्रासादिकं (यावत्) निमन्त्रेति (यावद्) अधिवासितं मे महाराज अनंगणस्य गृहपतिस्य त्रैमासभक्तेन सार्धं भिक्षुसंघेन । राजा श्रुत्वा उत्कण्ठितो एवं जातो ॥ अनंगणो गृहपति ममतो अपृच्छित्वा अनवलोकित्वा अपक्रमाणं कृत्वा भगवतो सकाशमुपसंक्रान्तो भगवां च निमन्त्रितो । असाधु मे ते ॥ भगवां राज्ञा उक्तो ॥ एकं दिवसभक्तं मम भवतु द्वितीयं तस्य ॥ भगवानाह ॥ यदि अनंगणो अनुजानाति एवं लभ्यं ॥ राजा दानि अनङ्गणस्य दूतं प्रेषेति (यावद्) आगतं ॥ राजा आह ॥ प्राप्तं आगतं कालं तव गृहपति यं राज्ञो विलोमं वर्तसि । मम अनापृच्छियान निमन्त्रेसि । न त्वं जानसि मह्यं सो पुत्रो विपश्यी आगतो । वोसिराहि भगवतो त्रैमासं भक्तं सार्धं भिक्षुसंघेन ॥ गृहपतिः आह ॥ न वयं देवस्य अवक्रमानो अपि तु किं देवो पुण्याधिको वयं नाधिको अपि तु यथा देवस्य इष्टं भवति तथा करिष्यामीति निर्मन्त्रितो मे भगवां ॥ अथ खलु बंधुमस्य एतदभूषि । सचेद्दृष्याम्यहं मा ताव गृहपते करोहि न च मे अनुजानिष्यति न च मे भगवां विपश्यी आत्तमनो भविष्यति न च मे अधिवासयिष्यति ॥ तस्य एवं चिन्तयमानस्य गृहपतिं आमन्त्रयति ॥ तेन हि गृहपते भक्तकारं करिष्यामि । एकदिवसं मम भवतु द्वितीयदिवसं तुभ्यं भवतु ॥ आह ॥ वाढं

1. C °ṅgaṇo nâma gṛihapati yena bhagavâṁstenopasaṁkramitvâ yâvad bhagavanta° B °câṁ yena bhagavantu°. — 2. C °mâsabhukte°. — 3. C °shid râjâ° BC °cedaṁ ca bha° C °âgacche ma° B °âgaccha ma° C °shashṭhihi arha° B °shashṭhihi arahantehi saha-sra° C °tenântaḥ na° B °karetha | . — 4. C °vena yâvadrâkshi prâsâ° BC °sâdiko yâvat ni° °vâsito me° C °patinâ traimâsaṁ bhukte° B °traimâsaṁ bha° BC °ghena râjâ°.

7[1]. C °utthitan | evaṁ jitaṁ | B °vaṁ jito hanaṁga°. — 7[2]. C °ti mama pri° B °to pṛicchi ° kkçaṇam a°. — 9[1]. BC °taṁ bha°. — 9[2]. B °gavaṁ râjña ukte | C °gavan râjña uktâ || . — 9[3]. C evaṁ di° BC °divasaṁ bhaktaṁ° C °tiye | tasya° B °tiye | (?) tasya bhaga°. — 10[1]. BC °ti | evaṁ labhyaṁ râ°. — 10[2]. C °ni anaṅgaṇya dû° BC °ti | sâ°.

11[2]. C prâptaṁ kâ° C °râjñâṁ vilomaṁ vartteti | . — 12[1]. C °nâpṛcchiyâva âmantresi. — 12[2]. C °tvaṁ prajânâsi || ma° BC °vipasya â° C °oçirehi bhagavan tatraivaṁ mâsaṁ°. — 13[2]. C °patir âha || . — 14. BC °tu kin devo pu° ko api tu yadâ de(C °dâ di)vasya ishṭâ bhavati(C °ti | ) tadâ kari° C °shyati ni° B °nimantrato° C °gavân || .

16[2]. C °mâ tâva gṛi° BC °shyati | na ca me bhagavâṁ(C °gavanâ) vipa°. — 18[1]. B °mantrayati tena°. — 19[1]. C °tubhyaṁ bha°. — 19[2]. C °kartaṁ | B °rtuṁ pra°.

तत्थिं न शक्यं कर्तुं ॥ प्रज्ञापितं ए[192b]कं दिवसं राज्ञो भक्तं द्वितीयं अनंगणस्य ॥ अनंगणो दानि गृहपति यत्तकं एकदिवसं राज्ञो भक्तं ततो अनंगणो अपरस्य अवश्यं विशेषं करोति ॥ अथ खलु राजा बंधुमो महामात्यं आमन्त्रयति ॥ तस्य दानि ग्रामणि अनङ्गणस्य गृहपतिस्य स्वापतेयं बहुतरकं न मम त्ति यदिदं गृहपतिस्य भक्तं संपद्यति न मम तं संपद्यति अथ देवस्य पश्चिमकं दिवसं पश्चिमा विशेषं करोति । तेन हि ग्रामणि तथा कर्तव्यं यथा अनंगणस्य गृहपतिस्य उत्थेयं भवे यं धारयिष्यति ॥ न शक्नोति किंचित्कर्तुं यावत्त्रैमासिकं समाप्तं द्विदिवसा अवशेषा चतुर्दशी च राज्ञो भक्तवारं पंचदशी च गृहपतिस्य ॥ राज्ञो दानि बंधुमस्य सुनिहतो नाम चन्दनारामो महान्तो च विस्तीर्णो च शीतलो च सुगन्धो च प्रासादिको च दर्शनीयो च ॥ राजा दानि पश्चिमके दिवसे चतुर्दशीयं सर्वं चन्दनवाटं सिक्तसंसृष्टं कृत्वा ओसक्तपट्टदामकलापं धूपितधूपनं मुक्तपुष्पावकीर्णं एकमेकस्य चन्दनवृक्षस्य एकमेकस्य भिक्षुस्य शतसाहस्रिका आसनप्रज्ञप्ती क्रियति । चत्वारो दारका सर्वालंकारविभूषिता सुवर्णरूप्यमयदण्डेन सर्वश्वेतेन चामरेण वीजयन्ति ॥ एकेनान्तेन कुमारिका सर्वालंकारविभूषिता पुरतो शतसाहस्रिकानि गन्धयोगानि अनुलेपनां पीषयन्ति पृष्ठतो हस्तिनागा सर्वालंकारविभूषिता हेमजालप्रतिच्छन्ना अवदातानि च्छत्राणि धारयन्ति ॥ राज्ञो आणत्तीया यावत्तां बन्धुमतीं द्वादश योजनानि समन्ते न केनचित् शलाका विक्रीणितव्या यो क्रीणाति

1. BC °ṇasya | anaṅgaṇo nāma gṛihapati yattakaṁ eka(C °kaṁ)divasaṁ rājño bhaktaṁ dvitīyaṁ anaṁgaṇasya | anaṁgaṇo dā°. — 2. C °ekaṁ di° ktaṁ | tataḥ anaṁgaṇo apa° B °te anaṁgaṇo avaçyaṁ niveçanaṁ° C °çyaṁ nirddeçaṁ°. — 3. B °rājñā baṁ° C °rājño baṁdhumo mahā° B °yadi kasya°. — 4. BC kasya° B °grāmaṇi a° C °sya gṛihapati svā° bahutaraṁkaṁ na mamānti | yad i° B °na mamanti yad i° C °ktaṁ saṁpadyati na mamanti taṁ saṁpadyanti || āha de° B °taṁ saṁpadyati || āha || devasya paçyimako divase paçyimatvā vi° C °çcimako divaso paçyi°.

6. BC rājā āha || tena °ṅgaṇa gṛi° C °tisya ca kṣhemaṁ bha° B °tisya utshepaṁ° BC °ve yaṁ dhārayishyati na ça°. — 7. BC °ttuṁ | yā° C ° traimāsaṁ saptamo divaso avaçe° BC °çesho catu° BC °paṁcadaçiya gṛihapatisya rā°. — 8. B °nāma vanda° C ° nāma candanārāma mahanto° B °mo mahanto ca vistīrṇā ca çī°. — 10. C rājño dā° B °ni paçyimake° C °çcimakehi divasehi caturdaçīye rājño sarvaṁ° B °yaṁ sarve candanavāṭā sikta° C °vāṭyā siktaṁ saṁ° B °spṛishṭaṁ kṛi° C °āpaṁ dhūpanaṁ mu° B °pitadhūpanaṁ mu° B °bhikshūsya° C °çatasahasriṇī āsanaprajñapto diṣati vṛiksha catvā°.

13. B vṛiksha catvā° C °dārako sarvā °shitaṁ suvarṇṇaṁ rū° BC °rūpyamayena da°. — 14. C °kumārikā sarvālaṁkāravibhūshitā pu° B °rikā sarvākāravibhūshitā pu° C °srikāṇi ga° lepanī pi° BC °nāgaṁ sa° shitaṁ he° upannaṁ ava° B °cchatrāṇi dhā°.

16. BC rājñā āṇattiyā(B ° nantiya)vattāṁ° B °ndhumatī dvā° C °tāṁ nagarīṁ dvā° cit çalākā vikramenitavyā° B °cit çalā vikreçitavyā° BC °vikrīṇati | tasya° B °tha e°.

मे (यावद्) अर्धमासकं भिक्षवे (??) [यावत्] सर्वसंघे (यावद्) अर्थं याचित्वा तत्तकं एव ॥ ततो राजा बन्धुमो अनंगणेन सार्थपरिनायकं अर्थं च पुनः पंच पुराणशतानि किमेतं भविष्यति ॥ सो दानि पृच्छति ॥ किमेतं भविष्यति ॥ आहंसुः ॥ भगवां विपश्यी सार्धमष्टषष्टीहि अरहन्तसहस्रेहि परिविषीयति ॥ सो दानि चिन्तेति । दुर्लभं तथागतानां (यावत्) संबुद्धानां लोके प्रादुर्भावः । यं नूनाहं इमेन दधिघटकेन बुद्धप्रमुखं भिक्षुसंघं स्वयमेव परिविषेयं ॥ सो दानि स्वयमेव सर्वसंघे (यावद्) अर्थं याचित्वा तत्तकं एव ॥

ततो राजा बन्धुमो अनङ्गणेन गृहपतिना सार्धं तादृशकेन व्यूहेन भगवन्तं सश्रावकसंघं परिविषति ॥ यदा भगवां भुक्तावी धौतहस्तो अपनीतपात्रः ततो गृहपति प्रणिधिं करोति ॥ यो यं मम देयधर्मपरित्यागात्पुण्याभिस्यन्दः कुशलाभिस्यन्दः सुखस्याधारणं मे दिव्यं उपभोगं भवेया तं च असाधारणं एतादृशं च शास्तारं आरागयेयं । सो धर्मं देशेय तथाहं आजानेयं प्रव्रजित्वा निष्क्लेशो भवेयं ॥

भगवानाह ॥ स्याद्वो भिक्षवः एवमस्यादन्यः स तेन कालेन तेन समयेन अनङ्गणो नाम श्रेष्ठि अभूषि । नैतदेवं द्रष्टव्यं । अपि त्वेषो गृहपतिः स तस्मिं काले तस्मिं समये अनंगणो नाम गृहपतिरासि [यावत्] तस्य प्रणिधि सर्वार्थसिद्धः ॥

अथ खलु मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाघ[194a]जातो षोडशाकारसमन्वागतं महापरिदेवितं परिदेवे ॥ कथं च भिक्षवः मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाघजातो षोडशाकारसमन्वागतं महापरिदेवितं परिदेवे ॥ महर्धिको बताहं समानो मा हैव श्रमणो अभिभविष्यतीति मारो

2. C tataḥ rā°. — 3¹. BC °ti ki°. — 3². C °ti te â°. — 4¹. B °nam bhaga°. — 4². C °shashṭhihi arhanta° B °yati so dā°. — 5¹. BC °ti du°. — 5². C °bhâvo yam° B °vaḥ yaṁ°.

6¹. C °dhighaṭena buddhapramukhehi bhikshusaṅgha svayam evaṁ pari° B °sheyaṁ so dā°. — 6². BC °yam evaṁ sarva° C °ttakam evaṁ | . — 8. BC °badhumo° C °kena vyuhe° B °ntaṁ çrâva° C °vakasaṁ pari°. — 9. C °pâtro tataḥ gṛi° BC °roti yo°. — 10. BC °deyaṁ dharma° B °ṇyâbhiçyanda kuçalâbhiṣanda su° C °ṇyâbhiṣyandasukha° BC °divyâṁ u° B °bhoga bhaveyâ | taṁ° C ° veya | taṁ° B °râgaveyaṁ | .

12. C so me dharmaṁ deçeya tattânuhâṁ âjâ° B °deçeyha taccânuhaṁ âjâ° tvâ nikleço° C °nikleço°. — 13². C °d anyas sa tena kâ° mo çreshṭi a°. — 14¹. B °vyaṁ jyo°. — 14². C °tena tasmit samayenaṅgaṇo° B °tir âçi yâva ° siddhaḥ || C °siddho.

16. C °daurmanasya° BC °lyaparidâgha° C °çâkârasama ° vitaṁ paridevaṁ | B °vitaṁ paridevâ kathaṁ° — 17. C katham bhi ° ḥkhi daurmanasyajâtau anta ° nvâgato mahâ° B °nvâgata mahâpari ° ridevâ maha°. — 19. C °rddhiko ca vata° BC °vata haṁ samâno mâ° C °mâ haiva çramaṇo abhi° B °çramaṇâ abhi° BC °titi | mâro° C °daurmanasya°.

पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाघजातो महापरिदेवितं परिदेवि । महाप्रभावं वत मे समानं मा हैव मे श्रमणो गौतमो अभिभविष्यतीति मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाघजातो महापरिदेवितं परिदेवि । महेशाख्यं वत मे समानं मा हैव मे श्रमणो गौतमो अभिभविष्यतीति मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाघजातो महापरिदेवितं परिदेवि । महाप्रतापं वत मे समानं मा हैव मे श्रमणो गौतमो अभिभविष्यसि इति मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाघजातो महापरिदेवितं परिदेवि । महावृषभितं वत मे समानं मा हैव मे श्रमणो गौतमो अभिभविष्यतीति मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाघजातो महापरिदेवितं परिदेवि । महाविक्रमं वत मे समानं मा हैव मे श्रमणो गौतमो अभिभविष्यतीति मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाघजातो महापरिदेवितं परिदेवि ॥ महास्थामं वत मे समानं मा हैव मे श्रमणो गौतमो अभिभविष्यतीति मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाघजातो महापरिदेवितं परिदेवि । महाबलं वत मे समानं मा हैव मे श्रमणो गौतमो अभिभविष्यतीति मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाघजातो महापरिदेवितं परिदेवि । मनुष्यभूतो [194 b] श्रमणो गौतमो अहं पुनर्देवपुत्रो मा हैव मे श्रमणो गौतमो अभिभविष्यतीति मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाघजातो महापरिदेवितं परिदेवि । मातापितृसंभवो श्रमणगौतमस्य कायो औदारिको ओदनकु-

2. BC °vata me sa° C °mā haiva me çravaṇo gau° BC °gauttamo a° °titi | māro° C °daumanasya° B °hāparideri paridevo | . — 4. C °haiva çravaṇo gauttamo° B °haiva çramaṇaṃ gauttamaṃ abhi° C °shyati | māro° B °titi | māro° C °daumanasyā° B °çyajāto paridāgha antaḥ mahā°.

6. (*la phrase est répétée dans* B, *la répétition est notée sous* b) b °vata me mā hai° C °haivaṃ çravaṇo gau° b °tame a° Cb °shyatīti | māro° B °iti | māro° C °daumanasya° b °antaçalya° C °antoçalya°. — 8. B °shabhitaṃ ca me sa° C °haivaṃ çravaṇo° BC °titi | māro° B °duḥkhadau° C °daumanasya° °ntaçalya° (?). — 10. C mahāvijayaṃ ca vata me sa° haiva çravaṇo (?) gau° B °gauttamo a° BC °titi | māro° C °daumanasyajāto antaḥ° °vitaṃ paridevo | mahābalaṃ° (l. 13).

11. *La phrase est omise dans* C. B mahāsamāvate me samā° °shyati iti | māro° °vitaṃ paridevo || . — 13. C °laṃ ca vata me çravaṇo gau° B °laṃ vate me sa° BC °titi | māro° BC °daumanasya° C °ghajāto mahā°. — 15. C °bhūto | ca vata me samānaṃ mā haivaṃ çravaṇo gautamo ahaṃ° B °çramaṇo gauttamo ahaṃ° C °tro abhi° BC °titi | māro° C °daumanasya° B °vo mā°.

18. C °saṃbhavaḥ çramaṇo gauttamasya kāyo audārikā oda° B °audāriko° C °kuā-shayasaṃyo urdhā° B °yo occhā° C °rdanasūpanabhe° B °manayakāyo mā haiva çra° C °haiva çravaṇo gauttamo° BC °titi | māro° °ikhī daumanasya°.

आयोपायो आच्छादनपरिमर्दनसुपनभेदनविकिरणविध्वंसनधर्मो मम पुनर्मनोमयो कायो मा हैव मे श्रमणो गौतमो अभिभविष्यतीति मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाहजातो महापरिदेवितं परिदेवि। ये पि ते शूरा वीरा परमपुरुषास्ते पि ते इमस्य मानुष्यस्य परिनिषेवं पि न जानन्ति मा हैव मे श्रमणो गौतमो अभिभविष्यतीति मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाहजातो महापरिदेवितं परिदेवि। यथा यथा खलु पुनर्मे एवं भवति अथ अहं श्रमणं गौतमं अभिभविष्यामीति तथा तथा मे तेन मनसिकारो मे चित्तमेव निरुध्यति मा हैव मे श्रमणो गौतमो अभिभविष्यतीति मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाहजातो महापरिदेवितं परिदेवि। विपद्यति च मे सेना मा हैव मे श्रमणो गौतमो अभिभविष्यति इति मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाहजातो महापरिदेवितं परिदेवि। सत्त्वानि वत मे भवन्ति गाथापि मा हैव मे श्रमणो गौतमो अभिभविष्यतीति मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाहजातो महापरिदेवितं परिदेवि। मोघं वत मे उत्थानं आकुलो वत मे व्यायामो मा हैव मे श्रमणो गौतमो अभिभविष्यतीति मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाहजातो महापरिदेवितं परिदेवि। ये पि ते मे स्वविषयकायिकदेवपुत्रा ते श्रमणस्य गौतमस्य अभ्यन्तरो परिवारो मा हैव मे श्रमणो गौतमो अभिभविष्यतीति मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाहजातो महापरिदेवितं परिदेवि॥ एवं खलु भिक्षवः [195b] मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाहजातो षोडशाकारसमन्वागतं महापरिदेवितं परिदेवि॥

अथ खलु भिक्षवः बोधिसत्त्वो अभीतो अच्छम्भी विगतभयरोमहर्षो द्वात्रिंशता-

3. C °çūro vīro pa° BC °mānushasya° C °kāheyaṃ pi na jānanti mā haiva çravaṇo gauttamo° B °shyati iti ‖ māro pā° °khī daurma° C °daurmanasya°.

6. C °punaḥ me e° haiva çravaṇo gauttamo abhibhavishyatīti | tathā ta° B °maṇaṃ gautamaṃ abhibhavishyāmīti | tathā ta° C °thā atma° BC °sikārā me kahi° C °pruṃ evaṃ mi° haiva çravaṇo gauttamo abhi° BC °iti | māro° C °daurmanasya°. — 9. C nishadyati ca me çravaṇo gauttamo abhi° BC °iti ‖ māro° C °daurmanasya° °ve na pra°.

11. B sva(? sa sva)jonāni vata° C na çramnā vata° B °mi yātrā° C °çravaṇo gau° BC °iti | māro° C °daurmanasya°. — 13. C °kulo vyāyā° C °çravaṇo° BC °iti ‖ māro° C °daurmanasya°. — 15. B ye pi mate sva° C °trā te çravaṇasya gauttamasya a° BC °sya anyatare pari° C °haiva çravaṇo gauttamo° B °haiva çrama° °tamo abhi° C °shyati iti | māro° B °iti | māro° BC °duḥkha dau° C °daurmanasya° °vitaṃ paridevitaṃ paridevi ‖.

18. C °daurmanasya° °ghajāto mahāparidevitaṃ paridevi | atha° B °çākārasamanvāgataṃ.

21. C °kāluna ha° BC °taṃ parigṛhītaṃ |.

कारसमन्वागतं आर्यमानं प्रगृह्णे ॥ अयं च भिक्षवः बोधिसत्वो अभीतो अच्छंभी विगतभयरोमहर्षो द्वात्रिंशताकारसमन्वागतमार्यमानं प्रगृह्णे ॥ महानमर्थं प्रार्थयमानो बोधिसत्वो आर्यमानं प्रगृह्णे । प्रतिपूरं अर्थं प्रार्थयमानो बोधिसत्वो आर्यमानं प्रगृह्णे । प्रणीतं अर्थं प्रार्थयमानो बोधिसत्वो आर्यमानं प्रगृह्णे । परिशुद्धं अर्थं प्रार्थयमानो बोधिसत्वो आर्यमानं प्रगृह्णे । अविपरीतं अर्थं प्रार्थयमानो बोधिसत्वो आर्यमानं प्रगृह्णे । अपूर्वं अर्थं प्रार्थयमानो बोधिसत्वो आर्यमानं प्रगृह्णे । नैर्याणिकमर्थं प्रार्थयमानो बोधिसत्वो आर्यमानं प्रगृह्णे । लोकोत्तरं अर्थं प्रार्थयमानो बोधिसत्वो आर्यमानं प्रगृह्णे । असाधारणं अर्थं प्रार्थयमानो बोधिसत्वो आर्यमानं प्रगृह्णे । अव्याबध्यं अर्थं प्रार्थयमानो बोधिसत्वो आर्यमानं प्रगृह्णे । अनागतं अर्थं प्रार्थयमानो बोधिसत्वो आर्यमानं प्रगृह्णे । नास्ति तं सुखं यं मे न परित्यक्तं तस्य अर्थस्य आहरणतायै बोधिसत्वो आर्यमानं प्रगृह्णे । नास्ति लोकोत्तरलौकिकं सुखं यं मे न परित्यक्तं तस्य अर्थस्य आहरणतायै बोधिसत्वो आर्यमानं प्रगृह्णे । नास्ति लोके तं दुःखं यं मे न उपादिन्नं तस्य अर्थस्य आहरणतायै बोधिसत्वो आर्यमानं प्रगृह्णे । नास्ति सा लोके रमणीयता या मे न परित्यक्ता तस्य अर्थस्य आहरणतायै बोधिसत्वो आर्यमानं प्रगृह्णे । नास्ति लोके चित्तिकं यं मे न परित्यक्तं तस्य अर्थस्य आहरणतायै बोधिसत्वो आर्यमानं प्रगृह्णे । नास्ति तं लोके ऐश्वर्यं यं मे न परित्यक्तं तस्य अर्थस्य आहरणतायै बोधिसत्वो आर्यमानं प्रगृह्णे । न खलु पुनः कामरतिहेतोः बोधिसत्वो आर्यमानं प्रगृह्णे । अथ खलु विरक्तः सर्वसंस्कारेषु सर्वसंस्कारवीतिक्रमं प्रापयिष्यामीति बोधिसत्वो आर्यमानं प्रगृह्णे । पूर्वोत्पादसंपन्नो बोधि[195b]सत्वो आर्यमानं प्रगृह्णे । अग्रोत्पादसंपन्नो बोधिसत्वो आर्यमानं प्र-

1. C °bhayo ro° samatvâga° BC °nam parigrihne(C °hne |) mahâ°. — 2. C °nam parigrihne | B °pratigrihne | . — 3. C °pûrņam arthaṁ° BC °rthayamânam bo° C °satva â° BC °grihne | . — 4. B °artha prâ° C °yamânam bo° BC °grihne (et ainsi toujours avec n) | . — 5[1]. C °satva ârya°.

6. C °satva ârya° C °grihne | aryâ° (l. 9). — 8. B °yamânu bo°. — 9. C °dhyaṁ artha pra°. — 10. C °yamâna bo°.

12. C nâsti loke taṁ sukhaṁ yaṁ me na° B °khaṁ tasya tasya artha° C °satvaṁ ârya°. — 13. B °khaṁ ya me na u° C °khaṁ yaṁ me na u° B °nnaṁ tasya âha° C °satva ârya°. — 14. C °sâ sa lo° °tâ yaṁ me na parityaktaṁ ta° B °yâ ya me na parityakto ta° C °satvaṁ ârya°.

16. C nâsti taṁ lo°. — 17. B °ke eṣva° C °ryaṁ yaṁ me na°. — 18. C °ratiheto bo° B °heto bo°. — 19. C °rakto sarvasaṁskâravîtikrama prâ° B °kramaḥ prâ°. — 20. BC pûrotpâdasaṁpannâ bo°.

21. BC °pannâ bo° C °satva ârya°.

गृह्णे । प्रतिविधिसंपन्नो बोधिसत्वो आर्यमानं प्रगृह्णे । निःश्रयसंपन्नो बोधिसत्वो आर्यमानं प्रगृह्णे । उपचारसंपन्नो बोधिसत्वो आर्यमानं प्रगृह्णे । उपलम्भसंपन्नो बोधिसत्वो आर्यमानं प्रगृह्णे । सम्भारसम्पन्नो बोधिसत्वो आर्यमानं प्रगृह्णे । दृढसमादानो हमस्मीति कुशलेहि धर्मेहि तं मया समादानं अपपूर्वं नापि भंजिष्यामीति बोधिसत्वो आर्यमानं प्रगृह्णे । दृढचित्तो हमस्मि स्थितचित्तो या खलु पुनर्दृढचित्तेन स्थितचित्तेन भूमी अधिगन्तव्या तां भूमिमधिगमिष्यामीति बोधिसत्वो आर्यमानं प्रगृह्णे । महाद्रुमो हमस्मि अपरिमितचेतसो या खलु पुनः महाद्रुमेन अपरिमितचेतसेन भूमी अधिगन्तव्या तां भूमिं अधिगमिष्यामीति बोधिसत्वो आर्यमानं प्रगृह्णे । अयेन पुनः वीर्येन अयां भूमिं अधिगमिष्यं अयं मे वीर्यमस्ति बोधिसत्वो आर्यमानं प्रगृह्णे । तां भूमिमधिगमिष्यामि यां भूमिमधिगम्य महतो जनकायस्य अर्थं करिष्यामि बोधिसत्वो आर्यमानं प्रगृह्णे । एवं खलु भिक्षवो बोधिसत्वो अभीतो अच्छम्भी विगतभयरोमहर्षो द्वात्रिंशताकारसमन्वागतं आर्यमानं प्रगृह्णे ॥

अथ खलु भिक्षवो बोधिसत्वो अभीतो अच्छंभी विगतभयरोमहर्षो पंचविधं आर्यक्षितं प्रादुर्करे ॥ कथं च भिक्षवः बोधिसत्वो अभीतो अच्छंभी विगतभयरोमहर्षो पंचविधं आर्यक्षितं प्रादुरकरे । सद्यथीदं छन्दोपस्तब्धं वीर्योपस्तब्धं स्मृत्युपस्तब्धं समाध्युपस्तब्धं प्रज्ञोपस्तब्धं ॥ एवं खलु भिक्षवो बोधिसत्वो अभीतो अच्छंभी विगतभयरोमहर्षो पंचविधं आर्यक्षितं प्रादुरकरे ॥

अथ खलु भिक्षवो बोधिसत्वो अभीतो अच्छंभी विगतभयरोमहर्षो चतुर्विधं

1[1]. C °pannā bo°. — 1[2]. C °pannā bo° BC °naṁ gṛhne | . — 2[1]. C °pannā bodhisatva ārya°. — 3[1]. *La phrase est répétée dans* B *et* C; *les deux mscr. ont dans la répétition* saṁbhārasaṁpanno°. — 3[2]. C °ḍhasamādānāhaṁ asmīti ku° dāna bhagnapūrva nā° satva ārya°. — 5. BC °ham asmi sthi(C ° asmiṁ sthi)tacitto yaṁ vā pu° nāna adhiganta(C °ntaṁ)vyā° C °bhūmi adhi° gṛhne | agre°.

7. B °ham asmiṁ aparimitacetaso | yathā khalu punaḥ yathā khalu punaḥ mahādrumena aparimitacetasena bhūmim adhigantavyā taṁ bhūmiṁ gadhi° miti | bo°. — 9. C °grena punar vīryyena agrāṁ° C °grāṁ me adhivīrya°. — 10. BC taṁ bhūmim a(B ° mig a)dhigamiṣyā° B °mi yaṁ bhūmim adhigamya° C °yāṁ bhūmim adhigamiṣyaṁ mahato janakāyārthāya kari° B °kāyasya karthaṁ kari°.

11. C °khavaḥ bo° BC °to acchaṁbhī vi° C °nvāgataṁ bodhisatva āryya°. — 14. *Les syllabes* °maharṣo° *sont rongées dans* B. C °āryyasmiṁ taṁ° B °ryasmiṁ taṁ°. — 15. B °to acchabhī vi° C °ṣāo pañca° ryyasmiṁ prādurkare | B °prādur arakare.

16. C sadyathī° B °samādhyāpastabdhaṁ pra° C °samādhyāvastabdhaṁ prajñāstabdhaṁ|. — 17. C °kṣavaḥ bodhisatva abīto° BC °harṣo paṁ° B °vidham ārya° C °vidharmāryyakṣitaṁ prādurkare | . — 19. C °kṣavaḥ bo ° simhaṁbhīki°.

आर्यमहासिंहविलोकितं विलोकेति ॥ कथं च भिक्षवो बोधिसत्वो अभीतो अच्छम्भी विगतभयरोमहर्षो चतुर्विधं आर्यमहासिंहविलोकितं विलोकेति ॥ सद्यथीदं असंविग्नं विलोकेति । असंत्रस्तं च विलोकेति । असंप्रभीतं च विलोकेति । विगतभयरो[१९६a]महर्षं च विलोकेति ॥ एवं खलु भिक्षवः बोधिसत्वो चतुर्विधं आर्यमहासिंहविलोकितं विलोकेति ॥

अथ खलु भिक्षवो बोधिसत्वो अभीतो अच्छम्भी विगतभयरोमहर्षो चतुर्विधं आर्यमहासिंहविजृम्भितं विजृम्भेति ॥ कथं च भिक्षवः बोधिसत्वो अभीतो अच्छम्भी विगतभयरोमहर्षो चतुर्विधं आर्यमहासिंहविजृम्भितं विजृम्भेति ॥ सद्यथीदं अभीतं च विजृम्भेति अविग्नं च विजृम्भेति असन्त्रस्तं च विजृम्भेति त्रासेन्तो च पुन मारं च मारपर्षद् च महासिंहविजृम्भितं विजृम्भेति ॥ एवं च खलु भिक्षवो बोधिसत्वो चतुर्विधं आर्यमहासिंहविजृम्भितं विजृम्भेति ॥

अथ खलु भिक्षवो बोधिसत्वो अभीतो अच्छम्भी विगतभयरोमहर्षो महासिंहउक्कासितं उक्कासि ॥ कथं च भिक्षवो बोधिसत्वो अभीतो अच्छम्भी विगतभयरोमहर्षो आर्यमहासिंहउक्कासितं उक्कासे ॥ सद्यथीदं अभीतं उक्कासे असंविग्नं च उक्कासे असंत्रस्तं च उक्कासे अच्छम्भितं च उक्कासे ॥ इदं च पुनर्भिक्षवो बोधिसत्वस्य आर्यमहासिंहउक्कासितं । त्रिसाहस्रमहासाहस्राय लोकधातौ ये जना सर्वे शब्दं अश्रोषीत् ॥ एवं खलु भिक्षवो बोधिसत्वो अभीतो अच्छम्भी विगतभयरोमहर्षो चतुर्विधं आर्यमहासिंहउक्कासितं उक्कासि ॥

अथ खलु भिक्षवो मारो पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाघजातो

1. C °kshavah bo° B °rvidha árya° rvidham áryyaṁ mahásiṁhaṁ viloki°. — 2. C sadyathidaṁ asaṁ° B °daṁ ‖ asaṁvigná vi° BC °kesi |. — 3[a]. BC °kesi |. — 3[b]. BC °kesi |. 3[c]. B °harsho ca° C °harsho vi° BC °kesi |. — 4. BC °siṁhaṁ viloki° C °taṁ viloti |.
6. C °khalu bodhisatvo bhikshavah abhito° B °rvidha árya° C °siṁhaṁvikṛimbhitaṁ vikṛiṁbheti |. — 7. B °dhaṁ áryye mahásiṁhaṁ vikṛimbheti | B °siṁha vijṛimbheti |. — 8. C sadyathidaṁ abhitaṁ ca vijṛistesi | asaṁvignaṁ° B °bhitaṁ ca vijṛimbhesi avignaṁ° BC °gnaṁ ca vijṛimbhesi | saṁ(C ° | asaṁ)trastaṁ ca vijṛimbhesi(C °si | ) trasaṁto ca punah s(B °puna ma)riṁ ca márapa° C °siṁhaṁ vijṛimbhi° jṛistesi | B °mbhesi |. — 10. C evaṁ kha° kshavah bo° siṁhaṁ vijṛimbhi° BC °mbhesi |.
12. C °taṁ ukkáse |. — 13. C °raho mahásiṁhaṁ ukkási°. — 14. C sadyathi° bhitaṁ ukkásitaṁ | asaṁvignaṁ ukkáse | asaṁtrambhaṁ ukkáse acchaṁbhitaṁ ca ukkáse | B °staṁ ca ukkáse acchaṁbhitaṁ ca ukkáse |. — 15. C °kshavah bo° B °sya áryaṁ ma° C °siṁhaṁ u°.
16. C triṁsáhasra° dhátú ye janá çabdam açro° B °tau ye janá sarvaçabdam açro°. — 17. C °kshavah bo° B °tvo ábhi° C °siṁhaṁ ukkásitaṁ ukkáse |. — 19. C °kshavah máro° B °vo mára pápí° C °daumana° ghajáto mahantiṁ caturaṅgasenáṁ° B °raṅginiṁ senáṁ° C °çabdaṁ nirnádam a° B °çabdaṁ nidánam aká°.

महतीं चतुरंगिणीं सेनां सन्नाहयित्वा येन बोधिवृक्षस्तेनोपसंक्रमित्वा बोधिसत्त्वस्य पुरतो स्थित्वा महान्तं घोषं महान्तं शब्दनिनादमकार्षीत् ॥ सद्यथीदं हनथ इमं हरथ इमं निर्हरथ इमं बधथ मारमणा भद्रमस्तु वो ॥ अथ खलु भिक्षवो बोधिसत्त्वो ऽभीतो ऽच्छंभी विगतभयरोमहर्षो सुवर्णवर्णबाहां चीवरातो निर्णामयित्वा जालिना हस्तरत्नेन ताम्रनखेन सुचित्रराजिकेन नानारत्नप्रसेकवर्णेन मृदुना तूलस्पर्शोपमेन अनेककल्पकोटीकुशलमूलसमन्वागतेन दक्षिणेन पाणिना त्रिष्कृत्वो शिरस-मुपरिमार्जे दक्षिणेन पाणिना पर्यंकं परिमार्जयित्वा दक्षिणेन पाणिना पृथि[196b]वीं पराहनति ॥ अथ खलु भिक्षवो बोधिसत्त्वेन पाणिना शीर्षे परामृष्टे दक्षिणेन पाणिना पर्यंके परामृष्टे दक्षिणेन पाणिना पृथिवीयं पराहतायां इयं महापृथिवी गम्भीरभीमरूपं अनुनदे अनुरवे । सद्यथापि नाम भिक्षवो महतीये मागधिकाये कंसपात्रीये गिरिकन्दरगताये शिलापट्टे संपराहताये गम्भीरो भीष्मरूपो घोषो अनुनदे अनुरवे एवमेव भिक्षवो बोधिसत्त्वेन दक्षिणेन पाणिना शिरे परामृष्टे दक्षिणेन पाणिना पर्यंके परामृष्टे दक्षिणेन पाणिना पृथिवीयं पराहताये (इयं महापृथिवी गम्भीरभीमरूपं अनुनदे अनुरवे) ॥ सा मारसेना तावत्सुसमृद्धा तावत्सुसंनद्धा भीता त्रस्ता कंपिता संविग्ना संहृष्टरोमजाता तेन विचरेन्सु तेन विलयेन्सु हस्तिनो पि सानं संसीदेन्सुः अश्वा पि सानं संसीदेन्सुः रथा पि सानं संसीदेन्सुः पदाता पि सानं संसीदेन्सुः प्रहरणा पि सानं संसीदेन्सुः । अपरे हस्तेषु प्रपतेन्सुः

2. C sadyathī° B °daṁ idaṁ haratha imaṁ ni° C °daṁ imaṁ haratha imam haratha | imaṁ nirharatha imaṁ nirharatha | bandhatha bandhatha mā° B °vadha māra ° stu to | . — 3. C °to acchambhi vigataroma° B °cchaṁbhi vi° C °suvarṇavarṇaṁ bā° °sturalapena tā° BC °sucitrarāji° B °ekavarṇena mṛ° C °lpakoṭīkuça° B °gatena dakshiṇena pāṇinā triṣhkṛitvā çi° C °trishkṛitya çi° BC °ryaṅkaṁ(C °ryaṅka) parimārjja(B °rjayi)tvā°.

8. C °kshavaḥ bo° B °tvena pāṇinā çirshe parāmṛishṭhe dakshiṇena paryaṅkena pṛithivyaṁ parāha° C °çirshe parāmṛishṭe dakshiṇena pāṇinā paryaṅke pṛithivīyaṁ parāhateyaṁ i° B °imāṁ mahā° C °thivīyaṁ gambhī° B °de anurave | . — 10. C sadyathīdaṁ nā °kshavaḥ ma °lāpaṭṭasaṁparā° B °mbhīro smarūpāye gho° C °bhīsmarūpo° B °rave | e° C °rave | evaṁm eva bhikshavaḥ bo° BC °çira(B °ro) parāmṛishṭe dakshiṇena pāṇinā paryaṅ(C ° nā yayaṁ )ke parāmṛishṭe dakshiṇe(B °ṇena) pāṇinā pṛithivyaṁ parāhatā(C ° te)yaṁ sa mārasa°.

15. BC °bhītā trastā° C °gnā hṛishṭaromajātena vicaretsuḥ | hasti° C °caretsu tena vilayetsu ha° BC °sino(C ° nā) pi sānaṁ saṁsīdetsuḥ a ° sīdetsuḥ(C ° tsuḥ | ) ra ° sīdetsuḥ (C °tsuḥ | ) padā(B °dātā) pi sā ° sīdetsuḥ pra ° sīdetsuḥ | .

17. BC hasteshu(C ° shu sānaṁ) prapatetsuḥ apare samuddhakā(C ° kānā) prapatetsuḥ apare asu(B °pate apa)ku ° patetsuḥ apare a ° tetsuḥ(B °tsuḥ | ) apare sīmena(C °ṣa) pā ° patetsuḥ apare da ° tetsuḥ | .

अपरे अधोमुखका प्रपतेन्सुः अपरे अपकुब्जका प्रपतेन्सुः अपरे उत्तानका प्रपतेन्सुः अपरे वामेन पार्श्वेन प्रपतेन्सुः अपरे दक्षिणेन पार्श्वेन प्रपतेन्सुः । मारो च पापीमां दुःखी दौर्मनस्यजातो अन्तःशल्यपरिदाघजातो एकमन्ते प्रध्याये काष्ठेन भूमिं विलिखन्तो । श्रमणो मे गौतमो विषयं अतिक्रमिष्यतीति ॥

अथ खलु भिक्षवो बोधिसत्त्वो ऽभीतो ऽच्छंभी विगतभयरोमहर्षो विविक्तमेव कामैर्विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसंपद्य विहरे । सवितर्काणां सविचाराणां व्युपशमादध्यात्मसंप्रसादा चेतसो एकोतिभावादवितर्कमविचारं समाधिजं प्रीतिसुखं द्वितीयं ध्यानं उपसंपद्य विहरे । सप्रीतिविरागादुपेक्षकश्च विहरे स्मृतः संप्रजानं सुखं च काये । यत्तदार्या आचक्षते उपेक्षकः स्मृतिमां सुखविहारी तृतीयं ध्यानं उपसंपद्य विहरे । सो सुखस्य च प्रहाणात्पूर्वसौमनस्यदौर्मनस्ययोरस्तंगमाददुःखासुखमुपेक्षा स्मृतिपरिशुद्धं चतुर्थं ध्यानमुपसंपद्य विहरे ॥

अथ खलु भिक्षवो बोधिसत्त्वो ऽभीतो ऽच्छंभी विगत[197']भयरोमहर्षो रात्र्या पुरिमे यामे दिव्यचक्षुर्ज्ञानदर्शनप्रतिसंस्थाय चित्तमभिनिर्हरे अभिनिर्नामये । स दिव्येन चक्षुषा विशुद्धेनातिक्रान्तमानुष्यकेन सत्त्वां पश्यति च्यवन्तां उपपद्यन्तां सुवर्णां दुर्वर्णां सुगतां दुर्गतां हीनां प्रणीतां यथाकर्मोपगां सर्वां प्रजानाति । इमे भवन्तः सत्त्वा कायदुश्चरितेन समन्वागता वाचादुश्चरितेन समन्वागता मनोदुश्चरितेन समन्वागता आर्याणामपवादका मिथ्यादृष्टिका ते मिथ्यादृष्टिकर्मसमादानहेतोः तद्धेतोस्तत्प्रत्ययात्कायस्य भेदात्परं मरणादपायदुर्गतिविनिपाते नरकेषूपपन्नाः । इमे

2. C māro pā° ḥkhī daumana° BC °antaçalya° ṃlane bhūmiṁ vilikhanto çra°. — 4. C çravaṇo me gauttamo vishayaṁ abhikra°. — 5. C° kahavaḥ bo° kuçalai dharmaiḥ savitarkasavicā° B °rkaṁ savicārair vive° C °saṁvidya°.

7. B savitarkaṁ savicārā° C savitarkkasavicārāṇāṁ vyupaçamād adhyā° B °vyupaçamād adhyā° dā cetasā eko° C °cetasā | eko °rkasavicāraṁ sa° B °rkasavicā°. — 9[1]. C saprītavicā° C saprītavicād upe° re smṛito saṁ°. — 9[2]. BC °sukhasaṁvihārī°. — 10. C so sukhasya prahāṇā duḥkhasya ca pra° BC °prahāṇāt sa° B °t sarvaṁ ca saumanasyadau° C °daumanasyayo° gamā duḥkhā° pekshā smṛitiṁ pari° C °peksha smṛi° C °saṁsadya°.

13. C °kahavaḥ bo° bhayo roma° BC °divyasya caksha° saṁlāpa citta° B °ttam abhinirhare a°. — 15. B °abhyakaṁ sa° BC °cyavantāṁ upa° C °dyantā suva° BC °duvarṇṇāṁ suga° C °rmopagatāṁ sa° jānāti | B °jānanti | .

16. C °bhagavanto satvāṁ kā° BC °kāya(C° ye)duçcaritena samanvāgatā vāyāduçca° C °dakā mithyādṛishṭikarma° B °dakā mithyādṛishṭimithyādṛishṭikarma° BC° tos tanpratya° C °tyayā kāyasya° rgatiṁ vi° BC °nipātaṁ nara° C °shūpapannaḥ. — 19. C° r bhagavato kā° shaucaritena samatvāgatā | mano° BC °dakāḥ saṁmyagdṛishṭikās te saṁmyadṛishṭikarma° C °rmadharmasamā° B °ddhetos tanpratya° C °tyayā kāya° BC °t svargaṁ kāyaṁ de° C °shūpapannā.

पुनर्भवन्तः सत्वाः कायसुचरितेन समन्वागता वाचासुचरितेन समन्वागता मनोसुचरितेन समन्वागता आर्याणामनपवादकाः सम्यग्दृष्टिकाः सम्यग्दृष्टिकर्मसमादानहेतोस्तद्धेतोस्तत्प्रत्ययात्कायस्य भेदात्परं मरणात्स्वर्गकाये देवेषूपपन्नाः । इति दिव्येन चक्षुषा विशुद्धेनातिक्रान्तमानुष्यकेन सत्वां पश्यति च्यवन्तामुपपद्यन्तां सुवर्णां दुर्वर्णां सुगतां दुर्गतां हीनां प्रणीतां यथाकर्मोपगां सत्वां जानाति ॥

अथ खलु भिक्षवः बोधिसत्वो अभीतो अच्छम्भी विगतभयरोमहर्षो रात्र्या मध्यमे यामे पूर्वनिवासानुस्मृतिज्ञानाये चित्तमभिनिर्हरे अभिनिर्नामयेसि । सो नेकविधं पूर्वनिवासं समनुस्मरे । सय्यथीदं एकां वा जातिं द्वे वा जातीं त्रीणि वा जाती चत्वारि वा जातीं पंच वा जातीं दश वा जातीं विंशं वा जातीं त्रिंशं वा जातीं पंचाशं वा जातीं शतं वा जातीं सहस्रं वा जातीं शतसहस्रं वा जातीं संवर्तकल्पां वा विवर्तकल्पं वा संवर्तविवर्तकल्पं वा अनेकान्यपि संवर्तकल्पां अनेकान्यपि विवर्तकल्पां अनेकान्यपि संवर्तविवर्तकल्पां अमुत्राहमासि एवंनामो एवंगोत्रो एवंजात्यो एवमाहारो एवमायुःपर्यन्तो एवंसुखदुःखप्रतिसंवेदी इति साकारं सोद्देशं अनेकविधं पूर्वनिवासमनुस्मरति ॥

अथ खलु भिक्षवो बोधिसत्वो अभीतो अच्छम्भी विगतभयरोमहर्षो रात्र्या पश्चिमे यामे [197b] अरुणोद्घाटसमये नन्दीमुखायां रजन्यां यत्किंचित्पुरुषेण सत्पुरुषेण महापुरुषेण पुरुषर्षभेण पुरुषद्रव्येण पुरुषशूरेण पुरुषवीरेण पुरुषनागेन पुरुषसिंहेन पुरुषपद्मेन पुरुषकुमुदेन पुरुषपुण्डरीकेन पुरुषाजानेयेन पुरुषधौरेयेण अनुत्तरेण पुरुषदम्यसारथिना निष्क्रान्तेन विक्रान्तेन पराक्रान्तेन अर्थिकेन अप्र-

3. C °satvân paçya° B °çyati vyavantâ° BC °durarṇṇâṁ suga° BC °hiṇâm prâ° C °gâṁ satvâṁ jânanti ‖.

6. B °rnâmayetsi |. — 8. C sadyathi° B °daṁ ‖ ekaṁ vâ jâtiṁ° BC °dve vâ jâtiṁ tri(C °triṁ)ṇi vâ jâtiṁ catvâriṁ vâ jâtiṁ pañca(C ° caṁ) vâ jâtiṁ da° C °daçaṁ vâ jâtiṁ viṁ° BC °viṁçaṁ vâ jâtiṁ triṁ° C °triṁçaṁ vâ jâtiṁ catvâriṁçaṁ vâ jâtiṁ pañcâ° B °triṁçaṁ vâ jâtiṁ pañcâ° BC °câçaṁ vâ jâtiṁ(C ° tiṁ) çataṁ vâ jâti(C ° tiṁ) sahasraṁ vâ jâtiṁ(C ° tiṁ) çatasahasraṁ vâ jâtiṁ(C °tiṁ | ) saṁvartakalpâṁ vâ vivartakalpâṁ vâ (C °vâ anekânyapi) saṁvartavivartakalpâṁ(C ° lpâ) vâ anekâ(C ° kâṁ)nyapi saṁvartâni anekânyapi vivartâni anekâ(C ° kâṁ)nyapi saṁvartavivarta(B ° rtâ)kalpâṁ(C ° lpaṁ) amutrâham asmiṁ | evaṁnâ ° saṁvedi iti(C ° ti | ) sâ° C ° sâkâlaṁ so ° dhaṁ apûrvanivâsaṁ samanu° B °nivâsaṁm anu°.

15. C °kâbhaṁ bo° B °dhisa abhî° C °ruṇoghâṭakâlasamaye° B °dravyeṇa dhuruhaçûlena purushavî° C °siṁhena purushapadmena purushakuma ° jâneṇa purushadhaurena anu ° thinâtikrântena vikrântena parâkrantena arthi° BC °rthikena gacchanti | ekena apra(C ° na pramâ)ttaṁ° B °vyupakrishṭhena viharante ga° BC °prâptavyaṁ boddhavyaṁ abhisaṁbodha(C °bodha)vyaṁ | sarva ° kâryâ(B °yâ | ) anu°.

मत्तेन आतापिना प्रहितात्मेन अपकृष्टेन विहरन्तेन गतिमतानुस्मृतिधृतिमता बुद्धिमता प्रज्ञामता सर्वज्ञो सर्वगताये ज्ञातव्यं प्राप्तव्यं बोद्धव्यं अभिसंबोद्धव्यं सर्वं तदेकचित्तक्षणसमायुक्तया प्रज्ञया अनुत्तरां सम्यक्संबोधिमभिसंबुद्धे । यद्यथीदं इदं दुःखं अयं दुःखसमुदयो अयं दुःखनिरोधो अयं दुःखनिरोधगामिनी प्रतिपत् । इमे आस्रवा इमो आस्रवसमुदयो अयं आस्रवनिरोधो अयं आस्रवनिरोधगामिनी प्रतिपत् । इह आस्रवा अशेषा निरवशेषा निरुध्यन्ति व्युपशाम्यन्ति प्रहाणमस्तं गच्छन्ति । यदिदं इमस्य सतो इदं भवति इमस्य असतो इदं न भवति । इमस्योत्पादादिदमुत्पद्यते । इमस्य निरोधादिदं निरुध्यति इति पि । अविद्याप्रत्ययाः संस्काराः संस्कारप्रत्ययं विज्ञानं विज्ञानप्रत्ययं नामरूपं नामरूपप्रत्ययं षडायतनं षडायतनप्रत्ययं स्पर्शः स्पर्शप्रत्यया वेदना वेदनाप्रत्यया तृष्णा तृष्णाप्रत्ययमुपादानं उपादानप्रत्ययो भवो भवप्रत्यया जाति जातिप्रत्यया जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासा भवन्ति । एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति । इत्यपि अविद्यानिरोधात् संस्कारनिरोधः संस्कारनिरोधाद्विज्ञाननिरोधः विज्ञाननिरोधात् नामरूपनिरोधः नामरूपनिरोधात् षडायतननिरोधः षडायतननिरोधात्स्पर्शनिरोधः स्पर्शनिरोधाद्वेदनानिरोधः वेदनानिरोधात्तृष्णानिरोधः तृष्णानिरोधादुपादाननिरोधः उपादाननिरोधाद्भवनिरोधः भवनिरोधाज्जातिनिरोधः जातिनिरोधाज्जरामरणशोकप[१९८a]रिदेवदुःखदौर्मनस्योपायासा निरुध्यन्ते । एवमस्य केवलस्य महतो दुःखस्कन्धस्य निरोधो भवति ॥ सर्वसंस्कारा अनित्याः सर्वसंस्कारा दुःखा सर्वधर्मा अनात्मानः ॥ एतं शान्तं एतं प्रणीतं एतं यथावदेतं अविपरीतं यमिदं सर्वोपधिप्रतिनिःसर्गो सर्वसंस्कारसमथा धर्मोपच्छेदो तृष्णाक्षयो विरागो निरोधो निर्वाणं ॥

3. C adyathi° B °thidam || idam duḥ° C °idam duḥkham ayam duḥkhasamu° B °pratipad ime â°. — 5. C ime âçra ime âçravasamu° B ime âçravâ ime âçravâ ime âçravasamu°.

6. B °çravo açeshâ nirava° C °çravâto açeshâ nirava °cchati | B °cchanti yad i°. — 7². C yam idam idam asya santo bhavati imasya asanto idam na°. — 8². BC °pi avi°. — 8³. C avidyâpratyayâḥ saṁskârâ saṁskârapratyayaṁ vijñânaṁ vijñânapratyayaṁ | nâmarûpaṁ nâmarûpaṁ pratyayaṁ | sha ° âyatanaṁ pratyayaṁ | sparça sparçapratyayaṁ | vedanâ vedanaṁ pratyayaṁ | tṛishṇâ tṛishṇaṁ pratyayaṁ | upadâ ° dânaṁ pratyayaṁ | bha ° vapratyayaṁ | jâti jâtipratyayaṁ | ja ° daurmanasyaupâyâso bhavanti | .

12. C evaṁm asya ke° B °duḥkandha°. — 13. C °t shaḍâyatananirodhoḥ sha ° ḥ vedanânirodhâ tṛishṇânirodhaḥ tṛishṇânirodhâd vedanânirodhaḥ vedanânirodhâd u° BC °çokaparidevaduḥkha° C °khadaurmanasyo°.

18². BC °ti sa°. — 18³. BC sarvasaṁskâro ani° B °saṁskârâ duḥ° C °skârâḥ khâ sarvadha ° tmâno | . — 19. B °avirîtaṁ° C °ritaṁ yad idaṁ sarvo° B °rvasaṁskâ° BC °rasamatho dha° B °cchedatṛi° C °cchedaḥ tṛi ° dho nirvâṇam | .

रत्नाग्रीव च दिशा सर्वा ताय प्रभासिषु ॥
नीला च मृदुका केशा कालिन्दिकसादृशा ।
सर्वे प्रदक्षिणावर्ता तथा लोकहितो भवां ॥
उष्णीषशीर्षा ते नाथा ईदृशा यादृशो भवां ।
अनुलोकितमूर्धानि सुरेहि असुरेहि च ॥
महाप्रभा हि ते बुद्धा अतिगृह्णन्ति रश्मिभिः ।
केतुराजेन चन्द्रो व प्रभाय अतिगृह्यते ॥
एतां च अन्या च पश्चित्वा निमित्ता लक्षणानि च ।
सर्वाणि बोधिसत्त्वस्य इदं वचनमब्रवीत् ॥
यथा ते देवपुत्रा ते पूजनार्थाय उत्सृताः ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
अजितां जालिनीं तृष्णां भवनेत्रीं समाहितः [205b] ।
प्रज्ञाशस्त्रं गृहीत्वान छेत्स्यसे मारबन्धनं ॥
अद्य त्वं सर्वतो शैलं क्लेशपरिवेष्टितं ।
विधुनिष्यसि रागाग्निं बोधिं प्राप्तो नरोत्तम ॥
संघाटीपटं पात्रं च चीवरस्य वर्णता तथा ।
यथा मे दृष्टा नाथानां तथा च लोकहिता तव ॥
सर्वे प्रदक्षिणावर्ता एदृशा भोन्ति पुद्गला ।
यथा व्रजसि सिंहो व अद्य बुद्धो भविष्यसि ॥
शैलोपमं अप्रकम्प्यं समाधिं व जिनोपमं ।

1. C ratnâ agni ca (ou °va) odi° B °gniva odi ° rvâ tâm ca pra° C °rvâ tâm prabhâsishu diçâ ‖ . — 2. C °çâ kâlindi°. — 3. BC °hitâ bhavet | . — 4. C ushṇirshe te ya° B °çirshe te ya ° çâ yâdṛiçâ bhavet | C °yâdṛiçâ bhavâu anavaloki°. — 5. B anuloki° C °murddhi surehi a°.

6. C °bhâ te buddhâç ca a° BC °abhigṛihna°. — 7. B °adro pra° C °adro ca a °prabhoyaṁ° BC °yaṁ abhigṛihnishu | . — 8. C etâm anyâç ca paçyi° B °paçcitvâ ni° C °nirmitâ laṁbanâni ca | B °itâ nâlaṁbanâni ca | . — 9. C sarvâdhibodhi°. — 10. B yadâ ca te de° C yadâ ca devaputro pâ° B °janâthâya utsukâḥ | C °utsargâḥ.

11. C °vîre a°. — 12. C °triṇi ca yaṁ prabhâṁ | . — 13. BC °gṛihîtvâ ca cche° C °tsyase mâ°. — 15. B vidhûni° C °dhunishyasi° BC °si rogâgniṁ° C °bodhiprâpte narottame | B °ttamaṁ | .

16. B °ṭipaṭapâtraṁ° C °ṭipatrapâtraṁ° BC °rṇṇano yathâ | . — 17. C evaṁ me dṛi° BC °dṛishṭvâ nâ° C °tathâ nâṁ tathâ lohita varṇṇatâ | B °lohitâ tava | . — 18. C sarvapra ° nti puṁgalâ | B °nti puṅga(ou °dga)le | . — 19. C °vrajesi siṁ° BC °ho ca adya°. — 20. B çailopiyaṁ aprakaṁpiyaṁ sa° C °prakraṁpiyaṁ sâ°.

बोधिमण्डे निषिद्दित्वान दृढवीर्यः समारभे ॥
स तस्य वचनं श्रुत्वा कालनागस्य भाषितं ।
तुष्टो उदग्रसुमनो बोधिमूलमुपागमत् ॥

श्रुत्वान अतुलं घोषं कालनागो महाबलो ।
बोधिसत्वस्य वेगेन भवनातो समुद्गतो ॥
अंजलीं प्रगृहीत्वान दशपूर्वागुणीनथा ।
अभिस्तवे बुद्धवीरं बोधिमण्डं व्रजन्तकं ॥
यथा मृदु इमे वाता वायिष्यन्ति सुखं सदा ।
सुरभिमनोज्ञगन्धा नात्युष्णा नातिशीतलाः ॥
यथा च कुसुमवृष्टिं प्रवर्षेन्तु इमं देवता ।
सुगत तव रजत्वं भेष्यति द्विपदोत्तम ॥
प्रदक्षिणावर्तां मार्गं तुष्टो हृष्टो प्रमोदितो ।
प्रीतिमना उद्ग्रो च सुदृष्टमुखी पि निष्काम ॥
यथापि तूर्यसहस्रं संप्रघुष्ट उपरि नभसि स्फुटं देवताहि ।
हृष्टप्रमुदितचित्तविशज्जातो भविष्यसि बुद्धो विशिष्टो सर्वलोके ॥
यथा च प्रभा न भाति अन्य कांचिदुपरिरविमाला कृता च जिह्मवर्णाः ।
यथा प्रचलते भूमि षड्विकारं भविष्यसि अद्य अतुल्यो दक्षिणीयो ॥
यथ च ब्राह्मणसर्वराशि भीष्म मारबलं भंजित्व हृष्टचित्ता ।
छत्रध्वजपताका च धारयन्ति भविष्यसि बुद्धो न मह्य कांक्षा ॥

1. C °vîryya sa° B °bhavet | . — 2. C °tasya vacanaṁ çrutvâ kâlo nâmasya bhâ°. — 5. BC °balaṁ | .

6. B añjaliṁ pra° guli ta°. — 7. BC °ntaká | . — 8. BC yathâ prithu ime vâtâ° C °tâ vâcishyanti ime yathâ | . — 9. B °sugandhânâṁ tûshṇi nâti° C °ndhânâṁ tûshṇi nâhiti çîtalâ | . — 10. BC °rshetsu i° B °iva de° C °vatâṁ | .

11. B sugatavaro rahatvaṁ bheshyasi dvi° C sugatavardhaṁ bheshyâmi bhavanti dvi° BC °ttamaṁ | . — 12. B °kshiṇamârga tushṭo pramuditâ ca pri° C °kshiṇaṁ mârsha tushṭâ pramuditâ. — 13. B °manâ | u° C °manâ pi ca | u° BC °dagrâ ca su° C °khaṁ muñcâmi nikriye B °khaṁ muñcâpi kirkiye tûrya°. — 14. C tûrya ° sraṁ praghu° B °sraṁ | sapra° BC °nabhaṁ sphu° vatebi | . — 15. BC °gajâtâ bhavishyasi || (C °shyati | ) sarbu ° loke yathâ°.

16. B °prabhâ na bhâyi | anya° BC °jihmabalâḥ | . — 17. BC °pracarate bhû° C °shyati | adya atulâṁ dakshiṇiya B °shyasi | adya atulya dakshiṇeya ya°. — 18. BC yathâ ca bhrâ° BC °bhrâhmaṇaṁ sahagaṇasaṁghaṁ bhaṁ(C °bha)ji ° ttâ ccha°. — 19. B cchatraṁdhva° BC °tâkâ dhâ° C °yanti | buddho mama asti° B °shyasi | bu°.

यथा च मधुरं दुन्दुभी नदन्ति गगनतलं स्फुटं सर्वसम्बरेहि ।
यथा च कुसुमा वर्षे देवसंघो भविष्यसि लोके सदेवके स्वयंभूः ॥
यथा च करिय अंजलिं नमस्यि अभिस्तवे देवसहस्र हृष्टचित्ता ।
कनकप्रभो विशिष्टो दक्षिणीयो भविष्यसि बुद्धो नराण अग्रवादी ॥

अथ खलु बोधिसत्वो येन वृक्षमूलं तेनोपसंक्रमित्वा तेन खलु पुनः समयेन सर्वावन्तो बोधिमण्डो घोसकपट्टदामकलापो अभूषि । उच्छ्रितध्वजपताको छत्रकोटिसमलंकृतो रत्नसूत्रविचित्रितो धूपितधूपनो रतनवृक्ष[206a]परिवृतो चीवरसंस्तृतसंस्तृतो चन्दनचूर्णअभ्योकीर्णो रत्नोघविचित्रो ॥ तेन खलु पुनः समयेन अनेकानि देवशतसहस्राणि उपरि अन्तरीक्षे प्रतिष्ठिहित्वा धूपनपरिगृहीता बोधिसत्वं नमस्यन्ति । छत्रध्वजपताकपरिगृहीता बोधिसत्वं नमस्यन्ति । दिव्यउत्पलपद्मकुमुदपुण्डरीकपरिगृहीता नमस्यन्ति बोधिसत्वं । दिव्यचन्दनचूर्णपरिगृहीता बोधिसत्वं नमस्यन्ति । दिव्यरत्नचूर्णपरिगृहीता दिव्यरत्नपुष्पपरिगृहीता अनिमिषं प्रेक्षमाणा बोधिसत्वं नमस्यन्ति ॥ तत्र अन्या देवता सुवर्णमयं बोधिवृक्षं संजानन्ति । यथा स्वकाये अधिमुक्तीये अन्ये देवा रूप्यमयं बोधिवृक्षं संजानन्ति । अन्ये देवा वैडूर्यमयं बोधिवृक्षं संजानन्ति । अन्ये देवा स्फटिकमयं बोधिवृक्षं संजानन्ति । अन्ये देवा अश्मगर्भमयं बोधिवृक्षं संजानन्ति । अन्ये देवा सप्तरत्नमयं बोधिवृक्षं संजानन्ति । अन्ये देवा शतसहस्ररत्नमयं बोधिवृक्षं संजानन्ति । यथापीदं स्वकस्वकाये अधिमुक्तीये अन्ये देवा लोहितचन्दनस्य बोधिवृक्षं संजानन्ति । अन्ये देवा अगुरुचन्दनस्य बोधिवृक्षं संजानन्ति । अन्ये देवा

1. C °dhura dundubhi nadanti gagaṇata° BC °tala sphu° C °sphuṭa sarvahi amba° B °sarvaṁ amba°. — 2. BC °suma varsha(C °raha) de° B °ṣi | lo° ke svayaṁbhūḥ ya°. — 3. C °riyaṁ aṁja° smiṁ asti tad eva saha°. — 4. BC kanakanibhaṁ viçishṭaṁ dakshiṇeyaṁ bha° B °ṣi | bu° C °rāṇāṁ a°. — 5. C °naḥ samayana sarvāvanto bodhimaṇḍo oçakta°.

6. B °patākacchatrako sama° C °cchatrakoṭisama° travicitro dhūpi° panaṁ ratnavṛiksha° rasaṁstṛito saṁstṛitaḥ canda° BC °tnogho vicitro | . — 8. C °gṛihītā bo° B °gṛihīto bodhi°. — 10[1]. BC °patākā pari°. — 10[2]. BC °vya utparapadu° C °hītā bodhisatva namasyanti | .

11. BC divyaṁ canda° ṇi di°. — 12. BC divyaṁ ratna° C °cūrṇaṁparigṛihītā bodhisatva namasyanti | divyaratnacūrṇaparigṛihītā ani° kshamāṇā bo° B °kshamāṇā bo°. — 13. B °anyado° C °anye de°. — 14. C °muktiye anye devāḥ rū°. — 15[1]. C °devāḥ vai°. — 15[2]. C °yaṁ de bo°.

16[1]. C °vṛiksha saṁjā°. — 16[2]. BC °vṛiksha saṁ°. — 18. BC °kāye dhimu° C °muktiye | anye° B °kāye | anye°. — 19[2]. B °sya vanditaratanamaya bo° C °sya vanditanamaye bo°.

परस्परस्य वाञ्छितरत्नमयं बोधिवृक्षं संजानन्ति । अन्ये देवा पीतचन्दनस्य बोधिवृक्षं संजानन्ति । अन्ये देवा सिंहचन्दनस्य बोधिवृक्षं संजानन्ति । अन्ये देवा रसचन्दनस्य बोधिवृक्षं संजानन्ति ॥ यथापीदं सकलकाये अधिमुक्तीये अन्ये देवा गिरिसारचन्दनस्य बोधिवृक्षं संजानन्ति । अन्ये देवा दिव्यागुरुचन्दनस्य बोधिवृक्षं संजानन्ति । अन्ये देवा मणिरत्नमयं बोधिवृक्षं संजानन्ति । अन्ये देवा सर्वरत्नालंकृतं बोधिवृक्षं संजानन्ति । अन्ये देवा मणिरत्नविचित्रितं बोधिवृक्षं संजानन्ति । अन्ये देवा दिव्यनीलवैडूर्यालंकृतं बोधिवृक्षं संजानन्ति । अन्ये देवा मुसारगल्वमणिविचित्रितं बोधिवृक्षं संजानन्ति । अन्ये देवा अश्मगर्भमणिरत्नविचित्रितं बोधिवृक्षं संजानन्ति । अन्ये देवा हस्तिगर्भमणिरत्नविचित्रितं बोधिवृक्षं संजानन्ति । अन्ये देवा . . . . . मणिरत्नविचित्रं बोधि[२०६b]वृक्षं संजानन्ति । अन्ये देवाः सुप्रभासमणिरत्नविचित्रितं बोधिवृक्षं संजानन्ति । अन्ये देवा अमृताश्मगर्भेहि मणिरत्नेहि समलंकृतं बोधिवृक्षं संजानन्ति । अन्ये देवा समन्तचन्द्रेहि समलंकृतं बोधिवृक्षं संजानन्ति । अन्ये देवास्सुचन्द्रेहि समलंकृतं बोधिवृक्षं संजानन्ति । अन्ये देवास्सूर्यावभासेहि समलंकृतं बोधिवृक्षं संजानन्ति । अन्ये देवाः स्फटिकविचित्रं अन्ये देवाः सूर्यविकासेहि समलंकृतं । अन्ये देवाः चन्द्रावभासेहि समलंकृतं । अन्ये देवा ज्योतिप्रभासेहि समलंकृतं । अन्ये देवा विद्युप्रभासेहि समलंकृतं । अन्ये देवाः समन्तालोकेहि मणिरत्नेहि समलंकृतं । अन्ये देवा मुक्ताप्रभेहि मणिरत्नेहि समलंकृतं । अन्ये देवा अप्रतिहतप्रभेहि मणिरत्नेहि समलंकृतं बोधिवृक्षं संजानन्ति । अन्ये देवा रतनसमुच्छ्रयसमलंकृतं । अन्ये देवाः सर्वलोकाग्रमूलेहि मणिरत्नेहि समलंकृतं । अन्ये देवाः शक्राभिलग्नेहि मणिरत्नेहि समलंकृतं । अन्ये देवा रत्नपत्रेहि सम-

2¹. C °ndanamaya bo°. — 3. C °muktiye | anye° B °ktiye || anya de° C °vṛiksha saṁ° B °saṁjānti | . — 4. C °vṛiksha saṁ°. — 5¹. B anya de°. — 5². BC °kṛita bo°.

6. C °vṛiksha saṁ°. — 7¹. C °vṛiksha saṁ°. — 7². B °devā suśra° C °musāgalva° citraṁ bo°. — 8. B anya de° C °ṇiratnavi°. — 9. C °ṇiratnavi° — 10. C °ṇiratnavicitritaṁ bo°.

11. B anya de° C °devā su° ṇiratnavi° B °citritaṁ bo°. — 12¹. B °mṛitāçcagarbhe° C °mṛitāçvagarbhe° ratnehi°. — 12². B aṁnye° C °samantehi candre°. — 13. C °devā sucandre° kṛitehi bo°. — 14. B °ṁ anye°. — 15. C °devā sphaṭikavicitraṁ samalaṁkṛitaṁ bodhivṛikshaṁ saṁjānanti | anye devāḥ sū°.

16¹. C °devāḥ jyo° taṁ | anye devāḥ sama°. — 16². (omis dans C). — 17. B anya de°. — 18¹. C °devāḥ mu° BC °muktapra°. — 18². C °bhehi ratnehi sa°. — 19. B anya de° C °devāḥ samucchriyasama°. — 20. B anya de° BC °lokagrasatehi maṇiratane(C °niratne)hi sa°.

21¹. B °çakrābhilagne° C °ratnehi sa° B °taṁ anye°. — 21². C °devāḥ ra° B °tnapattihi sama° BC °taṁ anye°.

लंकृतं । अन्ये देवा उरगगर्भमणिरतनेहि समलंकृतं । अन्ये चन्दनप्रभेहि समलंकृतं । अन्ये लोहितांकेहि समलंकृतं । अन्ये गजपतीहि मणिरतनेहि समलंकृतं । अन्ये महेश्वरदत्तेहि मणिरतनेहि समलंकृतं । अन्ये रसकेहि समलंकृतं । अन्ये गोमेदकेहि मणिरतनेहि समलंकृतं । अन्ये देवा शशकेहि मणिरतनेहि समलंकृतं बोधिवृक्षं संजानन्ति । अन्ये लालाटिकेहि मणिरतनेहि समलंकृतं । अन्ये शिरिगर्भेहि मणिरतनेहि अन्ये तालिकेहि मणीहि एतेहि च अन्येहि च दिव्येहि मणिरतनेहि समलंकृतं बोधिवृक्षं संजानन्ति ॥

येषां देवानां ततोनिदानं कुशलमूलो परिपाचिष्यति अनुत्तराये सम्यक्संबुद्धाये ते यथाकुशलमूलेहि बोधिवृक्षं संजानिंसुः । नीलमुक्ताहारेहि लोहितमुक्ताहारेहि श्वेतमुक्ताहारेहि काण्ठिकेहि सुवर्णसूत्रेहि कुण्डलेहि मुद्रिकाहि परिहारकेहि वलयकेहि नूपुरेहि वेष्टनकेहि मुद्राहस्तकेहि आवापकेहि रतनदामकेहि पट्टदामकेहि पुष्पदाम[207]केहि सुवर्णकेयूरेहि रत्नहारेहि रुचकहारेहि मन्दारवदामेहि हंसदामेहि सिंहलताहि वज्जिरकारेहि स्वस्तिकेहि एतेहि चान्येहि च दिव्येहि आभरणेहि समलंकृतं बोधिवृक्षं संजानिंसुः ॥ येषां बोधिवृक्षं प्रविशित्वा कुशलमूलानि जायन्ति ते देवाः स्वलंकृतं बोधिवृक्षं संजानन्ति । अन्ये एतेहि चान्येहि च यथापरिकीर्तितेहि अलंकारेहि बोधिवृक्षं समलंकृतं संजानन्ति ॥ तत्र केचिद्देवा योजनं उच्चत्वेन बोधिवृक्षं संजानन्ति । अन्ये देवाः पंचयोजनमुच्चत्वेन । अन्ये दशयोजनमुच्चत्वेन ।

1[1]. C °devāḥ uragarbhamaṇihi sa° B °uragarbha°. — 1[2]. C anye devāḥ canda°. — 2[1]. C anye devāḥ lohitikehi sama°. — 2[2]. anye devāḥ gajapatihi maṇiratnehi sa°. — 3[1]. C anye devāḥ mahe° ttehi sama°. — 3[2]. C anye devāḥ ra°. — 4[1]. C anye devāḥ go° BC °gomasake° C °kehi ratnehi sa°. — 4[2]. C °devāḥ çaçakehi maṇiratnehi sa°. — 5[1]. C anye he vā (?) lālaṭake maṇiratnehi sa° B | anye lāṭṭikehi maṇi°. — 5[2]. C anye devāḥ çirigabhehi maṇiratanehi | anye devā tālikehi maṇihi ratnehi etehi cānyehi ca divyehi maṇiratnehi samalaṃ° B °rbhehi maṇiratanehi | anye tānikehi maṇihi ca etehi anye ca di°.

8. C °to kuçalamūlo nidānaṃ paripācishya° BC °shyati | anuttarāye saṃmya° C °ddhāye yathākuçalehi bo° jānatsuḥ | B °natsuḥ |. — 9. BC nīlamuktahārehi lo° C °hitamuktāhārehi çve° B °kaṇṭhamishkebhi su° trehi kuṇḍikehi mudri° C °kuṇḍikehi mudri° hi nūpūrehi jaṃstarakehi mudra° B °hārakehi calaya° purehi yashṭarakehi mudraha° BC °stakehi ratana(C °tna)dama(B °maka)hi paṭṭa° C °ṭṭadāmehi pushpadāmehi suvarṇṇavāṭakehi ratnadāmehi mandāravadāmehi rucakadāmehi haṃsadāmehi siṃharatāvajirakāpurehi sva° B °rupakayū° hi haṃsadārehi siṃ° jinakarehi sva° C °cānyehi ca yathāparikīrtitehi ca di° B °vyehi ca ābha° BC °jānetsuḥ |.

14. B °lāni yāyanti te de° C °devā endāṃ° kāla saṃ°. — 15. C °cānyehi yathā° BC °rttitāhi alaṃ°.

16. C tatra devā kecid yojanam ucca° nti | anye devā dviyojanatriyojanam uccatvena bodhivṛkshaṃ saṃjānanti | anye devā caturyojanam uccatvena bodhivṛkshaṃ saṃjānanti |. — 17[1]. B °sāḥ yaṃcayo°. — 17[2]. C anye devāḥ daça°.

अन्ये विंशयोजनमुच्चत्वेन । अन्ये त्रिंशयोजनमुच्चत्वेन । अन्ये चत्वारिंशयोजनमुच्चत्वेन । अन्ये देवा पंचाशयोजनमुच्चत्वेन बोधिवृक्षं संजानन्ति । अन्ये योजनशतमुच्चत्वेन बोधिवृक्षं संजानन्ति । यथास्वकस्वकेन स्थानेन बोधिवृक्षमुच्चत्वेन संजानन्ति ॥ सन्ति देवा योजनसहस्रमुच्चत्वेन बोधिवृक्षं संजानन्ति । सन्ति देवा दीर्घायुष्का पुरिमजिनकृताधिकारा योजनशतसहस्रमुच्चत्वेन बोधिवृक्षं संजानन्ति । सन्ति देवपुत्रा अभिसंजातकुशलमूलनिर्याता यावद्भवाग्रमुच्चत्वेन बोधिवृक्षं संजानन्ति ॥ तत्र केचिद्देवा सर्वरत्ननिर्यूहं सिंहासनं बोधिवृक्षमूले अद्राक्षुः । दिव्यं बहुयोजनमुच्चत्वेन दिव्यदुष्यसंस्तृतं रत्नजालसंछन्नं किङ्किणीजालसमलंकृतं । अन्ये देवा योजनशतसहस्रमुच्चत्वेन सिंहासनमद्राक्षुः । अन्ये देवा योजनसहस्रमुच्चत्वेन सिंहासनमद्राक्षुः । अन्ये देवा अर्धतृतीययोजनशतानि उच्चत्वेन सिंहासनमद्राक्षुः । अन्ये देवा द्वे योजनशतानि उच्चत्वेन सिंहासनमद्राक्षुः । अन्ये देवा योजनशतमुच्चत्वेन सिंहासनमद्राक्षुः । अन्ये देवा पंचाशयोजनानि उच्चत्वेन सिंहासनमद्राक्षुः । अन्ये देवा चत्वारिंशयोजनानि उच्चत्वेन सिंहासनमद्राक्षुः । अन्ये देवा त्रिंशयोजनानि उच्चत्वेन सिंहासनमद्राक्षुः । अन्ये देवा विंशयोजनानि उच्चत्वेन सिंहासनमद्राक्षुः । अन्ये देवा दशयोजनानि उच्चत्वेन सिंहासनमद्राक्षुः । अन्ये देवा चतुर्योजनानि उच्चत्वेन सिंहासनमद्राक्षुः । अन्ये देवा त्रियोजनमुच्चत्वेन सिंहासनमद्राक्षुः । अन्ये देवा द्वियोज-

1¹. C °nye devāḥ viṁçadyoja° B °tvena anye°. — 1². C °nye devā triṁça°. — 1³ C °nye devāç catvāriṁçadyoja° B °tvena bodhi°. — 2¹. C °tvenaḥ | bo°. — 2². C °nye devāḥ çatayojanam ucca°. — 3. BC °vṛkshaṁ u° B °ccatvā saṁ°. — 4¹. C °devāḥ jana° B °vā jana° C °vṛksha saṁ°. — 4². C °devāḥ dī° B °dhikā yo°.

6. C °vāgra paryantam ucca°. — 7. C °d devāḥ sarvaratnaniryyātaṁ° B °niryātaṁ° BC °çetsuḥ |. — 8. C °janasahasram ucca° C °dushyasaṁstṛitaṁ ratnajālaṁ saṁchaṁ° B °tanajālaṁ saṁchannaṁ kiṅkaṇijālasamalaṁ° C °nnaṁ kiṅkiṇikajālasamalaṁ°. — 9¹. C °devāḥ yojanasaha° BC °çetsuḥ |. — 9². C °devāḥ yojanaçatasaha° BC °çetsuḥ |. — 10. B anya de° C °devāḥ a° BC °aḍḍhātiyojana° C °çetsuḥ B °çetsu a°.

11. B anya de° C °devāḥ dve° B °çatānim ucca° BC °çetsuḥ |. — 12¹. B anya de° C °devāḥ triyo° °çetsuḥ | B °çetsuḥ a°. — 12². C °devāḥ pañcāṁçayojanaçatam ucca° B °nānim ucca° °çetsuḥ a° C °çetsuḥ |. — 13. B anya devā° C °devāḥ catvā° °janam ucca° B °janaçatāni u° °ddarçetsuḥ a° C °ddarçetsuḥ |. — 14. B anya de° C °devāḥ triṁ° BC °çetsuḥ |. — 15¹. B anya de° C °devāḥ viṁ° °uccasana siṁ° B °hāsanānim addaçetsuḥ a° C °çetsuḥ |. — 15². B anya de° C °devāḥ da° B °janaçatāni ucca° °sanānim a° BC °çetsuḥ |.

16. C °devāḥ ca° °tvenam adda° | B °hāsanāni uccatvena siṁhāsanānim adda° BC °çetsuḥ anye(B °nya) devā(C °vās) triṁçadyojanāni uccatve(B °tvena uccatve[a07°])na siṁhāsanam(B °sanāni)m addaçetsuḥ |. — 17¹. B anya de° C °vās triyo° °çetsuḥ | B °çetsuḥ a°. — 17². B anya devā triyojanānim ucca° C °devāḥ dviyojanaṁ ucca° °çetsuḥ | B °çetsuḥ a°.

नानि उच्चत्वेन सिंहासनमदृशेत्सुः । अन्ये देवा योजनमुच्चत्वेन सिंहासनमदृशेत्सुः । अन्ये देवा त्रिक्रोशमुच्चत्वेन सिंहासनमदृशेत्सुः । अन्ये देवा द्विक्रोशमुच्चत्वेन सिंहासनमदृशेत्सुः । अन्ये देवा क्रोशमुच्चत्वेन सिंहासनमदृशेत्सुः । अन्ये देवा सप्ततालमुच्चत्वेन सिंहासनमदृशेत्सुः । अन्ये देवा षट्तालमुच्चत्वेन अन्ये देवा पंचतालं अन्ये देवा चतुस्तालं अन्ये देवा त्रितालं अन्ये देवा द्वितालं अन्ये देवा तालमात्रं बोधिवृक्षस्य मूले सिंहासनमदृशेत्सुः । अन्ये देवा सप्तपौरुषेयमुच्चत्वेन सिंहासनमदृशेत्सुः । अन्ये देवा षट्पौरुषेयमुच्चत्वेन सिंहासनमदृशेत्सुः । अन्ये पंचपौरुषेयं अन्ये चतुष्पौरुषेयं अन्ये त्रिपौरुषेयं अन्ये द्विपौरुषेयं । अन्ये देवा पुरुषमात्रमुच्चत्वेन बोधिवृक्षस्य मूले सिंहासनमदृशेत्सुः ॥ तत्र ये लूखाधिमुक्तिका सत्वा ते तृणसंस्तरे निषण्णं बोधिसत्वमदृशेत्सुः । तृणसंस्तरे निषीदित्वा बोधिसत्वो अनुत्तरां सम्यक्संबोधिमभिसंबुद्धिष्यतीति ॥

अथ खलु पुन बोधिसत्वः सदेवमानुषासुरस्य लोकस्य पुरतो येन बोधिवृक्षमूलं तेनोपसंक्रमित्वा बोधिवृक्षं त्रिष्कृत्वो प्रदक्षिणीकृत्वा पूर्विमका तथागता समनुस्मरन्तो निषीदि पर्यंकमाभुंजित्वा ऋजुं कायं प्रणिधाय प्रतिमुखां स्मृतिं प्रतिष्ठापयित्वा ॥ तत्र चैवं बोधिवृक्षमूले निषण्णस्य बोधिसत्वस्य मुखमण्डलं भासति तपति विरोचते । सद्यथापि नाम महासाहस्रलोकधातुविसृतं सूर्यमण्डलं वा । यस्य तेजेन सर्वावन्ता त्रिसाहस्रमहासाहस्रा लोकधातु जिह्मवर्णा अस्थात् ॥ सद्यथापि

1. B anya de° C °devâḥ yo ° çetsuḥ | B °ddaçetsuḥ | . — 2¹. B anya de° C °devâḥ tri° BC °trikoça ° nam adaçetsuḥ | . — 2². C °devâḥ dvikroçam ucatve° B °dvikoça ° hâsanam addaçetsuḥ kro° C °çetsuḥ | . — 3¹. B kroça° C anye devâḥ kro° B °çetsuḥ | . — 3². C °devâḥ sapta ° çetsuḥ | B °çetsuḥ a°. — 4. C amnya devâḥ shaṭṭâlaṁ anye devâḥ paṁ° B °shaṭṭâlaṁm ucca° C °devâḥ catu ° vâs tritâ ° nya devâḥ dvi ° vâs tâlamâ ° kshasyaḥ mû° B °mûre siṁ° C °sanaṁm addaçetsuḥ | B °ddaçetsuḥ a°.

6. C °vâs sapta ° çetsuḥ | B °çetsuḥ a°. — 7¹. C °devâḥ sha ° hâsam adda° BC °çetsuḥ a°. — 7². C anye devâḥ paṁ ° sheya anya devâ catu ° sheya | anye tri° B °anya tri ° yaṁ anya dvi°. — 8. C anya devâḥ puru° BC °hâsanam addaçetsuḥ | . — 9. C °tra ye lukhâ° B °hînâdhi° C °çasantare nisharṇṇaṁ bo° BC °çetsuḥ tṛi°. — 10. B °râṁ saṁmya°.

12. C °khalu bodhisatvo sade ° sya lokaṁ purato° B °loka puru ° mûla tena° C °shkṛtya pradakshi ° rimakânâṁ tathâgatâṁ sama° B °gato sama° C °smaraṁto nishî ° jitvâ ṛiju kâyaṁ praṇi ° smṛitiṁm upasthâ°. — 15. BC °cedaṁ bo ° sharṇṇasya bo° B °tva mukha ° sati tayati vi°.

16¹. C sadyathîdaṁ nâ° BC °hâsthasraṁ lo° C °dhâtuṁ vi° BC °laṁ vâ ya°. — 16². BC °hâsthasro lo° C °dhâtuṁ jihmavarṇṇam asyât | . — 17. C saryyathâ° B °nâma jaṁbûnada° C °jambunadasya suvarṇṇasya bimbasya pu ° sthûlakalo mani° B °çakalo maṇinibhâ | sa tapati vira° C °bhâ sa na tapa° BC °svarâ | e° C °m evaṁ bo ° hâsthasrale° B °hâsthasro lo° C °dhâtu tejena abhâshi abhibhûtaḥ |.

नाम जाम्बूनदस्य बिम्बस्य पुरतो विदग्धस्थूणा काला मषिबिम्बा न तपति न विरोचति न च भवति प्रभास्वरा एवमेव बोधिसत्त्वेन त्रिसाहस्रमहासाहस्रा लोकधातुः तेजेन अभिभूता अभूषि ॥ तत्र ये देवपुत्रा याव अकनिष्ठातो उपरि बोधिसत्त्वं निषण्णं अदृशेन्सुः तत्र भूम्या देवा समानं बोधिसत्त्वं अदृशेन्सुः ॥ तथा अन्तरीक्षे या- [२०८a] वच्चातुर्महाराजिका देवा त्रायस्त्रिंशा यामा तुषिता निर्माणरति परनिर्मितवशवर्ति मारभवनातः सिंहासनगतं बोधिसत्त्वं संजानन्ति ॥ एवं ब्रह्मा देवा ब्रह्मकायिका देवा ब्रह्मपुरोहिता देवा महाब्रह्मा देवा आभा देवा आभास्वरा देवा शुभा देवा परीत्तशुभा देवा अप्रमाणशुभा देवा शुभकृत्स्ना देवा बृहत्फला देवा अबृहा देवा अतपा देवा सुदर्शना देवा अकनिष्ठा देवा सिंहासनगतं बोधिसत्त्वं संजानेन्सुः ॥ ये च त्रिसाहस्रमहासाहस्राये लोकधातुये कुशलमूलसमन्वागता सत्त्वा पर्यन्तस्थायिनः ते सर्वे सिंहासनगतं बोधिसत्त्वं संजानेन्सुः ॥ ये अवलुप्तकुशलमूला सत्त्वा पूर्वजिनकृताधिकारा कामधातुपर्यापन्नाः ते मारं न पश्यन्ति न संजानन्ति बोधिसत्त्वस्य पूजां करोन्ता बोधिसत्त्वं नमस्यमानाः बोधिसत्त्वानुभावेन ॥

अथ खलु मारः पापीयां स्वकं बलं ध्यामवर्णं संजानति सर्वावतीं च त्रिसाहस्रमहासाहस्रां लोकधातुं अभिनतां येन बोधिसत्त्वो । महासत्त्वश्च इमं प्रतिसंचिक्षति । न तावदहं अनुत्तरां सम्यक्संबोधिमभिसंबुद्धिष्यामि यावन्न मारं पापीमं सार्धं बलकायेन सन्नद्धमागतं पराजिष्यामि मा सत्त्वानामेवं भवेया अनाश्चर्यमेतं यं बोधिप्राप्तेन मारो निगृहीतः स्वकं च स्थानं ऋद्धिप्रातिहार्येण बोधिसत्त्वः संदे-

3. C °yâvad akani° B °nishṭâto° C °to vapari bo° °sharṇṇaṁ addaçetsuḥ | tatra bhû° B °sharṇṇaṁ addetsuḥ tatra bhû° BC °bhûmyâṁ devâ samânaṁ bo° C °çetsuḥ |. — 4. C tathântarî° devâs trâya° °rmitavaçavartti° B °rtti mârah bha° BC °bhavanâtaḥ(C °to) samâsenagataṁ° C °dhiṣṭikabe saṁ°.

6. C evaṁ brahmâ devo brahmakâ° BC °hâbrahmâ âbhâ° C °svarâ devâ çubhâ devâ apramâṇaçubhâ devâ parîttaçubhâ devâ çubhakṛitsnâ° B °rîttaçubhâ devâ çubhâ devâ parîttaçubhâ devâ apramâṇaçubhâ devâ devâ çubhakṛitsnâ° BC °nishṭâ devâ samâsana(C °naṁ)gataṁ bo° C °netsuḥ | B °netsuḥ ye ca tri°. — 10. C °hâsâhasrâḥ ye dhâtuye ku° B °tûye çulamû° BC °mûlâsama° C °tâ satvâḥ paryyanto sthâ° B °ryantaḥ sthâ° BC °rve samâsana(C °naṁ)gataṁ bo° C °netsuḥ | B °netsuḥ ye ava°.

11. C ye avalupta° pannâs te mâ° BC °raṁ paçya° B °rontâṁ bodhisatvo namasya°. — 14. C °mâro pâpîmâṁ sva° B °pîyâ sva° BC °dhyâmba° jânanti(C °nti |) sarvâvatî ca tri° hâsâhasrâ(C °sro) lokadhâtu abhi° tvo mahâ°. — 15. C mahâsatvo idaṁ prâtisaṁ° B °kshati na tâ°.

16. BC °râṁ saṁmya° C °buddhishyâmah | yâ° BC °pîmâṁ sârddhaṁ° B °gataṁ parâji° C °mi | mâ satvanâm evaṁ° B °tvânâṁm evaṁ° veyâ anâçcaryâyam etaṁ yaṁ° C °hîto svakaṁ ca sthânaṁ ca ṛiddhiprâtihâryyeṇa bodhisatvo made° prâpta bodhisatvar iti | mama cânuçi° rîye saṁmyaksaṁbodhiye ci° yishyaṁti |.

वकस्य लोकस्य पुरतो उपदर्शितुकामः एवं दृढस्थामवेगऋद्धिप्राप्तो बोधिसत्त्व इति च मम च अनुशिक्षित्वा अनुत्तराये सम्यक्संबोधिये चित्तमुत्पादयिष्यन्ति ॥ अथ खलु मारो पापीमां दुःखी दुर्मनो शोकशल्यविद्धः प्रतिराजसंज्ञां बोधिसत्त्वे उपस्थापेत्वा चतुरंगिनीं मारसेनां उद्योजयित्वा बहुयोजनशतां हरित्वा येन बोधिवृक्षमूलं तेनोपसंक्रमि बोधिसत्त्वं पक्षिष्यामो ति ॥ सो न प्रभवति बोधिसत्त्वं द्रष्टुं चक्षुर्विभ्रममनुप्राप्तः सचेद्बोधिसत्त्वो मुखवातकेभिरेया येन स्थामेन बोधिसत्त्वो समन्वागतो अभूषि । सचेदयं त्रिसाहस्रमहासाहस्रो लोकधातुर्वज्रमयो महापर्वतः अभविष्यत्तां लोकधातुं बोधिसत्त्वः परमाणुरज[२०४b]सदृशीं विधूनित्वा असंख्येया लोकधातुयो अभ्युत्क्षिपेया न च एको पि परमाणुरजो द्वितीयेन परमाणुरजेन सार्धं समये ॥ बोधिसत्त्वो च ततो मारपरिषाये बहूं सत्त्वां कुशलमूलानद्राक्षीत् ये इमं बोधिसत्त्वस्य एवंरूपं ऋद्धिप्रातिहार्यं दृष्ट्वा अनुत्तराये सम्यक्संबोधाय चित्तमुत्पादयिष्यन्तीति । एतमर्थपदं बोधिसत्त्वो संपश्यमानो आगमेति न ताव अजिनित्वा मारं सबलवाहनं अनुत्तरां सम्यक्संबोधिमभिसंबुद्धिष्यामीति ॥ अथ खलु भगवां ताये वेलाये इमां गाथामभाषे ॥

यथा स्वयंभू स्थितो बोधिमूले
शाक्यान राजा सुविशुद्धसत्त्वो ।
सुवर्णबिम्बं यथ दर्शनीयो
जाम्बूनदं अपगतसर्वक्लेशो ॥
ओभासजाता दिशता अभूषि
मारस्य पक्षो अभु कृच्छ्रप्राप्तो ।

2. B °ḥkhī daurmano çoka° C °ḥkhī daurmanasya ço° B °viddha pra° BC °jasaṁjñā bodhisatvo(C °tvo) upasthāpetvā catu° B °hayojanaçatā hari° BC °kramitvā bodhi° C °shyāmeti. — 5. BC °ced yadi bodhisatvo° C °khavātaṁ o° B °satvo samanvā°.

7. C °trisāhasramahā° BC °sāhasro lokadhātu(C °tuḥ va)jramayo(C °ye) mahāparva° C °rvato abha° B °shyantāṁ lokadhātuṁ° C °shyantāṁ lokadhātuṁ bodhisatvo paramāṇurajasadṛçāṁ vidhū° B °dṛçī vidhūnitvā asaṁkhyeyā lo° bhyutkshipeyā na ca e° C °eko pi ekam api paramāṇu° jena sārddha samayā | B °rddhaṁ samayā ||. — 10. C °tataḥ māraparishāyaṁ ba° B °bahuṁ satvāṁ° C °mūlāṁ adrākshīt | ye i° B °lān adrakshīt | ye i° C °ṛddhiṁ prā° °rāya saṁmyaksaṁbuddhāye ci° B °cittaṁ utpā° C °shyantīti ||.

12. C etam arthaṁ padaṁ° BC °meti | na° C °tāvad aji° °rāṁ saṁmya° B °bodhiṁ saṁbu° C °buddhishyāmīti ||. — 13. C °gavāṁ tāye ve° thāma abhāshe | B °thā adhya°. — 15. C °svayaṁbhūḥ sthi° B °yaṁbhu sthi°.

17. BC °yathā darça°. — 19. C °çatām abhū° B °shi | mā° BC °sto abhū kṛ° C °prāptaḥ | B °pto kiṁ°.

किं तं हि नाम मह्यं भेष्यतीति
रतिं न विन्दामि विमान अर्चि ॥
विमान सर्वा अभु व्योमवर्णा
प्रासादश्रेष्ठा वरचन्दनस्य ।
सुवर्णसूत्रा स्फटिकमयाङ्गा
मा खु च्यविष्यं इतो अद्य स्थानात् ॥
स्फुटा गवाक्षा रुचिरार्धचन्द्रा
मुसारगल्वकवचिता च गर्भा ।
वैरोचनस्य जगतो विशिष्टा
आभा अभू भविष्यति किं नु अद्य ॥
शीर्यन्तो मह्यं मकुटो प्रलुतो
शुभा च आभा विगता ममाद्य ।
संगीति मह्यं स्थिता अप्सराणां
मा खु च्यविष्यं इतो अद्य स्थानात् ॥
जाम्बूनदेन यथ कांचनेन
व्योमे विमाना कृतजिह्मवर्णा ।
इमे ये दिव्या इमे ये विमाना
जिह्मा अभू उपगते बोधिसत्त्वे ॥
सो चाद्दृशासि भगवन्तं स्वयंभुं
निषण्णं सिंहं यथ दुष्प्रधर्षं ।

1. B kiṁ na hi nā° C kiṁ ne hi nāmaṁ mama mahya bhavishyati ra° B °hyaṁ bhavishyati ra° C °na vṛindāmi vimānam arcciṁ || B °ndāmi nāmaiṁ vimā°. — 3. BC °abhā vyo° B °mavallā prā° C °mavarṇṇāṁ prā° BC °çreshṭā vara° B °ndasyā su°. — 5. C °rṇṇasutrā° B °sūtro spha° C °pravilā mā° C °itar evam asthāt | B °ito hi taṁ sthānāt |.
7. C °rddhācandrāḥ musāgalvā kavacitasya garbhā | B °galvā kavacita tāṁ sugārbhā vai°. — 9. B °gati viçishṭa ā° C °gati viçishṭo ā° BC °ābhā bha° C °vishyaṁ adhunā bhavishyati° BC °ti | kiṁ tu adya çī°.
11. B çiryato mahya maku° C çiryyato ca mama mahya mukuṭo pra° C °çubhā vigatā ca ābhā | mamādya B °tā | mamādya saṁ°. — 13. BC °sthitam apsa° vishya i° C °itar adya°. — 15. BC jāmbunadena yathā kāñcanena sryāmāvime ca (C °vitola)kṛi° B °vallā | C °varṇṇāḥ |.
17. C iyam eva divyā iyaṁ me vi° B ime ya di° C °mānāḥ ji° satvo | B °satve so°. — 19. B so sādṛço tādṛço si bha° C so sādṛço tādṛçasime bhavantaṁ° B °yaṁbhuvaṁ nishaṇṇaṁ siṁha yathā pradushyaṁ dharshaṁ viçu° C °bhuṁvaṁ tu siṁhaṁ yathā nisharṇṇo | pradushyadharsaṁ gajasatra°.

विशुद्धसारं जगसत्त्वसारं
जाम्बूनदस्य यथ यूपो भाति ॥
देवा दिवि प्रतिष्ठिता मुक्तिहारा
सुवर्णकञ्चनरुचिरा मनोज्ञा ।
सुवर्णसूत्रां ग्रहिय प्रहृष्टा
अलंकरोन्ति भगवतो बोधिवृक्षं ॥
सुवस्तिकाश्च शुभा अर्धचन्द्रा
सिंहोत्कलादि स्फुटा बोधिवृक्षे ।
विद्युप्रभां च रतनां ग्रहेत्वा
अलंकरोन्ति मुदितदेवपुत्रा ॥
चन्द्रप्रभां च रतनां ग्रहेत्वा
सूर्यकान्ता च रतनां गृहेत्वा ।
वैरोचनं मणिरत्नां ग्रहेत्वा
अलंकरोन्ति भगवतो बोधिवृक्षं ॥
मुक्ताप्रभा च रतनां ग्रहेत्वा
अोभासयन्तां शुभदर्शनीयां ।
प्रामोद्यजाता मुदितहृष्टचित्ता:
अलंकरोन्ति भग[209ª]वतो बोधिवृक्षं ॥
समन्तचन्द्रा मणिरत्नां ग्रहेत्वा
रत्नावलिं सुरुचिरदर्शनीयां ।

1. C gajasatvamārdraṁ viçuddhasāraṁ suviçuddhasāraṁ | jāmbuna° B °jāmbunadasya yathā yūpo bhāse devehu di° C °yathā yūtha bhāso devehu di°. — 3. B divyā pra° C divyāni ca muktihārāḥ su° B °muktihārā suvallakañcanarucitā | manojñā su° C °kañcanarucitā manojñāḥ su°. — 5. B suvallasū° C °rṇṇacitrāṁ gṛhītya prahṛṣṭo | a° B °gṛhītya prahṛ° roti bhu° B °nti | bhu° C °guvatā bo° kshaṁ so svasti° B °kshaṁ çocasti°.

7. B çocastikā çu° C sauvastikāçca(?) çu° BC °çubha a° B °siṁhalatā° C °siṁhomtāhi° BC °sphuṭe bodhivṛksho vi°. — 9. C vidyunprabhāṁ° BC °nti pramu° C °trāḥ ca° B °trā ca°.

11. C °bhāṁ ratanāṁ gṛhītvā sū° B °bhāṁ ca ratnāṁ gra° nā ratnānāṁ gṛhetvā sūryākāntaratnapradhāna vai° C °ryakāntiṁ ca ratanāṁ pradhāna vai°. — 13. C °rocanā ca ratanāṁ gṛhītvā | alaṁ° B °trā jālaṁ ° nti | bhu ° vṛksho su°. — 15. B muktaprabhā rata° C muktaprabhā maṇiratanāṁ gṛhītvā abhāsantāṁ ca çu° B °obhāsantāṁ çubhadarçanīyaṁ pra°.

17. BC °jātā pramu° B °ttāḥ alaṁka°. — 19. C °ṇiratnaṁ gṛhītvā ratnāva° BC °liṁ surucirāṁ darça°.

गोमेदकं मणिरतनं गृहेत्वा
अलंकरोन्ति भगवतो बोधिवृक्षं ॥
अन्ये गृहेत्वा शुभलोहिताक्षं
गिरिगर्भशुद्धं रतनं गृहेत्वा ।
. . . . . . . . . . . . . . . . . . . . . .
अलंकरोन्ति भगवतो बोधिवृक्षं ॥
रत्नाङ्कियो च रुचकं गृहेत्वा
महेश्वरं सुरुचिरवर्णवन्ता ।
कर्केतनं च रतनं गृहेत्वा
अलंकरोन्ति भगवतो बोधिवृक्षं ॥
नीलां च मुक्तां तथ श्वेतमुक्तां
रक्तां च मुक्तां शुभदर्शनीयां ।
हर्षं जनेत्वान च देवजाता
अलंकरोन्ति भगवतो बोधिवृक्षं ॥
ज्योतिषं च मणिरतनं गृहेत्वा
ये चन्द्रसूर्यौ अभिभवन्ति तेजसा ।
विशेषप्राप्ता मणिरतनं गृहेत्वा
अलंकरोन्ति भगवतो बोधिवृक्षं ॥
नागामणिं च शुभदर्शनीयां
गुह्या विशुद्धाधियो मोदमाना ।
नभे स्थिहित्वा तद ऋद्धिमन्तो
अलंकरोन्ति भगवतो बोधिवृक्षं ॥
ब्रह्मा सहस्रा उपगता बोधिमण्डं

1. C gomasakaṁ* B gomesakaṁ* C *ṇiratnaṁ gṛihitvá a * vṛikshe | raktá* (l. 7). — 3. B *hitákshaṁ çi * tvá alaṁ*.

6. B *vataḥ bo * kshaṁ | grahetvá tadá alaṁkaronti bhagavato bodhivṛikshaṁ | . — 7. B lakkáṭiyáṁ ca ru* C raktáṅiyáṁ ca rucakáṁ gṛihitvá* BC *çvara suruci* C *ciraṁ varṇavanto | B *vallavantá karke*. — 9. C *náṁ gṛihitvá a*.

11. C nílaṁ ca* BC *tathá çve* C *tamuktáḥ ra*. — 13. C harsha ja* B *roti bha* C *vṛikshe | . — 15. C jyotiṁ ca vá maṇi* B *tikaṁ vá maṇi* C *náṁ gṛihitvá ye candramasúryyábhi* B *ndrasuraú*.

17. C *ṇiratna gṛihitvá* B *vataḥ bo*. — 19. BC nágámaṇiṁ ca su(C *çu)bha* B *guhyaviçuddhámkshiye mo* C *çuddháṁ kshipe modamánáṁ B *máná nabhe*.

21. C *tvá tato ṛi* B *da riddhimantá alaṁ*. — 23. B brahma sa* C brahmá sahasráṁ u * ṇḍaṁ çakráçca devá a* B *çakáçca devá a*.

शक्रश्च देवो अधिपति गुह्यकानां ।
येहि दृष्टा पुरिमकलोकनाथा
ते देवता च प्रगता स्वयंभुं ॥
आभास्वरा उपगता देवपुत्रा
शुभा च देवपुत्र शुभकृत्स्ना ।
. . . . हृपा च बृहत्फला च
अतपा सुदर्शना च अकनिष्ठा
अलंकरोन्ति भगवतो बोधिवृक्षं ॥
संछन्नो सर्वो अभु बोधिवृक्षो
रश्मी सहस्रां किरे अप्रमेयां ।
दिव्येर्मणीभिः प्रतपति बुद्धचिह्नं
सर्वा सहां अभिभवे लोकधातुं ॥
तस्यैवं चित्तमभु प्रमत्तबंधुनो
मा हैव मे च्यावये आसनातो ।
एषैव राजा भवे देवतानां
न चास्य अस्ति समो सर्वलोके ॥
अथापि बुद्धो भवे धर्मस्वामी
शून्या विमाना भवे देवतानां ।
देशेत मार्गं शिवशान्तिक्षेमं
न भूय मह्यं भवे ईश्वरत्वं ॥
उत्सन्नप्राप्तं भवे बुद्धचिह्नं
माराण कोटी संयोजयन्तो ।

2. B yehi dṛishṭvá puri° C ye dṛishṭa dṛishṭvá purimako lo° BC °ráthá te de° B °tatá pra° C °svayambhuḥ | B °yaṁbhú | . — 4. B °gata de° C °tá devaputro çubhá ca devá çubhakáináinaḥ | rú° B °bhakáçinámo rúpá°.

6. C rúpo bṛihatphalá ata ° rçaṁ amitá° B rúpá bṛihatphaláro | apátasadarçaná sudarçana alakalonti bha°. — 9. B °chaṁnáravá abhú bo° C °abhút bodhi° B °ksho | ramiṁ sa° C °raçmiṁ sahasráṁ kilam apra° BC °meyaṁ | .

11. B divyai maṇḍibhiḥ pratapati(?) bu °tram sarvásahṁ abhibhava lo°. — 13. B °ttam abhú pama° C °rittam abhúa pama ° na mi haiva ma cyávayed ása°. — 15. C °samá sa°.

17. C °ddho bhaved dharma° B °svámi | sunyá° C °mi çúnyá viná bhave de° B °ná bhaved devatánám deçe°. — 19. BC deçenti má° C °márge çivaçá° BC °maṁ | na bhú° C °ya márgaṁ bhaved içva° B °ve içva°.

21. BC °ved buddha° C °rána koṭi sayo° B °koṭisayo°.

सन्नद्धवर्मा कवचितवर्मा
संग्रामकाले भवथाप्रमत्ता ॥
उद्योजयित्वान स मारसेनां
उपसंक्रमित्वा वरपादपेन्द्रं ।
अद्राक्षीत्कृष्णो तथ बोधिसत्त्वं
सूर्यं सहस्रं यथ अन्तरीक्षे ॥
तस्यैव चित्तं अभु वेपमानं
एषो न शक्यो मये धर्षणाये ।
लोके श्रियैतं रतनं गृहीत्वा
राज्यानपेक्षं जनयित्व छन्दं ॥
दिव्यं च चूर्णं वरचन्दनस्य
जाम्बून[209b]दस्य रतनामयं च ।
दिव्यां च गृह्य वरसारगन्धां
सो बोधिसत्त्वमोकिरि वेगजातो ॥
एकांशं कृत्वा वसनं कृताञ्जलि
प्रदक्षिणां निदह्य जानु भूम्यां ।
संहर्षितो अनिमेषं प्रेक्षमाणः
सो बोधिसत्त्वं स्तवे तस्मिं काले ॥
रूपेण त्वं असदृशो पुण्यवन्तो
वर्णेन शुद्धं सदृशो न प्राप्तो ।

1. B saṁnaddhavaravarmaka° C °ddhavarmakavacitavarmitâṁgaṁ | saṁgrâ° B °citavarmitâra saṁgrâ° lo bhavethâpramatto | C °mattâḥ. — 3. B °yitvâ mârase° C °yitvâ na ca mârase°. — 5. BC °shyo ho° C °dhisatvo sû° B °sûryasaha° C °sraṁ ca ya° BC °yathânta°.

7. B °cittam abhû vetyamâ° C °abhuû vaityamânaṁ | esho na çakyaṁ maye dharshaṇâye. — 9. B lokeshram etaṁ ra° C lokeshpam etaṁ naṁ gṛihîtvâ | râjyâni ape° B °râjye ape° BC °pekshâṁ jâ° C °yitvâ chandaṁ.

11. B °ndanasya jâṁbunadaṁ ratnâmayaṁ ca di° C °jâmbunadaṁ ratnamayaṁ ca di°. — 13. C °sâragaṁdhâṁ | so° B °ndhâṁ | so bodhisatvo oki° C °satvaṁ oki° B °jâtâ |. — 15. BC ekâṁça kṛitvâ va °jaliṁ pra° B °kshiṇâṁ nidahiya jâ° C °kshiṇâ nidahiya jâ° BC °nyâṁ saṁ°.

17. B saṁharshamâṇaḥ anime° C saṁharshamânâ animekshamâṇo | so bodhisatvo abhistave vegajâto | tasmiṁ ca kâle BC °kâle rû°. — 19. BC °ṇa ca asadṛiço pu° °rûpeṇa(C °na vâ) sadṛiço prâpto asaṁpra°.

सुसंप्रज्ञानो मरुपूजनीयो
लोकैकवीरो स्थितो वृक्षमूले ॥
न तुभ्य अस्ति सदृशो कुतोत्तरो
देवो व नागो मनुजो व लोके ।
सर्वां अभिभोसि दिशतां शिरीये
घनाभ्रमुक्तो गगने व चन्द्रो ॥
तथा हि ते पूजनिया भुंजाहि
सप्त रत्नानि प्रवरोत्तमानि ।
चक्रं प्रवर्तेहि महिं आवसाहि
चातुर्द्वीपो राजा परिभवाहि ॥
त्वं च प्राप्ता दिश प्रेषमाणो
अदीनचित्तो च अनन्ततेजो ।
देवसहस्रानभिभोहि आभा
विदग्धस्थूणां यथ सुवर्णबिम्बं ॥
द्वात्रिंशतीहि स्फुटो लक्षणेहि
विरोचि कायं तव सत्वसार ।
शोभासि राज्ये स्थितो अप्रमत्तो
प्रशासि सत्वां पितरो व पुत्रां ॥
चत्वारि द्वीपां वशि ईश्वरत्वे
न च करेसि इह अनुशासिं ।
त्वं ऋद्धिप्राप्तो विचरेसि लोके
शिष्यो ते भेष्यं यथ एकपुत्रो ॥
इस्त्रीसहस्रैः सह क्रीडमानो

1. BC sasaṁpra° C °no marupū° B °nīyo eko vī° C °kaiko vī°. — 3. C °tubhyaṁ a° BC °kutottaro de° B °vo ca nā° C °vo vā nāgo vā manujo vā loke B °go | ma°. — 5. B sarve abhi° °kto gaganacandro tarā° C °ṣe ca candramā tarā°.

7. B °pūjaniyo bhuṁbhunaṁ° C °pūjaniye bhuñjāhi sarvaṁ° BC °ratnāṁ pra°. — 9. BC °rttehi mahiṁ āva° C °rdvīpe ratnapa° B °rdvīpa ratanapa° °vāhi tvaṁ°.

11. BC tvaṁ ca prāpto di° B °jo de°. — 13. C devāḥ saha° °bhoti ā° B °bhoti | ā° sthūṇā yathā su° C °sthūṇā yathā su°. — 15. C °sphuṭalakṣha° BC °viroca kā° C °sārah |.

17. C °sthitam apra° praçāsi sa° B °prasāsi sa° C °tarā ca pu° B °ro ca putrāṁ |. — 19. B °pāṁ vaçi içva° C °pāṁ vaçi isvaratve na karotaḥ iha anuçāsati tvaṁ | B °karetaṁ iha°.

21. C çiddhi ca pra° B °caretam lo° BC °çishyate bhe° C °bhedhyasi yathā e°. — 23. C ishṭisahasraih°.

महन्त राजा च श्रिरिद्धिप्राप्तो ।
दास्यामि तुभ्यं रतनानि सप्त
भवाहि राजा चिह चक्रवर्ती ॥
भविष्यते पुत्रसहस्र तुभ्यं
शूराण वीराण महाबलानां ।
वराङ्ग[रूपाण] परसैन्यप्रमर्दकानां
ससागरान्तं जये लोकमेतं ॥
इमा च पञ्च शत नारकन्या
पुष्पा गृहीत्वा वरचन्दनस्य ।
प्रासान्तरीये शुचिवसननिवस्त्रा
गीते कलासु परमार्थप्राप्ता ॥
वीणां गृहीत्वा पणवां मृदङ्गां
शंखां च वेणुं च सुघोषकां च ।
संभारिकां नकुलकिंफलां च
उपगीयमाना तद वृक्षमूले ॥
अन्ये क्षिपित्वा गगणे छिपन्ता
चूर्णा छिपन्ति वरचन्दनस्य ।
जाम्बूनदस्य रतनामयं च
छिपन्ति चूर्णां तव भोन्ति सर्वे ॥
हाहाभेरीशंखपणवनिनादे
प्रासादश्रेष्ठे रम त्वं कुमार ।
पुष्पं च गन्धं च विलेपनं च

2. B °saptе bhu° C °saptaḥ bhu°. — 4. BC °hasra tubhyaṃ° C °vīrā mahābalāṇāṃ valāṅgarū° B °lānāṃ varāṃ°.

6. C valāṅgarūpāṃ para° B °rūpāna para° C °rdakā sasā° B °nāṃ | sasā° BC °parimitāṃ jaye e(C °yed e)kamekāṃ | . — 8. BC ime ca pa° B °rakanyāṃ pu° C °rakaṃnyāna pushpāṃ grihītvā°. — 10. BC syād anta° C °civasanā nivastrā çile kalā° B °sā çile kalākalām° BC °prāpto | .

12. C °ṇāṃ grahe ° daṃgā çaṃkhā° B °kāṃ ca eka°. — 14. B ekarinakula° C ekelinakulakakiṃphalikā grihītvā upagīyamānā tato vṛi° B °upagāhyamāṇā tada vṛi°.

16. BC °gagane vimuntā(C °nto) cū° B °kshipaṃti va ° sya jā°. — 18. BC jāmbuna° nti | cūrṇā tava°. — 20. B hāse bherimaṃkha° C hāsābhiniçaṃkha° BC °ṇavo ninā° B °çreshṭe ra° C °çreshṭo ra ° māro | .

22. BC °nthaṃ ca rucirāṃ vilepanaṃ bhuṃ° C °ko hu | .

भेष्यन्ति बुद्धित्व मे अग्रबोधिं ।
बोध्यङ्ग सप्त पुरिमजिनप्रशस्तान्
तां च लभित्व भवति अप्रमत्तो ॥
चत्वारो अन्यामहं ऋद्धिपादां
ध्यानप्रमाणं तथ मार्गश्रेष्ठं ।
बुद्धित्व सत्यानि समन्तज्ञानि
अभिप्राप्तो दिव्यतां विविधं ॥
जुगुप्सनीयाः सुखहीनाः हि कामा
न अत्र विज्ञो लभे आनिशंसं ।
एषो हि मार्गो नरके तिरश्चे
यमस्य लोके बहुप्रेतलोके ॥
अधर्मकामा रत मैथुनस्मिं
तमान्धकारे प्रयाता समन्ता ।
विहीनतेजा च्युतशुक्लधर्मा
ते कामसेवी नर एवरूपाः ॥
दुर्गन्धपूति अशुचिं अनार्यं
न तत्र जातु रता शुद्धसत्वाः ।
बालो नये तत्र विशेषसंज्ञां
न पण्डितो जानथि तत्र छन्दं ॥
समृद्धे पक्षे यथ शान्तिचेते
विधुन्वतेया अशनिवरचक्रं ।

2. C bodhyaṅga purimakeshu ajiro pra° BC °çastân | tâṁ (C °tâṁ ca) labhitvâ bha° C °vanti pra° B °vati pramatto catrâ°. — 4. C catvâra anyâm ahaṁ riddhi° B °pâdâṁ | dhyânaprâmâṇâṁ ta° C °dhyânâṁprâmâṇâṁ tathâ mârgaçreshṭâṁ | B ° çreshṭâṁ buddhi°.

6. B °jñâni | abhi ° shyaṁ ja°. — 8. C vijña° B °yâḥ duḥkhahînâḥ kâmâ °yâḥ duḥkhâprahîṇâḥ kâmânaṁ sa atra labhed vidhijñâḥ | anuçaṁça esho° B °vijña labhe anuçaṁça esho°. — 10. C °mârge nara ° maç ca loke° B °hupetaloka adha° C °loko |.

12. BC °rataṃmaṇi° C °thunesmiṁ tamandha° B °smiṁ | tamatamandha° BC °kareṣu pra° B °samantâ vi° C °samantâḥ vi°. — 14. B °çukradha° C °dharmâḥ te° B °pâḥ da°.

16. B durgandha° C °jâtu tatah ça° B °ratâḥ ça ° tvâḥ vâlâna°. — 18. B vâlânato tatra° C vâtâ nale tatra viçeshamaṁjñâ na pa° BC °ṇḍitâ jâ°. — 20. BC °mṛiddhe (C °ddhâ) pakshe yathâ çâ° C °niralamvakâḥ | B °cakra |.

तथैव शुक्ला परमार्थधर्मा
कामनिदानं अफला भवन्ति ॥
पृथग्जना तु रता हीनसेवी
आत्यन्धभूता अबुधा रज्यन्ति ।
रज्यन्ति ते अबुधचेतसेन
न कामतृष्णां जने बोधिसत्वो ॥
संवर्तनीये यथ बुद्धक्षेत्रे
हुताशने प्रज्वलिते नभस्मिं ।
रमणीय आभा मणिं छारिकां वा
तथैव कामां विचिकित्सु [शुक्ल]धर्मा ॥
विसृष्ट वध्यो यथ पार्थिवेन
लभेय मोचं श्रियं स्वस्तिभावं ।
न हीनकामां प्रतिसेवमानो
लभेय धर्मं तु जिनानुज्ञातं ॥
उच्चारे शुक्लो यथ दह्यमानो
जुगुप्सनीयो परमदुर्गन्धो ।
न राजपुत्रो तहिं भवति उदग्रो
तथैव कामा गर्हित पण्डितेभि ॥
ग्रीष्माण मासे यथ पश्चिमस्मिं
लवणोदकं जनये तृषां नराणां ।
तथैव कामां दुःख[प्रति]सेवमानो

1. B °dharmakāmaṁ nidānā a° C °dharmāḥ kāmāṁ nidānā aphala bha°. — 3. B °rato hi° C °rato hi ° dhā na jānti | B °dhā na jānti jālā°. — 5. C jātā ca jānti abudhā ca cetasāḥ na kā° B jātā ca jānti abudhā cetasā na kāma ° meya bodhisatvo satīrva° C °janetvā | .

7. BC °niya(B °ya ||) atha bu° C °nakhesmiṁ | B °smiṁ mamaṇi°. — 9. B mamaṇi° C na maṇi na ābhā mayiva chāyi vā tathai° B °bhā maṇhiva chā ikā vā | tathai ° māṁ vicitkitsuḥ çu° C °çukla || dharmā ni° B °rmā ni°.

11. C niçiahṭa yathā pā° B niçṛṣṭita° B °yathā pā° BC °çriya sva° C °sti tāvat | B °vaṁ na hi°. — 13. C na hīnakā° B °no la ° jñātaṁ u°. — 15. C uccāraṇu° B uccāraṇu ° BC °yathā da° C °mānāḥ ju° B °no | ju ° ndho na rā°.

17. B °tro taṁ hi bha ° gro | ta° C °dagrāḥ ta° B ° garahita pa ° hi grī°. — 19. BC °yathā pa° C °çcimesmiṁ° B °nasmi la° C °jana tṛ° B °tṛiahṇāṁ na°.

21. C °duḥkhakaraso ° no ajñāyaprā° B °no | ājñā ° ti bālatṛ° C °ti bāratṛ°.

अज्ञानप्राप्तो जनयति कामतृष्णां ॥
यं तेहि पूर्वं यथवृक्षपुष्पकेहि
यूथं च अन्यं अनुगतमात्मभावे ।
प्रस्यन्दमानं वहिमुखेहि काये
[210b] न अत्र विज्ञो जन सौमनस्यं ॥
सिंहाणमाला यथ श्लेष्मपूरं
कफो च पित्तं अनुगतं मस्तरोगं ।
सदा स्रवन्ती अशुचि विगुप्सितं च
न अत्र विज्ञो जने सौमनस्यं ॥
काममिद्रार्थं प्रपतितु दुर्गतीषु
उत्तापनं दुःखं नरा वेदयन्ति ।
मुद्गा च माषा यथ कुम्भप्राप्ता
तथैव स्विन्ना नरकेषु सत्त्वा ॥
असीहि छिन्ना बहुविधमात्मभावा
शक्तिप्रहारैहि पुन पि संप्रभिन्ना ।
यात्रा करोन्ति विविधं अनिष्टं
न अत्र जातु अभिरतु बोधिसत्त्वो ॥
रूपेहि वृद्धो भवति सम्मोहजातः
यो कामतृष्णां जने अल्पबुद्धिः ।
स्वयं च सेवि दुःखकररोगमूलं
यथा श्मसाने कुणपं शृगालः ॥

2. BC yaṁ te(B yau te)hi puropakṛita vṛikshaphuṭphu(C °shpha)ehi yûthaṁ ca anya anugataṁ(C °tâṁ) âtma°. — 4. BC °odamano na vahi(C °rhi)mukhehi kâye(C °ye) na atra° B °janeya mânushaṁ sa siṁ° C °janeya mânuçaṁ siṁ°.

6. B siṁhânamâlâ yathâ puna çle° C siṁhânamâre yathâ punaḥ çleshma kapo tha pi° B °pûra kapo tha pi° C °mushtarugaṁ | B °starugaṁ sadâ°. — 8. B °nte | açuci vigu° C °ci vigupsataṁ atra° B °psitaṁ atra° BC °jñâna jane(C °na) sau°. — 10. BC kâmaṁ mi° B °prapatishu du° BC° duḥkha naro vedayati |.

12. C mudgâ mâshâya kumbhaprâptâs tathaiva svinnâ° B °mâshâ ca ya° prâpto tathaiva svinnâ° C °satvâḥ ||. — 14. B asihi cchannâ ba° C °vidhaṁ âtma° BC °bhavo çakti sa(C °kiṁ ça)re° C °punar api saṁprabhinnâḥ | B °bhinnâ bâ°.

16. B °nishṭhakarma na jâ° C °nishṭhakarmaṇo abhi° B °tvo rû°. — 18. C rûpehi vriddho bha° B °hi baddho bha° C °bhavanti sammohajâto ye° BC °janayati alpa°. — 20. B se yaç ca sevi duḥ° C svayaṁ ca sevi duḥ° thâ çmaçâne kuṇape çṛigâlâḥ | B °kuṇape çṛigâlaḥ mâ kṛi°.

मा कृष्णबंधु मम मोहनार्थं
कामां प्रशंस गर्हिता पण्डितेहि ।
अंगारकर्षू यथ संप्रपूर्णा
तथैव कामां त्यजे बोधिसत्त्वो ॥
न कामसेवी हि इमं प्रदेशं
द्विजाभिकीर्णं स्फुट पादपेहि ।
न चापि एवं स्फुट लपयेहि
सेवित्व कामां लभे आत्मभावं ॥
रक्षित्व शीलं अशबलब्रह्मचर्यं
सेवित्व युक्तां इतरत्रा भिक्षिवेशा ।
भावित्व चापि बहुकल्पकोटी
विशिष्टो भोति (स्फुट) आत्मभावो ॥
अच्छिद्रशीलो पुरिमभवे अभूषि
क्षान्तीउपेतो सद अप्रमत्तो ।
शोधेत्व मार्गं विविधं अनन्तं
सो अद्य लप्स्ये वर अग्रबोधिं ॥
भगवतो सार्थवाहो हितकरो अप्रमत्तो
पुरतो स्थित्वा अवच स कृष्णबन्धु ।
शृणोहि तात मम गिरां भाष्यमाणां
मा अद्य दोषं प्रजने अप्रसादं ॥
यदेष जातो असदृश पुण्यवन्तो
कम्पे सशैला वसुमति षड्विकारं ।

1. B °mohanārthe kā° BC °prasamçā(B °ça) garahitā° B °paçutehi | . — 3. C aṅgārakashtha yathā saṁ° B °karshā yathā saṁprapūrṇā tathai° C °pūrṇa tathai°.

7. B °māṁ labhate ātma° C °māṁ labhet ātma°. — 9. BC rakshitvā çī° B °asabala bra° C °açabalabra°.

11. BC °bahuvidha kalpa° B °viçishṭa bhoti ātma° C °viçishṭibhavati | ātmabhāvā | . — 13. B °draçīlī pu° C °draçīrī pūrima° BC °abhūmi kshāntiṁ upete taye s(C °te trayam s)pra° B °matto sādhu°. — 15. B sādhu ° C °dhaṁ anantaṁ so° B °anantaṁ | adya° C °varam agrabo°.

17. B bhavato sārtha° C °purataḥ sthi ° nāthah çṛ°. — 19. BC °bhāshamāṇāṁ° BC °jana aprasā°.

21. C ye dārva jā° B yed esha jā ° dṛçaṁ puṇyajātāṁ kaṁpa saçai° C °dṛçe puṇyavaṁto ka ° mati shaḍvikālaṁ oldā°.

अोभासिता दश दिशता अभूषि
दिव्या च वाद्या अघट्टिता संप्रवादि ॥
दिव्यां छत्रां धारये देवपुत्रा:
ध्वजपताकैः स्फुटो बुद्धक्षेत्रो ।
येना भणेन्सु मरुगणा देवसंघा
अप्रमादं जनयि अहीनसत्वा ॥
एषो चक्षुर्भविष्यति सर्वलोके
आलोकभूतस्तिमिरं निहत्वा ।
एषो अन्धकारं विधमे दुःखितानां
मा अप्रमादं जनेहि बालबुद्धे ॥
एषो हि लेनं भविष्यति सर्वलोके
त्राणं च द्वीपं शरणं परायणं ।
अकरित्वा नरमरु च प्रसादं
घोरं व्रजन्ति निरयं अवीचिं ॥
एषो हि लोके असदृशो दक्षिणीयो
एषो हि लोके सततं हितानुकम्पी ।
एतं सत्कृत्वा नरनारिसंघा
च्युता सुखी [२११*] भवे इह सर्वलोके ॥
यो अत्र मानं जने न प्रसादं
बुद्धोपपन्ने धुतरजे शाक्यसिंहे ।
न तस्य जातु भवे स्वस्तिभावो
च्युतश्च क्षिप्रं व्रजे दुर्गतीषु ॥

1. C °diçatâm abhû° B °ca vâdyâ(?) ca âgha° C °dyâ ca agha° BC °ṭṭita saṁ° C °pravâdiḥ di°. — 3. C °vyâṁ ca echatrâṁ ca dhâ° BC °rayetsuḥ de° C °putro | dhvajâpakâkaiç ca sphu° B °buddhapu(effacé?)trai ca°. — 5. B rabâ bhânayetsuḥ na maru° C velâ bhramatsu ma° B °gatâ de° C °saṁghâḥ | apra° yishyai adhinasatâḥ e° B °satve |.
7. C °sho ca cakshu° B °kshu bhavi° C °bhûto bhavastimiraṁ° B °bhûtaḥ bhavatimiraṁ°. — 9. BC °ndhakâra vi° C °ndhatarâ duḥ° B °dhamano duḥ° C °apramâdaṁ° BC °janetvâ hi bâ° C °ddhi | e°.
11. C °hi evaṁ bha° loko | trâ° yaṇaṁ parâyanaṁ a°. — 13. BC anukari° B °maru aprasâda gho° C °ru apramâdaṁ | gho°. — 15. B °dakshaṇeya° C °kshiṇeyaṁ | e° BC °kampi satkṛ°.
17. C °nârîsaṁghâḥ cyu° vet | iha°. — 19. B yo tra mâṇaṁ vilaṁjane apra° C °naṁ ciraṁ jane prasâddhaṁ pu° BC °upapanneto dhuraje° C °siṁho |. — 21. C °bhavet svastibhâvo cyutâç ca° B °vraja du°.

एषो हिमां अचलचमूं प्रभेत्ति
अभ्युत्क्षिपित्वान ते सागरातो ।
क्षेत्राण कोटीनयुता क्षिपेय
स्थामेन लोके समो नास्ति सैन्यं ॥
एषो समुद्रं जलधरं वारिपूर्णं
असुरनिकेतं उदधिं समन्ततेजं ।
शोषेय सर्वं दृढव्रतो अप्रमत्तो
एषो हि सर्वमभिभवे मारसैन्यं ॥
ब्रह्मां च शक्रं अभिभवे गुह्यकां च
नागासुरा च मनुजा महोरगा ।
विदग्धस्थूणां यथ सुवर्णबिम्बं
पीठे नारायणं जिन घनशरीरो ॥
एषो यहेत्वा गिरिवरं चक्रवाडं
पाणितलेन समरजं करेय ।
न एष शक्यो उपगतो बोधिमूले
चालेतुं वीरो दृढव्रतो अप्रमत्तो ॥
चन्द्रं पतेया नभतो मेदिनीये
इयं च भूमी स्थिहि नभे आत्मनेन ।
प्रतिस्रोतं सर्वा नदीयो वहेन्तुः
न चैव शक्यो दृढव्रतो चालनाय ॥

1. B °hime tam acalaṁ amuṁ pravetti aṁnyukshipi° C °himetaṁ acaram amuṁ pravetti anyukshipi° B °râto kshe°. — 3. C kshetrâna koṭina abhâṁ nikshi° B °ṭina abhâṁ kshi° BC °peyâṁ sthâ° BC °ke mama samo(C °ma) nâsti°. — 5. C °mudrâṁ ja° B °rṇṇaṁ | a° BC °udadhi samantâ(C °ntâḥ | ) tejaṁ ço°.

7. C çosheya sarvaṁ nabhasi yacitta pîḍâ nâcâ° (l. 12; C a suivi l'ordre suivant : 13, 15, 7, 9, 17, etc.) B çosheya sarvaṁ | ..vrato a ° tte | esho°. — 9. B °bhi..guhyakâṁ ca | nâ ° ragâ vidâ° C °ragâ ca vida°.

11. C °sthûnâ yathâ suvarṇṇabimbaṁ candraṁ° (l. 17, cf. l. 7) B °sthûnâ navasijacittaṁ pîḍâ nâcâ° C °ṇaṁ avajira ghânaçarîraṁ | . — 13. C esho gṛhe ° ṇitaṁlena° BC °rajaṁ ka°. — 15. C °çakyaṁ upa° B °çakya upa ° tuṁ vira dṛ° C °vira dṛḍho vra ° Bo esho hi° (l. 8, cf. la note l. 7).

17. B yathâ suvarṇṇabiṁbaṁ candraṁ yata ° niye | iyaṁ° C °imaṁ ca bhûmiṁ nabhe sthihi â° B °mi nabhe sthihi âtmanena pra°. — 19. C pratiçrotaṁ sa ° hetaḥ na° B °hetuḥ | na° BC °çakyaṁ dṛ° C °nâyaḥ | .

न बोधिसत्वे पदयाति कृत्वा ॥
शैलो महन्तो यथ चक्रवाडो
क्षिप्तो नभातो पतितो नरस्य मूर्ध्ने ।
जनेय सौख्यं सिय ततो स्वस्तिभावो
न बोधिसत्वे पदयाति कृत्वा ॥
अंगारकर्षू ज्वलितोमरा च
क्षिप्ता नभातो पतिता आत्मभावे ।
जनेय सौख्यं सिय ततो स्वस्तिभावो
न बोधिसत्वे पदयाति कृत्वा ॥
प्रकंप महता चयं लोकधातुः
कल्याण कोटी धरितु करेया ।
चित्तां च ज्ञातुं विविधा नराणां
न संसारातो मुनिचालनाये ॥
प्रकंप समुद्रं जलधरं वारिपूर्णं
मध्योदके ज्वालितुमग्निस्कन्धं ।
सुमेरुमात्रो प्रभंकरो धूमकेतुः
न संसारातो मुनिचालनाये ॥
शीलेनुपेतो वसवृत्तो क्षान्तिये च
तपे व्रते च पुरा पारप्राप्तः ।
स केशरिर्वा मृगपति जातवेगो
नादं नदन्तो जिनो मारसैन्ये ॥

2. C °mahántam ya ° vádam kshi° B °do | kshi ° bháto praptato nara° C °bháto pratato narasya múrddhni ja° B °rddhne ja°. — 4. C janaye saukhyam si tato° BC °se | na bo ° tvá angá°

6. C °kadsúm i° B °karshúm i° BC °jahala° C °kshipta na ° tita átmabháve ja° B °bháve | . — 8. C °satve paru°. — 10. C °sahni a ° dhátum | ka° B °kalyánako° C °koṭi dha° BC °reya ci°.

12. BC citrám ca jñá° B °tum tridhá na° C °tum trividhána° BC °ṇám | na ° to munirá(B °va)canáye ṇa°. — 14. B °kyam jala° C °dhare vá° BC °madhyodake(C °dhyodakam) jvalita agniskandhe su°.

16. BC °dhúmrake° C °ketuḥ | na mañcata° BC °munidhare vá(B °vá)canáye çí°. — 18. C °nupetá asantano ca | ta° B °pure páraṃpráptaḥ sa ke° C °pure prápta sa ke°. — 20. B °gapakshi játavego játo nádam° C °gapakshi játáç ca sa vegajáto na ° no máram sai° BC °sainyam ya°.

पुण्यवन्तो द्युतिवन्त प्रभावन्तो ।
आ[२२५b]वासप्राप्तो विचरति सर्वलोके
यथाभिप्रायं जनयति तेषु प्रीतिं ॥
प्रपूरवाक्यं स्वराङ्गं भवति शुद्धं
ज्ञापेति सत्वान् सुसखिलश्लक्ष्णवाक्यो ।
न तस्य कोपि जने ईर्षायं
उल्लोकनीयो भवति बहुजनस्य ॥
प्रियश्च दानं तथ अर्थचर्या
समानार्थता च बहुजनस्य ।
अकुष्टवन्तो न जनेति रोषं
यो अंगुलीहि नमे बुद्धस्तूपं ॥
न सो अपायं प्रपतेय भूयः
वर्जेति हीनां कुल मार्त्यलोके ।
आढ्यश्च सो भोति प्रभूतकोशो
यो अंजलीये वन्दति बुद्धस्तूपं ॥
देवेन्द्र भोति गत देवलोकं
मनुष्यभूतो पि च भोति राजा ।
न पारिहानि च कदाचि तस्य
यो अंजलीये वन्दति बुद्धस्तूपं ॥
अयुक्तवाचं न कदापि भाषे
सुभाषितं भाषति नित्यकालं ।
अतृप्त सत्वा वचनेन तस्य
यं सो प्रमुञ्चेद्वरमेकवाचं ॥

3. C °priti | . — 4. BC °ti çuddho jñāyeti° C °satvāṁ samakhilo çla°.
6. C °tasya kāci(?) jane° B °ko vi jane° BC °rīyaṁ bha° °nasya pri°. — 8. BC °naṁ | ta° caryāṁ sa° B °nārthāṁ ca ba° C °rthavanto ba° BC °sya a°. — 10. C akushṭe na ja° B akushṭava° BC °shaṁ | yo aṅgu(C aṁja)lihi na° °stūpe na so apā°.
12. BC na so apā° B °yaḥ | va° BC °kula martyaloke āḍhya°. — 14. BC °ço || yo aṁjaliye va° °puṁ de°.
16. B °loke | ma° C °loke ma° B °rājā na°. — 18. B na khāri hā° BC °hāniṁ ca kadācit tasya° B °sya | añjaliye va° C °liyo vadanti bu°. — 20. BC ayuktapatraṁ na kadācid bhāshe su°.
22. B °vācāṁ | .

ज्ञात्वान तस्य प्रणिधिमेवरूपां
यथा तं चित्तं ततो बुद्धज्ञाने ।
स्मितं करित्वा जिनो व्याकरोति
बुद्धो तुवं भेष्यसि लोकनाथो ॥

इदमवोचद्भगवानात्तमना विशुद्धमति भिक्षुः सदेवमानुषासुरलोको भगवतो भाषितमभ्यनन्दे ॥

अवलोकितं नाम सूत्रं महावस्तुस्य परिवारं समाप्तं ॥

बोधिसत्वो यथा वीरो नैरंजनामुपागमे ।
अथ कालो महा[225b]नागो एकको व अनुचिन्तयत् ॥
यथायं रणते पृथिवी कंसपात्रीव ताडिता ।
निःसंशयं महावीरो बोधिं प्रादुर्भविष्यति ॥
रणतीं पृथिवीं श्रुत्वा शब्दघोषसमाकुलां ।
भवनातो उत्तरित्वान समन्तां स विलोकये ॥
विलोकयन्तो महानागो असदृशं पुरुषोत्तमं ।
अग्निस्कन्धं ज्वलमानं विद्युं वापि घनान्तरे ॥
नैरंजनायां तीरे अद्भुतगामि अनिघो पुरुषसिंहो ।
घृतकुंजनिभाननसं नागो काल भवनं वन्दे ॥
ततो उद्ग्रो समानो प्रीतिसुखसमर्पितो ।
बोधिसत्वं नमस्यन्तो इमां गाथामभाषत ॥
यादृशा मे पुरा दृष्टा लोकनाथा महायशाः ।
तेषां तुवं पि सदृशो अत्र मे नास्ति संशयः ॥

1. B °ṇidhi evarū° C °yathaiva ci° BC °ddhajñâne smi°. — 3. C °buddhaṁ stavaṁ° B °buddha tu°. — 5. B °viçuddhi bhi° C °mânusho ca loka°.

7. C iti çrimahâvastuavadâne avalo°. — 8. C °yadâ viro nai°. — 9. BC atha kolo ma° kakoçam anu° B °ntayasa | C °ntayaṁ | . — 10. C yathâ raṇate pṛi° B °vi kañçapâ° C °pâtrera tâ°.

11. BC niḥçaṁsayaṁ°. — 12. C raṇatiṁ pṛi° BC °ḍhivi çru°. — 13. C °samantena vi° B °ntâṁ na vi°. — 14. C °lokayaṁ ma° B °asadṛiçâ pu° C °dṛiça pu°. — 15. B °dyuṁ vâtra gha° C °vâta gha°.

16. C °gâmi anighosha pu° B °gho | puru°. — 17. BC °nigakâlasamaye bhavanto vande | . — 18. BC °dagrâ sumano pri°. — 19. C °bhâshi ‖ B °shati | . — 20. BC °drishṭâ lo° C °yaçâ | .

यथा उद्धरसे पादं दक्षिणं पुरुषोत्तम ।
दिशामभिविलोकेन्तो अद्य बुद्धो भविष्यसि ॥
यथेयं रणते पृथ्वी कंसपात्रीव ताडिता ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा च भवनं मह्यं अन्धकारतमिस्रकं ।
अवभासेन स्फुटं सर्वं अद्य बुद्धो भविष्यसि ॥
यथा विमानो तेजेन स्फुटो तिष्ठति सर्वशो ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा च विमला मेघा विमुक्ता मम नायक ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा चीवरनिक्षेपा यथा च अवगाहसि ।
नैरंजनां शीतकालां अद्य बुद्धो भविष्यसि ॥
यथा नैरञ्जना रम्या कुसुमेहि समाकुला ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा च पुष्पा वर्षन्ति देवा क्षिपन्ति अम्बरा ।
वृक्षा च प्रणता सर्वे अद्य बुद्धो भविष्यसि ॥

शुचिजलं च वहते प्रतिपूर्णां
पार्थिवोत्तमसुतो अवगाह्य ।
अभ्युदयन्तो अभिषेचयित्वा
उपागमे पुरिमबुद्धनिषण्णां ॥
सर्वमहीं सचतुर्द्वीपसशैलां
खेडपिण्डं व अनपेक्षो जहित्वा ।

1. C yathâ me uddha* BC *ttamaṁ | . — 2. C *lokyanto a* B *vishyati | . — 3. C yathâyaṁ ra* pâtreva tâḍitâḥ | . — 4. B *viro a* C *viro a* shyati ‖ . — 5. B *bhagavân ma* C *bhagavan ma* BC *kâratimiraṁkaṁ | .
6. B *shyati ‖ . — 7. C *vimâna* sphuṭaṁ ti* B *rvaço nih*. — 8. B nihçaṁçayaṁ* C nihçaṁçayaṁ saṁçayaṁ ma* BC *viro adya*. — 9. C *çuddha ma* BC *yakaḥ | . — 10. BC nihçaṁçayaṁ* viro a* B *vishyati | .
12. C *raṁjanâ çî*. — 13. C *kulâḥ | . — 14. BC nihçaṁçayaṁ mahâvire a*. — 15. B *pushpa va* C *pushpa varsheti devâḥ kshapanti* B *sâ kshapanti* BC *mbarâḥ | .
16. C vṛkshâgra praṇa* B *shyati ‖ C *shyati çu*. — 17. B *pratipûrṇ(?) pâ* BC *vagrâhya* B *hya gâtra abhyu* C *hya gâtrâbhyu*. — 19. BC *sheçetvâ upâdhame | pa* dyâm sa*.
21. C sarvaṁ mahîṁ sa ca* BC *caturdvi* lâṁ | khedapiṇḍam iva a* tvâ yâce*.

याचे स्वस्तिकं तृणां नरसिंहो
यत्र निषण्णो स स्पृशे वरबोधिं ॥
तस्य तृणां मृदुकतूलनिकाशां
स्वस्तिको कनकबिम्बनिभस्य ।
वेगजातु श्रददे तृणमुष्टिं
तं गृह्य च मृदुतूलांगुलपाणिः ॥

अथ खलु बोधिसत्त्वो सिंहविक्रान्तं विक्रमे अनुत्तरस्य अमृतस्य आहरणता[२२६a]यै । नागविक्रान्तं विक्रमे । ऋषभविक्रान्तं विक्रमे । हंसविक्रान्तं विक्रमे । क्रौञ्चविक्रान्तं विक्रमे । दुष्प्रधर्षविक्रान्तं विक्रमे । अग्रोत्पादविक्रान्तं विक्रमे । श्रेष्ठोत्पादविक्रान्तं विक्रमे । पूर्वोत्पादविक्रान्तं विक्रमे । युगोत्पादविक्रान्तं विक्रमे । प्रणिधिपूर्वोत्पादविक्रान्तं विक्रमे । शत्रुमथनविक्रान्तं विक्रमे । अपराजितविक्रान्तं विक्रमे । महापुरुषविक्रान्तं विक्रमे । अलीनविक्रान्तं विक्रमे । अदीनविक्रान्तं विक्रमे । अहीनविक्रान्तं विक्रमे । अभीतविक्रान्तं विक्रमे । हितैषीअनन्धकारीकरणतायै महाविक्रान्तं विक्रमे । महासंग्रामविजयायै अनुत्तरस्य अमृतस्य आहरणतायै विक्रान्तं विक्रमे ॥

अथ खलु बोधिसत्त्वं सिंहविक्रान्तं विक्रमन्तं । नागविक्रान्तं विक्रमन्तं । ऋषभविक्रान्तं विक्रमन्तं । हंसविक्रान्तं विक्रमन्तं । क्रौञ्चविक्रान्तं विक्रमन्तं । दुष्प्रधर्षविक्रान्तं विक्रमन्तं । अग्रोत्पादविक्रान्तं विक्रमन्तं । श्रेष्ठोत्पादविक्रान्तं विक्रमन्तं । पूर्वोत्पादविक्रान्तं विक्रमन्तं । युगोत्पादविक्रान्तं विक्रमन्तं । प्रणिधिपूर्वोत्पादविक्रान्तं विक्रमन्तं । शत्रुमथनविक्रान्तं विक्रमन्तं । अपराजितविक्रान्तं विक्रमन्तं । महा-

1. BC °sharuṇo spṛçe vara°. — 3. B °ṇāṁ mridukūla° C °dutūlani ° bhasyā va° B °sya va°. — 5. BC °tu adaye tṛi BC °gṛihya mṛi° C °lāṁgulīṁ pāṇiḥ ‖.

7. BC °mṛitasya āraṇatāye | . — 9². BC duṣhyadha° C °dharmavikrā°. — 9³. C agrotpādavikrame | . — 10¹. BC çreshṭotpā°.

11³. BC çatrurmatha°. — 12². *Le passage compris entre 12² et la fin du paragraphe est répété dans B et C, la répétition est désignée par b c.* — 13¹. c° kramena | . — 13². Bb Cc alīnavi°. — 14¹. Cc °shāndhakārī° b °anandhakārī° C °ṇatāyair mahā°. — 14². C mahāgrā° c ° yāye amṛitasya anuttarasya āha° C °mṛitasya āraṇatāye mahāsaṁgavikrā° bc °āye mahāvikrā ° kramati ‖ a° BC °krame | all°.

16¹. C °satvo siṁ°. — 17¹. C haṁsavikrāntaṁ | taṁ vikrama°. — 17². C krauñcavikrā°. — 17³. BC dushyadha° C °dharmavikrā°. — 18¹. C agotpāda ° kramaṁ çre°. — 18². C çreshṭotpā°. — 19¹. C °mantaṁ | pūgo(?)tpādavikrāntaṁ vikramantaṁ | praṇi°. — 20¹. BC çatrurmatha° C °kramaṁ | . — 20². C °kramaṁ | . — 20³. C °kramaṁ.

निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा च वाता वायन्ति यथा वृक्षा निरिंगिता ।
यथा द्विजा निकूजन्ति अद्य बुद्धो भविष्यसि ॥
यथा मेदिनी पुष्पेहि समभिभूतमण्डिता ।
बुद्धानामेव उत्पादे एवं भोति अलंकृता ॥
यथा वायसशता पंच करोन्ति त्वां प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा पक्षिशता पंच करोन्ति त्वां प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा हंसशता पंच करोन्ति त्वा प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा क्रौञ्चशता पंच करोन्ति त्वा प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा मोरशता पंच करोन्ति त्वा प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा जीवकशता पंच करोन्ति त्वा प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा पूर्णकुम्भशता पंच करोन्ति त्वां प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
यथा कन्याशता पंच करोन्ति त्वां प्रदक्षिणं ।
निःसंशयं महावीर अद्य बुद्धो भविष्यसि ॥
संमुखं पि च जिनपारमिताये

1. BC niḥçaṁsayaṁ° C °virah adya°. — 2. B yathā vāto vāyanti° C °ca vāto vāyaṁnti° B °niliṁgitā | C °niliṁgitā | . — 3. C °dvijā hi kūja° B °jāni kujanti°. — 4. BC °sarvāyaṁ bhūta°. — 5. C °nām evam sdā evaṁ° B °evam utpādā evaṁ bho° C °kritāh | .
6. C °vanti tvā pra°. — 7. BC niḥçaṁsayaṁ mahāviro a°. — 8. C yathā paṁtraçatā° B °patraçatā° C °nti tvā pra° BC °vaṁ ni°. — 9. BC niḥçaṁsayaṁ mahāviro(C °rah) adya° B °buddhaḥ bha°. — 10. C passe les lignes 10-13.
12. B niḥçaṁsayaṁ°. — 13. B niḥçaṁsayaṁ ° buddha bha°. — 14. C yathā mauraça°. — 15. B niḥçaṁsayaṁ° B °virah a° C °viro a°.
16. C yathā jivaṁjivaçatā°. — 17. BC niḥçaṁsayaṁ° C °viro adya°. — 18. C yathā pūrṇaçatā paṁ° C °nti tvā pra°. — 19. BC niḥçaṁsayaṁ°. — 20. B °thā kaṁcyaçatā° C °thā kaṁnyā ° nti tvā pra°.
21. BC niḥçaṁsayaṁ mahāvirah adya°. — 22. BC āmukhehi ca ji ° upagamo° C °buddhe ni° BC °shadya ca°.

उपागमे पुरिमबुद्धनिषेव्यां ।
स्वस्तिकवाचे स लोकप्रदीपः
उपाविशे महीरुहायसमीपे ॥

अथ खलु कालो नागराजो बोधिसत्वं सिंहासनगतमभिस्तवे ॥

यथा मृदूहि आम्रेडि संस्तरित्वान संस्तरं ।
यथा पर्यंकमाभुंजसि अद्य बुद्धो भविष्यसि ॥
यथा वागशता पंच करोन्ति त्वां प्रदक्षिणं ।
समीपे द्रुमराजस्य अद्य बुद्धो भविष्यसि ॥
त्वं पि नरवीर चरियां अद्य निषेवसि पूर्वं अनुचीर्णां ।
द्रक्ष्यसि त्वं शठसैन्यं नहुष सनागरथं सपदातं ॥
यथा द्वात्रिंशती काये महापुरुषलक्षणा ।
निःसंशयं मारसैन्यं प्रभंजित्वा विरोचसि ॥
अद्य त्वं [227b] आश्रयं चित्त क्लेशमदसूदन ।
ज्ञानेनोत्पादयित्वान बोधिं प्राप्य विमोक्ष्यसि ॥
अद्य ते सह धर्मेण प्रतिवक्ता न भेष्यति ।
इति कालो महानागः उरगाणां वरोत्तमः ।
हृष्टो प्रांजलिको आह अद्य बुद्धो भविष्यसि ॥

बोधिसत्वो कालं नागराजानं संरागेति ॥ एवमेतं महाकाल एवमेतं महानाग अद्याहं अनुत्तरां सम्यक्संबोधिमभिसंबुधिष्यं ॥

तं च कालमयचि द्विपदेन्द्रो
प्रीतिहर्षपरिबृंहितकायो ।

2. B svasti | kâlepa lo° C svastikâleya lo° dîpo u° BC °upariçu mahîru° C °sîpe ||. — 4. B °stavo ya°. — 5. C °mṛidubhi jâ° BC °tvâ namaskaritvâna(C °na maṁ)starañ ya°. 6. C °ni âbhuñjasi a° B °jasi || adya°. — 7. C °nti tvâ pra°. — 8. C çatadru° B sama-dru° BC °drumasya râ°. — 9. BC °naravîracaritâṁ nishe° BC °pûrvaṁ anu° C °anvîrṇaṁ | B °rṇṇâṁ dhakshasi°. — 10. B dhakshasi çatha° C drakshyasi çatha° BC °nyaṁ haya(C °hapa)râjarathaṁ sapa° B °taṁ ya°.
11. B °ti ye kâye° C °ti hi kâye ma° çaye nih° B °çaṁ nih°. — 12. B nihçaṁsayaṁ°. — 13. C °çravâ ci° BC °ttaṁ kleça° C °çamasudanaṁ | B °madaçûdanaṁ jñâ°. — 14. BC °nenotpâdayi° tvyati ||. — 15. BC °tivaktrâ na bhe°.
16. C °gah turagâ varo°. — 17. B hṛishṭâṁ prâñ°. — 18¹. B °satvaṁ kâlo nâgânaṁ saṁ° C °kâlo nâ° BC °saṁrâdhati°. — 18². C °buddhishyaṁ | . — 20. BC taṁ ca kâlo avaci dvipadendraṁ prî° C °rivṛihatikâye || B °vṛiṁhatikâyo ||.

वैहायसे तिष्ठसि अन्तरीक्षे
वेगप्रसन्नो मृगमण्डलीव ।
नमस्यमानो प्रांजलि वन्द्यमानो
तं वन्दनीयं इह त्वं नमस्यसि ॥
अहं वो ईश्वरो राजा विचेता सर्वप्राणिनां ।
सुखदुःखस्य विद्वांसो लोके पर्यायकोविदु ॥
याव ते यौवनं वीर आरोग्यं च महायश ।
भुंक्ष मानुष्यका कामां पितुर्निवेशने वस ॥
महीं रम्यां आवसेहि स्फीतां उदधिमण्डलां ।
महायज्ञानि यजमानो राज्यं कारेहि गौतम ॥
अश्वमेधं पुरुषमेधं पुण्डरीकं निरर्गडं ।
एतां यज्ञां यजित्वान होहिसि अमरो मम ॥
एतां [२२७ a] यज्ञा यजित्वान चार्यास्त्रिंशा महर्द्धिका ।
मोदन्ति कामकामा. . . . . . . . . . . . . . . . ॥
एवं त्वं हि मार्यं बुद्धि करोहि वचनं मम ।
मा आगामिके विहन्यासि हित्वा सांदृष्टिकं फलं ॥
इमां गाथां भणे मारो बोधिसत्त्वस्य सन्तिके ।
तथावादिनं च मारं बोधिसत्त्वो ह्यभाषत ॥
प्रमत्तबन्धु पापीमं कस्य अर्थे इहागतः ।
नैव त्वं ईश्वरो राजा न ब्रह्मा न प्रजापतिः ॥

1. BC °yasaṁ tiṣṭha ° lva(C °vaṁ) namas°. — 3. B namasyato prāṁ° C °jalaṁ vandanā ° syati | . — 5. B °vo īçva°.
6. BC sukhasya ca duḥkhasya vidvāñço(C °imāṁ so) lo° C °lokaparyyayako° BC °da yā°. — 7. B yāva te yau° C °vīram āro° BC °yaṁ bhuṁ°. — 8. BC °ja manu° C °shyakānāṁ° BC °pitur eva nive(C °vase)ne āvasehi(B °hi | ) ma°. — 9. BC °mahī ramyāṁ sphī° ... mu°. — 10. C °ni jajanā° B °yajyamā ° jyaṁ kārehi gautamaḥ | C °gautamaḥ | .
11. C açvamedhaṁ puṇḍarīkaṁ samyakeva(?) nira° B °rīkaṁ samyakrgo(?)m nira°. — 12. C etaṁ yajñā yaji° BC °hohaṁ amarā mam | (C °maṁ) e°. — 13. BC °tvāna trayā° striṁçā ma°. — 14. BC °māṁ | . — 15. B gataṁ tvaṁ hāṁ mā° C gatāhaṁ tvaṁ mā ° ma ma mā ā°.
16. BC °vihañnyā°. — 17. B °dhisatvasanti°. — 18. C tathātathāvā° BC °ditaṁ ma° C °māra bo ° tvo 'dhya°. — 19. BC °ttabandhu pāpīmaṁ(C °me) svena arthena (C °rtha ihā° C °gataḥ nai°. — 20. C naivaṁ tvaṁ i °pati |.

सच त्वमीश्वरो भव्या न मे याचेसि प्रांजलि ।
सुसमृद्धापि या जातिः हीनोत्कृष्टा च मध्यमा ।
तां नाहं अभिनन्दामि अनपेक्षो स्मि ते पि हि ॥
सुसमृद्धा पि ये कामा हीनउत्कृष्टमध्यमा ।
ते प्यहं नाभिनन्दामि अनपेक्षो स्मि ते पि हि ॥
ये पिमे पंच कामगुणा लोकस्य सुखसम्मता ।
ते प्यहं नाभिनन्दामि अनपेक्षो स्मि ते पि हि ॥
नागो यथा पाशं भित्त्वा दारयित्वा च बन्धना ।
गच्छति येनकामो च. . . . . . . . . . . . . . . ॥
छित्त्वा गृहबन्धनानि गंसामि अहं पुरं वरं ।
अहो धर्ममुदीरयेसुः हृष्टप्रमुदिता जने ॥

पुनर्मारो येन बोधिसत्त्वस्तेनोपसंक्रमित्वा उपरिवैहायसं अन्तरीक्षे अस्थासि । बोधिसत्त्वो तं आह । कस्त्वं । मारो आह ॥

अहमीश्वरो मदकरो नरमानुषाणां
महां सुरासुरवरो विषयानुवासी ।
संसारपंजरगता मदनाभिभूता
कामातुरा मुच्चन्ति मृत्युपाशा ॥
तं वाचया मधुरया परमार्थदर्शी
मारं ब्रवीत महिमण्डगतो महर्षि ।
आकल्पकोटि कुशलोपसमन्वितस्य

1. BC °jalim̃ | . — 2. C °ddhâpi yâm̃ jâ° na utkṛishṭamadhyamâḥ | B °tkṛishṭaç ca ma°. — 3. BC na câham abhi° B °mi napekshemim̃ pi te pi hi | C °pekshemim̃ te pi hi | nâgo°. C *donne ces vers dans l'ordre suivant* : 3, 8, 6, 7, 10; 4 *et* 5 *sont omis*. — 4. B °tkṛishṭhama°. — 5. B °pekshemim̃ te pi hi | .

6. C ye ca me °khasam̃matâḥ | . — 7. C tenâpya° BC °nâtinandâ° B °anupekshemim̃ te pi hi | C °anupemim̃ hi te pi hi | gaccha°. — 8. B °thâ pâtitvatâ dârayitvâ abandhatâ | gaccha° C °yathâ pâtitatvâ dârayitvâ ca bandhanâḥ | ye ca me°. — 9. BC gacchati yena kâma evam chi(C °kâmenam̃ evam̃ cchi)tvâ gṛi°. — 10. BC cchitvâ gṛi° BC °nâni | gam̃° B °punavaram̃ aho° C °punar varam̃ aho°.

11. C °dharma u° dihna labhe | . — 13[1]. BC °ha ka°. — 14. B °çvaro makaro maru° BC °nâm̃ mahyam̃ surâ° °shayam̃ surâd sam̃°.

16. B °sârapam̃jaragata manabhi° C °gatâ manobhibhûtâḥ | kâmâmtulâ mucyantu mṛi° B °bhûtâ | kâmâturâ mucyata mṛi° BC °pâçam̃ tam̃ vâ°. — 18. BC °rṣi | mâ° mârâm̃ mahi(C °hi)maṇḍa° °rshi yam̃ kalpa°. — 20. BC yam̃ kalpa° °tasya | vaca° °vasya ca°.

वचनं मरर्षभकृतं नरपुंगवस्य ॥
चित्तशूरो सि यदि तवेश्वरत्वं
कामेश्वरो सि यदि चात्मनीश्वरो सि ।
कामातुरा हि स्त्रीणां मनुजेन्द्रगर्भे
पंक्ति पतन्ति मणिरत्नविनद्धचूडा ॥
तेषान्तथा निपतितान महीश्वराणां
पृष्ठे पतन्ति पुरुषाण स्त्रियो जनन्यः ।
ते कामरागमदवेगयुता हसन्ति
तस्मिं यथार्थि प्रमदा यमदासभूता ॥
सो दासतामुपगतो प्रमदाजनस्य
ऐश्वर्यतां वदसि पश्य यथासि मूढो ।
कामातुरस्य हि न विद्यति ईश्वरत्वं
नाभू न चापि भविता इति निश्चितं मे ॥
सो हं तवाद्य सबलं युधि निर्जिनित्वा
अरुणोदये प्रतिभाते भविताष्मि बुद्धो ।
सिंहासनमनुगतो हि न कश्चि कृष्ण
उत्तिष्ठते परमदे[228b]शगतो अबुद्धो ॥

मारो आह ॥

किं गर्जसे द्रुमवरस्य सुखं निषण्णो
न हि ताव पश्यसिह योधसहस्रमानिं ।
सेनां पिशाचवज्रराक्षसयक्षसंघां

2. BC °çûramim yadi asti tvam (C °i)çvaratvam | kâme° C °vyaktaṁm ugtva° B °niç-varâsi kâ°. — 4. BC °ndragatâ pum° C °niratnam°ri°.

6. BC °titâni mahî ° shâna stri°. — 8. B °kâmarâmoda° C °kâmarâga(?)dava° BC °tasmim kahuṇe pra°. — 10. BC so dâsyatâm upagato pramadâ yanamu dâsa(C °saçra) bhûtâ so dâsa(C °ta | sa dâsya)tâm upagatâ(C °to) pramadâ janasya ‖ ai° C °thâyathâsi mûhâ kâmâtu° B °thâsi mûdyâ kâmâtu°.

12. C °sya hina vi ° tvam ‖ nâbhûm na câ° B °tvam ‖ nâbhûḥ na cāpi bhanitâ i ° çcitâ mm so° C °nipcayâ me so°. — 14. B °nijmitvâ° BC °pratibhate bhavitâsma bu°.

16. B °sanâm anu° C °sanâm anugahi na kaçci kṛishṇaḥ u°. — 19. C °varumim sukham nisharṇṇo na hina tâvat paçya siṁhayam ndya saha° B °nisharṇṇe na hitâ ca paçya siṁha yodyamâu°.

21. C °çâçra cá° BC °yakshasamghaḥ catu° B °giniseṇâm mudi° C °nîm ca senâm mudi° BC °ditâ bahumantramantri(C °ntramantrâm) ‖ .

चतुरंगिनीं मुदितां बहुमस्तयन्तां ॥

बोधिसत्त्व आह ॥

यदि मारकोटिनयुतानि समागमेंसु
कुशलौघसंचयसंचितनरर्षभस्य ।
रोमं न इंजेय कुतो तुवं कृष्णबन्धु
प्रतिगच्छ किं विलपेसि निरर्थकेन ॥

मारो बोधिसत्त्वेन क्षिप्तो स्वकं भवनं गत्वा परिवारस्य आचिक्षति ॥ एषो मारिष बोधिसत्त्वो बोधिमण्डे निषण्णो अनुत्तरां सम्यक्संबोधिमभिसंबोधितुकामो । सो खानातो च्यावयितव्यः मा मम विषयातो बहुजनकायमतिक्रामयिष्यति ॥ तत्र दानि जनीसुतो नाम पुत्रो आह ॥ तात मा से अन्तरायं करोहि अनुत्तराये सम्यक्संबोधये अभिसंबुध्यतु । यादृशं मे अधिगतं गर्भावक्रमणं च जातिं च अभिनिष्क्रमणं च यथा च बोधिमण्डे उपसंक्रम्य निषण्णो ध्रुवं अनुत्तरां सम्यक्संबोधिं अभिसंबुध्यिष्यति । नास्ति सो सत्त्वो वा सत्त्वकायो वा बोधिसत्त्वस्य समर्थो अनुत्तराये सम्यक्संबोधये अन्तरायं कर्तुं ॥

निषण्णो सिंहो यथ दुष्प्रधर्षो
बीमासयित्व दिशां द्रुमूले ।
न चैतदस्माकं कदाचि रोचति
यं एवरूपं अभिनाक्रमेसि ॥
शीलेन च क्षान्तिये तपेन चैव
उपेतो सर्वपरमां गतिं गतो ।

1. C *tvam āha ||. — 2. B yadi* BC *yutāni samāgamsuh || ku* C *ghanasañcayasañci* BC *citasya nara*. — 5. B rāmaṃ na ichheye ka* C *iccheya ku* BC *to tava kṛ* C *bandhuḥ pra* *vilapitena nirartha* B *vilapaśitena nirartha*.
7¹. C māro ca bo*. — 7². B *risho bo* BC *nishaṇṇo anu* C *bhimañbodhitukāmaḥ so sthā* B *mo so sthā*. — 9. B *to || cyāvayitavyaḥ māṃ mama vi* C *tavyaṃ | māṃ mama vi* yam abhinishkramishyati | B *yam abhikrā*. — 10¹. C *janasuto nā* B *janaṃ suto nā*. — 10². BC *rohi | anu* C *rāyaṃ samyaksaṃbodhaye n* B *dhaye anantarāyaṃ kartuṃ (l. 15)*.
11. C *yadi me abhigarbhopakramaṇaṃ jātiṃ ca a* *sharṣan | a*. — 13. BC *dhaye anantarāya kartuṃ ||. — 15. BC nishaṇṇa siṃha (C *hā) ya* B *dhasha a* C *dharshyo a*.
17. B *kadā rūn* C *dācid rocati* BC *ya svarūpaṃ yadiṃ parākrame*. — 19. BC cile ca kshāntiye ka* C *kshāntiṃ ye* B *tapena caite upetā sa* C *caito upetā sa* B *tiṃ gatoḥ |.

यथा अयं देव असंप्रतीतो
मतिं अयुक्तां कुरुते जनीसुतः ॥

ततो मारो महासंनाहं संनहित्वा आगतो बोधिसत्त्वसमीपं ॥ बोधिसत्त्वेन च उक्कासितशब्देन भग्नो ॥ पुनः मारो महासंनाहं संनहित्वा बोधिमण्डे बोधिसत्त्वसमीपम्[229ᵃ]गतः महतीये चतुरंगिणीये सेनाये कुम्भाण्डयक्षराक्षसवतीये ॥ समन्ता विंशयोजनां स्फुरित्वा हयसहस्रयुक्तवाहनं अभिरुहि चित्रचापधरो सन्नद्धवर्मितो उच्छ्रितध्वजपताकः अनेकभेरीमृदंगमुरजपटहपणवशंखसंनिनादेन किलिकिलप्रक्ष्वेडितशब्दानि प्रमुंचमानाये भैरवाये विकृताये भूतगणसेनाये संपरिवृतो ॥ तद्यथा ॥ अन्ये अश्वमुखा अन्ये उष्ट्रमुखा अन्ये गर्दभमुखा अन्ये अजमुखा अन्ये मेण्ढमुखा अन्ये मृगमुखा अन्ये सिंहमुखा अन्ये व्याघ्रमुखा अन्ये द्वीपिमुखा अन्ये ऋक्षमुखा अन्ये श्वानमुखा अन्ये शूकरमुखा अन्ये बिडालमुखा अन्ये काकमुखा अन्ये कुक्कुटमुखा अन्ये गृध्रमुखा अन्ये कुररमुखा अन्ये अशीर्षका कबन्धा अन्ये एकशिरा अन्ये बहुशिरा अन्ये द्विशिरा अन्ये अचक्षुषो अन्ये एकचक्षुषो अन्ये बहुपादका अन्ये अपादका अन्ये अबाहुका अन्ये दशबाहुका अन्ये असिधरा अन्ये शक्तिधरा अन्ये तोमरधरा अन्ये भिण्डिपालधरा अन्ये शूलधरा अन्ये त्रिशूलधरा अन्ये हलधरा अन्ये चक्रधरा अन्ये मुशलधरा अन्ये मुद्गरधरा अन्ये परशुधरा अन्ये खड्गधरा अन्ये करंकधरा । अन्ये मुखतो ऽपि वमन्ति अन्ये सर्पा वमन्ति अन्ये पुरपर्वता चक्राणुपरि अन्तरीक्षे भ्रामयन्ति ॥ अन्ये पादेन हस्तिनागं गृह्य बोधिसत्त्वं अभि-

1. B yathāyaṁ° C °to asaṁpratīti ayu°. — 3¹. B °māro saṁnāha mahā saṁnahi° C °saṁha saṁnahitvā āga ho°. — 3². B °satvena ca u° C °sitaçabda° BC °bhagnoḥ ‖. — 4. C °re samā° BC °saṁha saṁna° C °palo mahatiṁ catu° B °hati catu° C °senāya ku ° rākshasa-saṁnipatiye B °rākshasaṁpatiye ‖. — 5. C °nāṁ sphari ° tvā anakaiḥ bha° B °anakaiḥ bha° C °paṭasaṁkha° BC °kilā prakshve °saṁcamānā(C °saṁnāna ‖ ) bhairavāyaṁ vikṛtāyaṁ bhū°.

9. C °anye açva ° nye gardabhamukhā anye jāmukhā anye maṇḍhamukhā anye mṛ° B °nye gadarbhamukhā anye ajāmukhā anye maṇḍhamukhā anye mṛ° C °nye mūṣika° BC °çvānamukhā anye çūkaramu(C °mukhā anye si° C °gṛdhramukhā anye kuluramukhā anye açirshakā anye kabandhakā anye ekaçirā anye dviçirā anye bahuçirā anye cakshushā anye cai° B °abandha anye ekaçirā anye bahuçirā anye acakshusho anye dviçirā anye ca° nye abāhukā anye aabāhukā ‖ anye açidharā anye çakti° C °daçabāhukā ‖ anye asidharā anye dhanudharāḥ anye çaktidha ° dharāḥ anye bhiṇḍipāradha ° dharāḥ anye tri ° dharāḥ anye hadharāḥ a ° nye muçala ° dharāḥ anye pa° B °dgaradharā ‖ anye pa° B °dgadharā anye karaṁkarā anye mukha° C °dgadharā anye kalaṁdharāḥ anye mukha°.

17. B °nye kutarapa° C °nye kularaparyantaç cakrāṁ upari° B °bhrāmanti ‖. — 18. BC °pādaṁ hasti°.

द्रवन्ति । अन्ये उष्ट्रं गृह्य अन्ये अश्वं गृह्य अन्ये गर्दभं गृह्य अन्ये कबन्धं गृह्य अन्ये करंकां गृह्य अन्ये आशीविषं गृह्य अन्ये सिंहां गृह्य अन्ये व्याघ्रां गृह्य अन्ये द्वीपी गृह्य अन्ये ऋक्षां गृह्य अन्ये गवयां गृह्य अन्ये महिषां गृह्य अन्ये शीर्षकरोटीं गृह्य अन्ये पर्वतकूटानि गृह्य अन्ये समूलानि वृक्षाणि गृह्य । अन्ये ज्वलन्तीषा च अंगारवर्षं पातयन्ति अन्ये आशीविषवर्षाणि पातेन्ति अन्ये उपलवर्षाणि पातेन्ति । अन्ये हस्तिषु अभिरूढा अन्ये अश्वेषु अन्ये उष्ट्रेषु अन्ये महिषेषु अन्ये गर्दभेषु अन्ये गवयेषु अन्ये मृगेषु अन्ये सूकरेषु अभिरूढा बोधिसत्वमभिद्रवन्ति ॥ नापि बोधिसत्वस्य रोमस्यापि इञ्जित[२२९$^b$]त्वं चित्तस्य वा अन्यथात्वं ॥

अथ स सगवयान्तरयो से बहुहयवारणयुक्तां सेनां ।
अभिनिर्मिणीयभियाति येन बोधिसत्वासनं श्रेष्ठं ॥
सो हयसहस्रयुक्तं वाहनमभिरुह्य चित्रचापधरो ।
वाचामुयामुदीरये हनथ हनथ गृह्णथ नं शीघ्रं ॥
कुंजरखराश्ववदना उष्ट्रमुखा मुसलपाणिनो रौद्रा ।
राक्षसगणा प्रतिभयं भ्रमन्ति यतो मो अरिनिघाती ॥
अपराणि कबन्धानि आशीविषकाणि वहन्ति मेदिन्यां ।
इमं हनथ इमं गृह्णथ रवन्ति आर्त्तस्वरं घोरं ॥
अपरे मुखतो सर्पानपि विषं च वमन्ति. . . . ।
पादेन गृह्य गजेन्द्रमभिद्रवन्ति पिशाचगणाः ॥

1. B anye drashṭuṁ gri * nye gadarbhaṁ gri * C *gardaraṁ gri * raṁkā gri * nye siṁhaṁ gri * nye vyāghraṁ gri * BC *dvîpiṁ gri * C *gavayāṁ grihyaṁ anye ma * nye çirshaṁ karoti gri * B *rshakaroṭiṁ gri * C *parvataçriṁgāni gri * BC *vṛikshāni grihya anye ata *. — 4. C *vikalāṁ ca aṁ * BC *aṁgāravarshā pātaya * C *sharavarshāṇi pātayanti | anye uparavarshāni pātayanti ||. — 5. C *hishesha a garda * B *sheshu anye gadarbhesha a * C *nye çūkare *.
7. BC *nyāpi iñjatatvaṁ ci * B *nyatatvaṁ corrigé en *thātvaṁ ||. — 9. BC atha sarvo saga * B *khe | ha * BC *hujanahaya * nāṁ abhi *. — 10. B *ṇīya abhiyāti ye * C *ṇīya abhiyāti | bodhi * sanā çreshṭaṁ se * B *tvāsanaçreshṭaṁ se *.
11. BC *dharo vā *. — 12. C vācam avugrā * dīraye natha ha * tha grihnatha çi * B *grihnatha grihnatha na çi * BC *ghraṁ kuṁ *. — 13. BC *kharāçvavada * B *danā drashṭumukhā * C *ṇinā rau * BC *drā rā *. — 14. BC *nti | ya * B *arinighātighāti apa * C *arinighāti apa *. — 15. BC *kāni ha(C *lā)ha * dinīyaṁ ||.
16. B imaṁ gri *. — 17. BC apare ca sarppān a * B *nti te jaṁ pā * C *nti | te jaṁ pā *. — 18. B pāde gri * C pādaṁ gri * bhidhavanti piçācagaṇā parva * B *bhravanti pi * ṇāḥ parva *.

निर्मेद्दि त्रैलोक्यं प्रविधुत च
नभं विमलं शास्तु विजयाम्यि ॥

देवपुत्रो देवलोकं गत्वा आह ॥

यो सो भावो सत्पुरुषोत्तमस्य
नैरंजनातीरमुपागतस्य ।
न शक्यं तद्वर्णयितेहि वक्तुं
प्रदेशमात्रं परिकीर्तयिष्ये ॥
दृष्टो मे जाम्बूनदकाञ्चनाभो
ह्योमप्रभो [illegible] ।
संप्रस्थितो एकचरो ह्यभूषि
नैरञ्जना याव च बोधिमण्डो ॥
सो ते क्रमां पद्मदलप्रकाशां
यथा यथा निक्षिपते महीयं ।
तथा तथा कम्पति साभिरामा
अनेकघोषाभिरता वसुन्धरा ॥
दृष्टा मे मारस्य चमू समागता
समन्ततो यक्षसहस्रकोट्यो ।
करोति त्रासं हृदयं प्रकम्पे
न सत्त्वसारस्य करोति इञ्जनां ॥
न चास्य भावं पृथिवीय च्छादयते
समन्ततो देवसहस्रकोटियो ।
घोषं उदीरयन्ति भविष्यते जिनो

1. B nabhe vailokye pāvidhūtaṁ na taṁ bhavimala çāstu vijaye ‖ C nabhe vailākyayāṁ vidhutāṁ nabhaṁ vimala çāstu vijayaṁ ‖. — 3. BC °putraṁ devalo°. — 4. BC °sambhayād(C °ni) satpu°.
6. C °deça mātraṁ°. — 8. B dṛishṭvo me jāmbunada° C dṛishṭvo ma jā° B °ñcanābhā°ye° BC °prabhā la° C °pavici°. — 10. B °ekaravo abhū° C °ekaravā abhū ° yāvaca bo° BC °dhimande ‖.
12. B °kṣipati ‖. — 14. B °abhiratā ase° BC °ghoshāṁ bhirata(C °tā) vasundharāṁ ‖.
16. B dṛishṭvā me° C dṛishṭvā me mārasya camu samāgatāḥ samn ° hasraiko° BC °kotiyo ‖ ° — 18. BC °mpe ye na satva° C °roti i° BC °ñjanā ‖. — 20. B °kotiyo gho°.
22. BC ghoshaṁ udī° B °diyanti bha ° no ‖ prabhṛ° BC °hṛishṭa satvā° C °yetaṁ ‖ B °yetaṁ dṛi°.

प्रहृष्टा वस्त्राणि च भ्रामयेन्सुः ॥
दृष्टा मे पंचशता जीवंजीवका
मयूरहंसा करविंककोकिला ।
संप्रक्षिणेनकरवा अभूषि
नैरंजना याव च बोधिमण्डं ॥
दृष्टो मे मार्गो अमरेहि निर्मितो
नैरंजना याव च बोधिमण्डं ।
धूपस्य च पुष्पस्य च माल्यस्य
विचित्रपुष्पो सुमनोज्ञगन्धो ॥
भग्ने मारे सर्वशो हततेजे
पूर्वे यामे परिशोधये चक्षुं ।
मध्यमे च यामे मारनिघाती
पूर्वेनिवासचरिता करेमि ॥
उद्गते च अरुणे वरबुद्धिं
[130b]यथाकां पुरिमबुद्धानुबुद्धां ।
बुद्धधर्मं वशिता प्रापुणेसि
लोकनाथो भवरागनिघाती ॥

रात्र्या पश्चिमे यामे अरुणोद्घाटसमये नन्दीमुखायां रजन्यां यत्किंचित्पुरुषेण सत्पुरुषेण महापुरुषेण पुरुषर्षभेण पुरुषद्रुमेन पुरुषवीरेण पुरुषनागेन पुरुषसिंहेन पुरुषनृपेण पुरुषपद्मेन पुरुषकुमुदेन पुरुषपुण्डरीकेन पुरुषपुंगवेन पुरुषाजानेयेन पुरुषधौरेयेण अनुत्तरेण पुरुषदम्यसारथिना विक्रान्तेन पराक्रान्तेन एकेन अप्र-

2. BC dṛishṭā me pañ° C °tā jīvañjīvakaṁ mayū° B °tā jīvajīvaka mayū° BC °kilā saṁ°. — 5. BC °ddhi ‖ nai ° nā yāvad bodhimaṇḍaṁ dṛi°.

6. C dṛishṭā me mā° B °janā vacca bo° C °yāvacca bo°. — 10. C bhagno māre sarvaṃ hata° B °māre sarvaro hata° BC °je purime pari° C °ṣiddhate cakshuṁ ‖.

12. BC madhyame yā° B °nirghāti pū° C °niryāti pū° BC °ritāni sma°. — 14. B ihare ca a° C ihate ca aruṇavara° BC °rabuddhiḥ yathākaṁ purimaṁ buddhānubuddhaṁ ‖.

16. BC °vaçitāni prāpuṇe lo ° ganirghāti ‖. — 18. BC °yat kiñcin purushena satpu° rishena purusharishabhena purushanripeṇa purushapadu(B °padaḿme° C °ṇḍarīkena purushakumudena purushapuṅgavena purushajāleṇa purushadhaureṇa anu° B °ṇḍarīkena purushapuṅgavena purushajāneyena purushadhaurayena ‖ anu ° tiena ‖ ikā° BC °pitā vya° B °tiena ‖ gali° C °prajñāsantena arthikena sarvatrajñātavyaṁ prāptavyaṁ abhisambodhavyaṁ sarvatram eka° B °ṇa sarvatra ṣajñātavyaṁ bo° ddhavyaṁ ‖ sarvatram eka° C °kshaṇasamyakayu° BC °anuttaraṁ sa(C °saṁ)myaksaṁbuddham abhi°.

मत्तेन आतापिना अपकृष्टेन प्रहितात्मेन विहरन्तेन गतिमता स्मृतिमता धृतिमता बुद्धिमता प्रज्ञावन्तेन आर्थिकेन आन्द्रिकेन सर्वशो सर्वत्र यज्ज्ञातव्यं बोद्धव्यं अभिसंबोद्धव्यं सर्वं तमेकचित्तक्षणसमायुक्तया प्रज्ञया अनुत्तरां सम्यक्संबोधिमभिसंबुद्धः । देवपुत्रा गन्धमाल्यं गृह्य स्थिता किन्तु खलु भगवतो चित्तं विमुक्तं ॥ भगवांस्तासां देवतानां चित्तेन चित्तमाज्ञाय ताये वेलाये तासां देवतानां इमं कांचाद्दिनं उदानं भाषति ॥ छित्वा तृष्णां विवृतानि रत्नं शुष्काश्रवाणि न स्रवन्ति छिन्नं वर्त्म न वर्तति । एषैव अन्तो दुःखस्य ॥

अथ नानावर्णा कुसुमौघा
निपतेन्सुः सुविविधगन्धा ।
देवपुत्रकरतलविमुक्ता
देवराजनिर्दशितेन्सुः ॥
यस्य वीर्यं गिरिसारसतुल्यं
यो सदा कुशलातितेव सिखीव ।
तस्य देवमनुजोपचितस्य
संवसन्ति कुसुय अमर्तिमस्य ॥
यदा हवे प्रादुर्भवन्ति धर्मा
आतापिनो ध्यायतो ब्राह्मणस्य ।
अथास्य कांक्षा व्यपयान्ति सर्वा
यदा प्रजानाति सहेतुधर्मा ॥

अयं अनुलोमो प्रतीत्यसमुत्पादः ॥

4. C °sthitāḥ | kiṁ tu khu°. — 5. C °gavān tatāsāṁ° BC °devatāṁ ci° Iāye tāsaṁ devatānaṁ i° C °kāñ ... ñ° B °kāñcaddanaṁ° BC °dānaṁ bhā°.

6. BC chitvā tri° jahesi rajaṁ° B °ohkāvalāni na [illegible] C °ohkāvalāni [illegible] edu° B °nnaṁ vatnaṁ na varṇati | C °na varṇamāti a°. — 7. C nānāvaṁ a° B °ra ... daḥ°. — 8. BC °kusumaughā° B °ghā te patetsuḥ || suvividhasugandhyā de° C °ghā ... tapatetsuḥ suciaenga°. — 10. B °kahāpetsuḥ | C °kahāpyetsuḥ |.

12. B °virya gi° C °viryya giriāgurasya stu° BC °khi ca tasya°. — 14. C °jamāni° BC °tha || apra° sya yadā°.

16. C °sti dharma a° B °dharmma ātāpino dhyayato brāhmaṇasya || . — 18. C adhi asya kāṁ ° passyanti sarvākāṅkṣayaṁ yadā° B °passati sarvāṁ yadā° BC °dā aprajānāti | sahetudharmā yaṁ a°. — 20. BC yaṁ anu° C °lomo pratītyasamutpādo pa° B °tpādo ||.

यदा इमे प्रादुर्भवन्ति धर्मा
आतापिनो ध्यायतो ब्राह्मणस्य ।
अथास्य कांक्षा व्यपनेन्ति सर्वा
क्षयं प्रत्ययानां अवैति ॥

अयं प्रतिलोमः प्रतीत्यसमुत्पादः ॥

मारेण पापीमता मायका निर्मिता भगवतो पर्यङ्कं भिन्दन्ति । सूर्येण उदेन्तेन सर्वे विलीना ॥

अथ खलु भगवान्ताये वेलाये इमं उदानमुदानये ॥

यदा इमे प्रादुर्भवन्ति धर्मा
आतापिनो ध्यायतो ब्राह्मणस्य ।
विधूपिता तिष्ठति मारसै[231a]न्या
सूर्येव ओभासितमन्तरीक्षं ॥

अथ खलु भगवान्प्रथमसंबोधिप्राप्तो ताये वेलाये इममुदानमुदानये ॥

सुखो विपाको पुण्यानां अभिप्रायश्च ऋध्यति ।
क्षिप्रं च परमां शान्तिं निर्वृतिं चाधिगच्छति ॥
पुरतो ये उपसर्गा देवता मारकायिका ।
अन्तरायं न शक्नोन्ति कृतपुण्यस्य कर्तुं वे ॥
ये भोन्ति अल्पपुण्यस्य विग्रहा ते न भवन्ति बलवन्तो ।
बलवां भोति समाधी संभारवतां सपुण्यवतां ॥
यदि यो च देवलोके अथ वा वशवर्तिनो मनुष्यो वा ।

1. C yathâ ime° B °dharma atâpinâ dhyâyato dhyâyatah brâ° C °dharma âgatâpino brâ° BC °sya a°. — 3. B arthâsya kâm° C arthasya kâkshe vâpanayanti° B °nti sarvâm ksha° BC °pratyânam(C °nâm) a° B °avaiti ‖. — 5. C °tiromah prati° °tpâde sa° B °dah sa°.

6¹. C °makâm ni° BC °rmito bha° °ndati ‖. — 6². B sûryena u° °ena vilîlâ ‖ C °udayantena sarvam vilînâ ‖. — 8. BC °m udânaye yadâ°. — 9. BC °nti ‖ dhâ° °pasya vi°.

11. B sûryopaiva obhâsani ‖ tam antarikshamâ atha° C °ryopaiva obhâsitâ antariksho atha°. — 13. BC °prathamam sambodhiprâptam ta° °mam udânaya(B °ye) sa°. — 14. B °yaç ca riddhyâti kshi° C °riddhyâti kshi°. — 15. B °mâm çâm nirvriti câ° C °vrtiti bidhiga°.

16. C °to me upa° BC °yikâ anta°. — 17. BC °knoti kri°. — 18. BC °te na bhonti punyavanto balavâm°. — 19. C balavâ bho° BC °bhonti samâdhim sam°. — 20. BC yadi yo ca de° B °nushye akri° C °nushye | akri°.

संबुधित्वा प्रवृत्ते वरधर्मचक्रे महापरिषां समुदानयित्वा राजगृहे विहरति शास्ता देवानां च मनुष्याणां च सत्कृतो गुरुकृतो मानितो पू[३३१ b]जितो ऽपचितो लाभाग्रयशोग्रप्राप्तो लाभी चीवरपिण्डपात्रशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां । तत्र च अनोपलिप्तः पद्ममिव जलेन पुण्यभागीयां सत्वां पुण्येहि निवेशयमानो फलभागीयां सत्वां फलेहि प्रतिष्ठापयमानो वासनाभागीयां सत्वां वासनायामवस्थापयमानो अमृतमनल्पकेन देवमनुष्यां संविभजन्तो प्राणकोटिशतसहस्राणां अमृतमनुप्रापयन्तो अनवराग्रजातिजरामरणसंसारकान्तारनरकादिदुर्गमहाप्रपातादभ्युद्धरित्वा क्षेमे शिवे समे स्वस्ति अभये निर्वाणे प्रतिष्ठापयमानो आवर्जयित्वा अङ्गमगधवज्जिमल्लकाशिकोशलकुरुपांचालचेतियवत्समत्स्यशूरसेनअश्वकअवन्तिदशदिशां । आणे दृष्टपराक्रमो स्वयंभू दिव्येहि विहारेहि विहरन्तो ब्राह्मेहि विहारेहि विहरन्तो आनिञ्जेहि विहारेहि विहरन्तो आर्येहि विहारेहि विहरन्तो शांतवेदि विहारेहि विहरन्तो बुद्धो बुद्धविहारेहि विहरन्तो जिनो जिनविहारेहि विहरन्तो ज्ञानको ज्ञानकविहारेहि विहरन्तो सर्वज्ञो सर्वज्ञविहारेहि विहरन्तो । चेतोवशिप्राप्तो पुनः बुद्धो भगवन्तो येहि येहि विहारेहि आकांक्षति तेहि तेहि विहारेहि विहरति ॥

एतं प्रकरणं भिक्षुभि श्रुतं यथा भगवतो बोधिमूले उत्कासनशब्देन मारः पापीमां सबलो सवाहनो भग्नो ॥ ते भिक्षू भगवन्तमाहन्सुः ॥ पश्य भगवन्नाश्चर्यं नरसिंहस्य मानक्रोधप्रमथिनः कथं च भगवतो उत्कासनमात्रेण मारो सबलायो निर्जितो । एकेनापि असहायेन मैत्रचित्तेन धीमता अनेकयक्षनयुता उत्कासनमात्रेण बलायो निर्जितो सिंहव्याघ्रतरक्षुद्वीपिवारणकुंजरा एकेन चन्द्रवक्त्रेण सब-

sara° BC °hâparishâ samu ° rati | çâstâ° C °jito apacâyito lâbhâ ° trasayanâçanagla° B °çayanâçanagla ° jyaparishkârânâm tatra°.

5. B °tehi pratishthâpayamâno amritam analpa° C °tehi pratishthâpayamâno vâsanâbhâgiyâm satvâm vâsanâyâm avasthâ° B °shyâm samvibhamjanto | prâna° BC °anuprâpento anavarâgra jâ° B °nirakrântâ ° rakavindur mahâprayâtâ° C °rakavidur mahâ ° cime same stha ° shthâpayamâne âvarjiyi° B °payamâno âvarjja ° dhavajrimalla° C °dhavajimalla° BC °çikauçala° C °cetivatsamçi° BC °çûlasenadiçadaçânâ(C °çâ ca) açvakâvanti | .

10. C °krame sva ° vyena vihârena viharanto brâ° B °vyena vihâ ° nimjahi vihâ ° ryehi vihârehi viharanto | sântye ° nto jino jinavihâ°.

14. BC °pâ na pu° B °buddhâ bha° C °kahati tehi vi° B °viharanti | .

16. BC evam pra ° çabde mâ ° gua te bhi°. — 17[1]. C °bhikshu bha ° hatamh | B °mahpaçya°. — 17[2]. C °garan âçca° BC °pramathinah° C °kkâsanamâtre° BC °na mâlo saha ° to a°. — 19. BC °pi sahâ° C °citrena dhi ° trena sabalâgro nirjito simghravyâghra° BC °tarakshuni dvi° C °rjitah mâre pâpimâm sabalo sâhanupâyana ye ca pâpâcâ° B °pâpamayâya(?) pâpâcâ° C °cramo u°.

